भितत्वेनाऽन्तरङ्गमपि समासं बाधित्वा प्रथममेव भवति। " बहिरङ्गोऽपि लुबन्तरङ्गान् विधीन् बाधते " इति न्यायात्, ततः प्रवृत्तोऽयमः समासे सति " ऋतोऽकाले " इत्यनेन क्त्वाप्रत्ययः। नन्वत्र " ऋतेम् पञ्चमस्य किदृति " अनेन दीर्घस्य परत्वेन, क्त्वाक्व- प्रसङ्गे प्रत्ययासिस्याद्यर्थादप्रास्यागम मा भूद् परा॰ ... कृत्वा - अन्तरङ्गत्वेन

यद्यप्यर्थं यदि चेति यदुच्यते ज्ञापयत्यन्तरङ्गाणां॰ ... ... ...

" यथा भवति बाधनम् " इत्यतो दीर्घत्वात् प्रथ॰

... ... ... ... ... ... ... ...

' नम् ' इत्यत्र " कर्मणि कृतः " इति षष्ठी प्राप्नोति। सा च " तृन्नुदन्ता " इत्यादिना निषिध्यते। ' श्रेयः ' इत्यत्र " प्रशस्यस्य श्रः " इत्यादश्रविधानबलात् क्रियाशब्दत्वेन ' गुणाङ्गाद्वे॰ " इति प्रत्ययस्यशब्दादीयस्। " नैकस्वरस्य " इति निषेधात् " अन्त्यस्वरादेः " इति नाऽन्त्यस्वरादेर्लुप्। " वर्णे वर्णस्य " इत्यपि न, अन्त्य- स्वरादेरनेकस्वरस्येत्येकग्रहणात्। ' शब्दानुशासनम् ' इत्यत्र कर्म " षष्ठि इति षष्ठीसमासः, " तृतीयायाम् " इति निषेधात् ? सत्यं, प्रत्यासत्तिन्यायेन यं कृत मपेक्ष्य षष्ठी, तमेव कृतमपेक्ष्य यदि तृतीया स्यात्तदा। ' आचार्यहेमचन्द्रेण ' इति तृतीयासद्भावात्, आश्चर्यो गवां दोहोऽगोपालकेन इतिवत् षष्ठीसमासनिषेधः स्यात्, अत्रतु ' प्रकाश्यते ' इत्यपेक्षया तृतीया, अनुशासन इत्यपेक्षया तु षष्ठी, इति न समासनिषेधः। आचर्यते सेव्यते जिनमार्गे क्रियाग्रहणार्थं वा शिष्यैरिति आचार्यः १। आचारे साधुरिति " तत्र साधौ " २। आचारान् पातीति ' कर्मणोऽण् " ३। आचारानाचष्टे, इति णिज् बहुलं नाम्नः कृगादिषु " इति णिचि, आचारयतीति " णिर्वेत्यास्य॰ इति निपात्यते ४। आचारान् गृह्णाति ग्राहयति वा " ध्यणोर्ध्यणः " इति साधुः ५। किमपि चिनोतीति किप्" १ किमः सर्वविभक्त्यन्ताच्चिनाविति वा २। किञ्चिदित्यसत्त्वमव्ययं वा ३।

अत्र-सर्वपापहरत्वात् व्याकरणस्य ' परमात्मानम् ' इत्यनेनाऽनिर्दिष्टनाम्ना सामान्येन देवताया निर्देशः कृतः। सर्वैरपि हि स्वकीया स्वकीया देवता परमात्मेत्यु-

---

१ ५-४-४ । २ ४-१-१० । ३ १-२-११४ । ४ २-१-८३ । ५ १-२-१ । ६ ७-४-१४ । ७ ७-३-१ । ८ ७-४-४४ । ९ ७-४-४३ । १० ७-१-१८ । ११ ३-१- । १२ २-१-८४ । १३ ५-१-१० । १४ ७-१-१५ । १५ ५-१-१०१ । १६ ३-८-८१ । १७ च ११४ । १८ ३-२-१५५ । १९ ७-१-१४ ।

च्यते। नमस्कार्यश्च स एव भवति, यस्य पूजातिशयवचनातिशयज्ञानातिशयापायापगमातिशयलक्षणमतिशयचतुष्टयं भवति। तत्र 'परमात्मानम्' इत्यनेन पूजातिशयः प्रकाशितः। अत एव "कर्म्मेहत्परमो०" इत्यनेन पूजायां समासः। तथा श्रेयांसश्च ते शब्दाश्च, ताननुशास्तीति "रम्येऽतिभ्यः०" इत्यनटि श्रेयःशब्दानुशासनः। तमेवंविधं परमात्मानमित्याशुशिष्यास्यपानाद् वचनातिशयः, स च न ज्ञानातिशयं विनेति, तेन ज्ञानातिशय आक्षिप्यते, सोऽपि च नाऽपायापगमातिशयं विनेति, तेनाऽप्यपायापगमातिशय आक्षिप्यते। अपायभूता हि रागादयस्तेषामपगमः स एवातिशयः। ईश्वरस्याऽपि हि सदा शिवावस्थायां रागाद्यपगमोऽस्त्येव। अन्यदेव सानां तु सुगम एव। तथा शब्दानुशासनमिति पदेन शब्दा व्युत्पाद्याः। इदं च व्याकरणं व्युत्पादकमिति व्युत्पाद्यव्युत्पादकलक्षणः सम्बन्ध उक्तः। तदन्तर्गतं च शिष्यस्य शब्दव्युत्पत्तिराचार्यस्य च शब्दव्युत्पादनं प्रयोजनं प्रतिपादितं, यत उक्तं—

"सिद्धार्थं सिद्धसम्बन्धं, श्रोतुं श्रोता प्रवर्त्तते।
शास्त्रादौ तेन वक्तव्यः, सम्बन्धः सप्रयोजनः॥ १॥" इति।

अभ्यस्यतरेण च शब्दानुशासनेन शिष्याचार्ययोः शब्दव्युत्पत्तिव्युत्पादनलक्षणे प्रयोजने नोपपद्येत, इत्याह श्रेयः प्रशस्यतरं। ननु पूर्वप्रणीत—

"ब्राह्ममैशानमैन्द्रं च, प्राजापत्यं बृहस्पतिम्।
त्वाष्ट्रमा पिशलं चेति, पाणिनीयमथाऽष्टमम्॥ १॥"

इत्यादि शब्दानुशासनजातमस्ति तस्माच्च कथमिदं प्रशस्यतरमिति? उच्यते, तद्धि अतिविस्तीर्णं विप्रकीर्णं च कातन्त्रं तर्हि साधु भविष्यतीति चेत्र तस्य संकीर्णत्वात्, इदं तु सिद्धहेमचन्द्राभिधानं शब्दानुशासनं नाऽतिविस्तीर्णं, न विप्रकीर्णं, न च संकीर्णमिति। अनेनैव शब्दव्युत्पत्तिर्भवतीति, इति मौलोऽर्थः प्रतीत एव। न च गुरुशिष्ययोः सावधानतामन्तरेण शब्दव्युत्पादनव्युत्पत्ती सम्भवत इति पूर्वार्धमावृत्त्याऽपि व्याख्यायते। परं आत्मानं च प्रणम्य महीकृत्य सावधानीकृत्येति योगः। किं विशिष्टं परं? श्रेयःशब्दाननुशासयतीति श्रेयःशब्दानुशासनस्तं, किं विशिष्ट चाऽऽत्मानम्? श्रेयःशब्दाननुशास्ति श्रेयःशब्दानुशासनस्तं, उभयत्र "रम्येऽतिभ्यः" इत्यनट्। इति श्लोकपूर्वार्द्धव्याख्या॥ उत्तरार्द्धेन तु स्वकीयनाम मङ्गल्यमन्तरेण च सिद्धहेमचन्द्राभिधानस्वोपज्ञशब्दानुशासनटीकां नाम च ग्रन्थकारः प्राचकटत्। स्वोपज्ञशब्दानुशासनस्य 'तत्त्वप्रकाशिका' टीका मया विरच्यत इत्यर्थः। इह हि

१ ३-१-१ ७। २ ५-३-१२६। ३ आचार्यैरिमक्रमेण स्मृता विविधा प्रकारस्तद इति रूपवर्णं ॥

" अकारेणोच्यते विष्णुः, रेफे ब्रह्मा व्यवस्थितः ।
हकारेण हरः प्रोक्त-स्तदन्तेऽर्हं परमं पदम् ॥ १ ॥

इतिश्लोकेनार्हंशब्दस्य विष्णुप्रभृतिदेवतात्रयाभिधायित्वेन लौकिकागमेष्वपि ' अर्हम् ' इतिपदस्योपनिपन्नत्वमेवेति । अत्र ओंतदन्त इति तुर्यपादस्यायमर्थः, तस्या र्हंशब्दस्यान्ते उपरितनभागे परमं पदं सिद्धिशिलारूपः तदाकारत्वादनुनासिकरूपा कलाऽपि परमं पदमित्युक्तम् । ' अशेषविघ्न० ' इत्यादि, विहन्यन्ते कार्याण्येभि- रिति विघ्नाः । नियमेन हन्यते बाध्यते पारतन्त्र्येणेति निघ्नं, उभयत्राऽपि " स्थाविभ्यः " क इति । ' दृष्टादृष्ट० ' इत्यादि दृष्टं राज्यादि, अदृष्टं स्वर्गादि । सङ्कल्प इच्छास्यादर्नं । ' आशास्य० ' इत्यादि, आशास्य आ ' अभिव्याप्य शासनं, अध्ययनं चाऽध्यापनं चाऽध्ययनाध्यापने ते समयौ यस्य तथेति क्रियाविशेषणं ।

' प्रणिधानं च ' चतुर्धा, पदस्थं पिण्डस्थं रूपस्थं रूपातीतं चेति । पदस्थमर्ह- मितिपदस्थस्य, पिण्डस्थं शरीरस्थस्य, रूपस्थं प्रतिमारूपस्य, रूपातीतं योगिगम्य स्यार्हतोध्यानमिति । एतयोः द्वे शास्त्रारम्भे सम्भवतो नोत्तरे द्वे । ' अनेनाऽ- त्मनः सर्वतःसम्भेदः ' इत्युक्तंपदस्थम्, सम्भेदो वेष्टनं अत्र सप्तमी प्राप्नोति तत्र प्रणिधानं ध्यानमित्यर्थः । तत्कथं सामानाधिकरण्य ? सत्यं, ध्यानं विषयि सम्भेदस्तु विषय इति तयोरभेदोपचारात्सामानाधिकरण्यं, ' तदभिधेयेन चाऽभेदः ' इति पिण्डस्थमुक्तम्; तदभिधेयेनार्हताऽऽत्मनोऽभेदः । य एवार्हं स एवार्हमिति य एव चार्हन् स एवाऽहमिति । ' वयमपि च० ' इत्यादि, अत्र विशिष्टप्रणिधेयप्र- णिधानादिगुणप्रकर्षादात्मन्युत्कर्षाधानाद्गुणपुष्टत्वेनाऽऽत्मनोऽपि तदभिन्नतया बहुत्वा- द्वयमिति बहुवचननिर्देशः । ' सात्त्विक० ' इति, तत्त्वमेव " विनयादिभ्यः " इति इकण्, तस्य प्रयोजन मस्येति वा १-१-१ ॥

' सिद्धिः स्याद्वादात् ' १-१-२ ॥ इत्यत्र गम्ययप इति पञ्चमी स्याद्वादमाश्रि- त्येत्यर्थः । इह हि—" संज्ञा च परिभाषा च, विधिर्नियम एव च ।
प्रतिषेधो विकारश्च, विकल्पश्च समुच्चयः ॥ १ ॥
अतिदेशोऽनुवादश्च, दशधा सूत्रलक्षणम् । "

इति दशधा सूत्राणि भवन्ति, तानि च " औदन्ताः स्वराः " इति १ । " प्रत्ययः प्रकृत्यादेः " इति २ । ' नाम्यन्तस्थाकवर्गात् " इति ३ । " धर्मे सिद्धम्यजने "

१ अभिधानचिन्तामणिकर्तृश्रीहेमचन्द्रसूरीश्वरविरचितश्रीमहादेवस्तोत्रे श्लो १९ । २ सिद्धे सिद्धे च । ३ ५-१-८१ । ४ ७-२-११६ । ५ १-१-४ । ६ ७-४-११५ । ७ २-२-१९ । ८ १-१-२१ ।

इति ४ । "नस्तं मत्वर्थे" इति ५ । "पुंसि" इति ६ । "स्त्री नैवेती" इति ७ । "सलोऽर्था" इति ८ । 'इविशो वो" इति ९ । "तयोः समूहवच बहुषु" इति १० । आदीनि सूत्राणि क्रमेण ज्ञातव्यानि । एतेषां मध्य एव इधिकारस्य समाप्तास्यपरिसमाप्तेः ।

'स्यादित्यव्ययम्' इति यद्वा स्याद्रूपो वादः स्याद्वाद इति । "अन्यय प्रयुक्तादिभिः" इति समासः । तथा 'वाद' शब्देनोक्तस्याऽनेकान्तस्य द्योतके यदा तु स्यादित्याद्यावकत्वेन 'अनेकान्तद्योतकः' तदा स्यादित्येतस्य वादः 'स्याद्वादः' "कृति" इत्यनेन समासः । अमति गच्छति धर्मिणमिति 'दम्भेमि०' इति तेऽन्तो धमः, न एकोऽनेकः–अनेकोऽन्तो यस्याऽसाविति अनेकान्तः, तेषु तस्य वदनं याथात्म्येन कथनं वादः । स च स्वाभ्युपगतस्यैव भवतीत्याह–'मिथ्या-नित्या०' इति निर्भुवि भवं 'नेर्ध्रुवे' इति त्यचि नित्यं, नीयते कालान्तरेऽपि प्राप्यत इति वा नित्यं "त्यब्नेर्ध्रुवे" इति निपातनाद्भवपान्त्यापरिच्छिन्नसत्ताकं नित्यं तद्विपरीतमनित्यम् । आदीयतेऽर्योऽस्मादिति "उपसर्गादः किः" इति कौ आदिः–आदिशब्दात्सदसदात्मकत्वाभिलाप्यानभिलाप्यत्वगुणपर्यायग्रहः । सर्वं वस्तु द्रव्यरूपतया नित्यं पर्यायरूपतया त्वनित्यं, तथा सर्वं वस्तु स्वरूपेण सत् पररूपेणाऽसत् । तथा–गोत्वादि सर्वमपादि व्यक्त्यनुगतत्वेन सामान्यं तथा सामान्यापेक्षया तु विशेषः । इक्षुक्षीरादीनां माधुर्यं शब्दाभिधेयत्वेनाऽभिलाप्य, माधुर्यतारतम्यस्य वक्तुमशक्यत्वेनाऽनभिलाप्य । सह भाविनो धर्माः सामान्यादयोगुणा उच्यन्ते, क्रमभाविनस्तु नवपुराणादयः पर्यायाः । धरन्ति वस्तुनो धर्मिरूपतामिति 'धर्माः,' धाम्यति विविधैर्धर्मैर्युगपत्पतिपत्ति यातीति "धमिर्धेचा" इत्यत्र 'धावक' । एति गच्छत्येकत्वसंख्यामिति क एकः । वसन्ति धर्मा अस्मिन्निति "वसेर्णित्" इति तुनि 'वस्तु,' नित्यादिनाऽनेकधर्मेण शबलं यदेकं वस्तु तस्य 'अभ्युपगमः' । प्रमाणाविरुद्धोऽङ्गीकारस्तत एव शब्दानामनित्यत्ववादिमते सिद्धिर्निष्पत्तिः, नित्यत्ववादिमते तु ज्ञप्तिर्भवति ।

नाऽन्यथेत्यत आह–'एकस्यैवहि०' इत्यादि । नहि यथा इत्यादौ ह्रस्वो, दण्डाग्रम् इत्यादौ दीर्घो, देवदत्त ३ अत्र त्वमसि इत्यादौ प्लुतः । वर्णानां च सर्वथा नित्यत्वे पूर्वधर्मनिवृत्तिरूपस्य 'ह्रस्वादिविधिः' असम्भवः । सर्वथाऽनित्यत्वे तस्य

---

१ १-१-११ । २ १-४-६ । ३ १-१-१ । ४ १-४-४१ । ५ -४-१ । ६ ७-१-१ । ७ ६-१-४ । ८ १-१- । ९ उ २ । १ ६-१-१७ । ११ उ ११४ । १२ ५-१-४ । १३ उ. ४ । १४ उ. ४ ।

स्यनन्तरमेव विनाशात्कस्य 'ह्रस्वादिविधिः'। तस्मादर्थरूपतया नित्या वर्णा ह्रस्वादिरूपतया त्वनित्या इति ह्रस्वादिविधिरुपपद्यते । 'अनेककारक०' इति शब्दानां हि स्वपराश्रयसमवेतक्रियानिर्वर्तक सामर्थ्यं कारकं, तच्च कदाचिदनेकप्रकारमेकस्याऽपि लभ्यते, यथा पीयमानं मधु मदयति, इमामारुह्य ततः फलान्यवचिनोति, विषयेभ्यो ऽविभ्यदनात्मज्ञस्तेभ्य एवाऽऽत्मानं प्रयच्छन् तैरेव बन्धमाप्नोतीत्यादि । तच्चैकस्य सर्वथा नित्यस्य एकरूपत्वादविस्पष्टरूपान्तरानुपपत्तेर्न घटते, सर्वथाऽनित्यत्वेऽपि न घटते, तथाहि—स्वातन्त्र्यं कर्तृत्वं, तच्चेदं फलम्, इयं क्रिया, इदं करणम्, अयं क्रमः, अयं व्ययः, इदमनुषङ्गजं फलम्, इयं मम दशा, अयं मम सहायः, अयं विपक्षः, इमौ च मम प्रयतमानस्य देशकालौ इति विमृशन् प्रेक्षापूर्वकारी प्रयतते । इत्येवं परिदृष्टं सामर्थ्यं कारकप्रयोक्तृत्वलक्षणं, तदपि नाऽनित्यस्य क्षणमात्रावस्थायित्वेन जन्मानन्तरमेव विनष्टस्य युज्यते, किं पुनः—'कारकसंनिपातः'?[1] इति नित्यानित्यात्मकः स्याद्वादोऽङ्गीकर्तव्यः । तथा तमन्तरेण भिन्नप्रवृत्तिनिमित्तयोः शब्दयोरेकस्मिन्नर्थे वृत्तिः 'सामानाधिकरण्यम्' इति लक्षणं सामानाधिकरण्यं न घटते, तयोर्हि भेदे घटपटयोरिव नैकत्र वृत्तिः स्यात्, नाप्यत्यन्ताभेदे भेदनिबन्धनत्वात् तस्य नहि भवति नीलं नीलमिति, किञ्च नीलशब्दादेव तदर्थप्रतिपत्तावुत्पलशब्दानर्थक्यप्रसङ्गः । तथा 'विशेषणविशेष्ययोः' परस्परमत्यन्तभेदे घटपटयोरिव न विशेषणविशेष्यभावः स्यात्, अत्यन्ताभेदेऽपि स न स्यात्, नहि भवति घटो घट इति विशेषणविशेष्यभावो द्वयनिबन्धनत्वात्तस्य, तथासत्युत्कृष्टः कृष्टश्च इत्यादिष्वेकस्यैव विवक्षावशाद्विशेषणस्य विशेष्यत्वं च भवति ततः कथञ्चिद्भेदः कथञ्चिदभेदः, कथञ्चिद्विशेषणत्वं कथञ्चिद्विशेष्यत्वं चेत्यादिरूपः स्याद्वादोऽङ्गीकर्तव्यः, 'आदि' शब्दात् स्थान्यादेशप्रकृतिविकारनिमित्तनिमित्तिभावादिपरिग्रहः । किञ्च—शब्दानुशासनमिदं शब्दं प्रति विप्रतिपद्यते । नित्य इत्येके, अनित्य इत्यन्ये, नित्यानित्य इत्यपरे । अत्र नित्यत्वानित्यत्वयोरेकतरपक्षपरिग्रहे शब्दानुशासनस्य सर्वोपादेयत्वं न स्यादित्याह 'सर्वपार्षदत्वाच्चेति,' "पृणातीति"[2] 'पृः सद्' इति पर्षद्, तत्र साधुः 'पर्षदोर्ण्यणौ'[3] इति ण्ये पार्षद, पार्षदत्वेन च साधारणत्वं लक्ष्यते, तेन सर्वेषां पार्षदं सर्वपार्षदं सर्वसाधारणमित्यर्थः । कथ्यते तत्त्वमेकदेशेनेभिरिति दर्शनानि नयाः, समस्तानां तेषां यः समुदायस्तदात्मकस्य स्याद्वादस्याऽभ्युपगमो नितरां निर्दोष इत्यर्थः । अतिरमणीयमिति—रमेर्णिजन्तात् "भवेचनी यावः" इत्यनीयः ।

---

१ अनेककारकसंनिपात. इति ॥ २ पृषः पर्षत्सूत्रमो । ३ ब ४३७ । ४ ७-१-१८ । ५ ५-१-८ ।

‘अन्योन्यपक्ष०’ इति–साध्यधर्मवैशिष्ट्येन, पच्यते व्यक्तीक्रियते हेत्वादिभिरिति “ धर्मोधर्मि० ” इति से पक्षः साध्यधर्मविशिष्टो धर्मी, शब्दोऽनित्य एवेत्यादि, प्रतिकूलः पक्षः प्रतिपक्षः, अन्योन्यं पक्षप्रतिपक्षास्तेषां भावः, परस्परविरुद्धधर्मोपन्यासस्तस्मात् यथा मत्सराः–सातिशयो विद्यते येषामतिशायने ‘ईनि” इति मत्सरिणः प्रकर्षेणोपपत्तिप्रतिपाद्यते स्वाभ्युपगतोऽर्थ एभिरिति “ व्यञ्जनाद् घञ् ” इति घञि प्रवादाः शास्त्रदर्शनानि, यथा ते परस्परविरोधान्मत्सरिणः सन्तः पक्षपातिनो, न तथा मत्सरी सन् त्वत्समयः पक्षपातीति प्रक्रममेदाभाव न पक्षपातीति न विरोधी । सम्यगेति गच्छत्यर्थमिति समयः सङ्केतो, यद्वा सम्यगयन्ति गच्छन्ति जीवादयः पदार्थाः स्वरूपप्रतिष्ठामस्मिन्निति समयः–सिद्धान्तः ‘ पुनाम्नि घः ”। अत्रार्थे विशेषणद्वारेण हेतुवैशिष्ट्यमिति निरवधारणा अभिप्रायविशेषाः, सावधारणास्तु दुर्नयाः; समस्तधर्मदर्शकं तु प्रमाणमेव–ते च नैगम १–संग्रह २–व्यवहार ३–ऋजुसूत्र४–शब्द ५–समभिरूढ ६–एवम्भूता ७ इति सप्त, अविशेषं समत्वेन मन्यमानः । ‘ नयास्तव० ’ इति—त्वदीयस्यात्पदचिह्निताः । अभिप्रेतं फलन्ति “लिहादिभ्यः” इति अभिप्रेतं फलं येभ्य इति वा अभिप्रेतफला भवन्ति, रसेन पारदेनोपविद्धा मिश्रिता लोहधातव इव सुवर्णादिधातव इव । यत्तत्प्रसादात् सम्यग्ज्ञानदर्शनचारित्रात्मकमोक्षमार्गस्य समीपं याताः । आराद्दूरं सर्वपापेभ्यो याता इति वा ‘ क्विप् ” इति ट, “ पृषोदरादयः ” इति साधुत्वात् । आर्या–गौतमादयः, प्रणता इति प्रभन्तुमारभ्य यतो हितैषिणस्ते ॥

अथ व्याख्यानान्तरेणाऽभिधेयप्रयोजनाभिधानायाऽऽ–अथवा इति, विविक्तानामसाधुत्वविप्रमुक्तानां शब्दानां प्रयोगावगमज्ञानं, तद्द्वारेण च परमपदं भवेत्, यत उक्तं—

“ द्वे एव ब्रह्मणी ज्ञेये, परं चाऽपरमेव च ।
शब्दब्रह्मणि निष्णातः, परं ब्रह्माऽधिगच्छति ॥ १ ॥ ”

इति । शब्दब्रह्म शब्दतत्त्वं तच्च शब्दानुशासनादेव प्राप्यते, अत्र च शब्दा अभिधेयाः, सम्यग्ज्ञानमनन्तरं प्रयोजनं, परम्परं तु परमपदप्राप्तिरिति ।

---

१ धर्मिधर्मसमुदायात्मकप्रमाणाभिमतस्य [illegible] । २ ३ ५६ । ३ मत्वरः । ४ ७–२–४ । ५ ५–२–११९ । ६ ५–२–११ । ७ लुडिधापेऽप्याह– [illegible] इति एकोक्तिरिव [illegible] । [illegible] द्वितीयश्च ॥ १ ॥ इति [illegible] । ८ ५–१–१०१ । ९ ३–३–११९ ।

यतः शब्दानुशासनात्पदसिद्धिरर्थनिर्णयः तस्मात् तत्त्वज्ञानं तस्माच्च परं श्रेयः । सम्बन्धस्त्वभिधेय-प्रयोजनयोः साध्यसाधनभावः । शब्दानुशासनाभिधेययोस्त्व भिधानाभिधेयभावः, स च तयोरेवाऽन्तर्भूतत्वात्पृथक् न दर्शित इति ॥ १-१-२ ॥

' लोकात् ' । १-१-३ ॥ लोकान् आलोक्यते सर्वभावाननन्तज्ञानोऽस्मिन्निति " व्यञ्जनाद् घञ् " इति घञि, आलोक्यते तत्त्वनिश्चया येति " भावाकर्त्रोः " इति घञि, लोक्यते सर्वपदार्थान् इति " अच् " वाऽपि लोकः तस्माद् " गम्य यपः कर्माधारे " इति पञ्चमी । ' उक्तातिरिक्तानाम् ' इत्यादि–उक्तेभ्योऽतिरिक्ता उक्तातिरिक्ता अधिकास्तासां पूर्वापरीभूतावयवाक्रिया, विशेषणं–गुणः । "सत्त्वे निविशतेऽपैति, पृथग्जातिषु दृश्यते । आधेयश्चाऽक्रियाजश्च, सोऽसत्त्वप्रकृतिर्गुणः ॥ १ ॥ " इति वा विशेष्य-द्रव्यम् । " आकृतिग्रहणाज्जाति-र्लिङ्गानां च न सर्वभाक् । सकृदाख्यातनिर्ग्राह्या, गोत्रं च चरणैः सह ॥ १ ॥ " इति जातिः । भूत्यादिलक्षणः–कालः । अयमियमिदमिति यतस्तत्पुंस्त्वीनपुंसकरूप लिङ्गम् । " अविकारोऽद्रवं मूर्तं, प्राणिस्थं स्वाङ्गमुच्यते । च्युतं च प्राणिनस्तच्च–भिन्नं च प्रतिमादिषु ॥ १ ॥ " इति स्वाङ्गम् । एकाद्यभिधानप्रत्ययहेतुः संख्या । " ऊर्ध्वमानं किलोन्मानं, परिमाणं तु सर्वतः । आयामस्तु प्रमाणं स्यात्, संख्या बाह्या तु सर्वतः ॥ १ ॥ " इति परिमाणम् । अपत्यं पुत्रपौत्रादि । क्रिया-गुणद्रव्यैर्युगपत्प्रयोक्तुर्व्याप्तुमिच्छा वीप्सा । अदर्शनं लुप् । अवाद्यभेदोऽकारादि समुदायोऽवर्णः । आदिशब्दादिवर्णादिपरिग्रहः ॥ तथा संवृतस्याऽप्यकारस्य स्वसंज्ञा प्रसिद्ध्यर्थं विवृतत्वमपीति वैयाकरणाः । तथा संयोगविभागयोरनपेक्ष्य कारणं कर्म–उत्क्षेपणापक्षेपणाकुञ्चनप्रसारणगमनरूपं सा क्रिया, द्रव्याश्रयी गुणो, गुणाश्रयो द्रव्यं, अनुवृत्तप्रत्ययहेतुः–सामान्यं जातिः, परापरादि–प्रत्ययहेतुः कालः, अनुमानं लिङ्गं, स्वाङ्गारम्भकमवयवरूपं स्वाङ्गं, अणुमहदादिप्रत्ययहेतुः परिमाणमिति प्रामाणिकाः । अत्राऽऽदिशब्दाज्ज्योतिषिकच्छन्दसादिपरिग्रहः ।

' परान्नित्यम् ' इति यथादि–धनानीत्यादौ " दीर्घोऽवा० " इति दीर्घं बाधित्वा परत्वात् "नपुंसकस्य शिः" इत्येव भवति, तस्मान्नित्य बलीयः–यथा स्योन इत्यत्र परमपि गुणं बाधित्वा नित्यत्वादूट् । तथा नित्यादन्तरङ्गं यथाऽक्षौहिणी कृते नित्यमपि गुणं बाधित्वाऽन्याभिवत्वेनाऽन्तरङ्गत्वादय, तथाऽन्तरङ्गादनवकाशं यथा—भग

१ ५-१-११९ । २ ५-१-१८ । ३ ५-१-३१ । ४ १-१-७४ । ५ १-४-४१ । ६ १-४-५५ ।

स्यादस्त्यादीनि च, तेषां छात्रा “ ङोरीयः ” इत्यतो ‘ बहुष्वस्त्रियाम् ” इति यञि लुप्, “ न प्राग्जितीये० ” इति निषेधश्च प्राप्नुतः परमनवकाशत्वात् “ न प्राग्जितीये० ” इत्येव प्रवर्तते ततो गार्गीया इति सिद्धम्। तथा परादन्तरङ्गमपि यथा–स्योनः “ य्वोर्वाप्यपञ्चमान्त० ” इति नेऽपवादत्वाद्यलोपं बाधित्वा गुणात्पूर्वं नित्यत्वादूटि च कृते परत्वाद्गुणे प्राप्तेऽन्तरङ्गत्वाच्च बाधित्वा यत्वं भवति स्योनं इति।

एतासां क्रियादीनां नीयते संदिग्धोऽर्थः [ निर्णयपदम् ] प्रमितिरिति “ न्यायावाय्याध्यायोद्याव ” इति निपातनात्, न्यायाः—युक्तयः, तेषां च शास्त्रस्य, “ क्रियार्थोपपदस्य० ” “ गुणादस्त्रियां नवा ” ‘ आदितोऽम्मुच्चारैनेवा ” “ स्वार्थेऽरक्षयित० ” इति। ‘ संख्यानां र्णाम् ” ‘ परिमाणार्थैतद्विष ” इति, “ क्सोऽर्थे ” “ दीर्घाणां ” ‘ लुगस्यादेत्यपदे० “ अवर्णस्येवर्णो ” इति, “ इवर्णादेरस्वे स्वरे ” इत्यादिकस्य प्रवृत्तये सिद्धिर्वेदितव्या, ‘ वर्णसमाम्नायस्य च ’ सिद्धिः। सम्यगाम्नायन्तेऽभ्यस्यन्ते वर्णा अस्मादिति “ भावाकर्त्रोः ” इति घञि समाम्नायः, वर्णानां समाम्नायः पाठक्रमः, स च–अकारादिस्वराः १४। अं अः इत्यनुस्वारविसर्गौ २। अनुस्वारोपलक्षितोऽनुनासिको १। विसर्गोपलक्षितौ जिह्वामूलीयोपध्मानीयौ २। अल्पविषयत्वेन चैषामुपलक्षणं कृत न तु साक्षात्पाठः। कादिव्यञ्जनानि च ३३ इत्येष त्रिपञ्चाशद्वर्णात्मको लोकप्रसिद्धो मातृकारूपो ज्ञेयो, न त्वस्माभिर्नूतनोऽन्यकाराद्यादिरूपो विधेयः। सर्वज्ञप्रणीतेऽन्यतिकाविद्यासु, एन्द्रचान्द्रादिव्याकरणेषु चाऽन्यकारादिक्रमस्याऽप्रसिद्धेः। एकस्मिन्नेव च पाणिनिव्याकरणे तस्य प्रसिद्धिः, तथाहि–अइउण्, ऋऌक्, एओङ्, ऐऔच्, हयवरट्, लण्, ञमङणनम्, झभञ्, घढधष्, जबगडदश्, खफछठथचटतव्, कपय्, शषसर्, हल् इति प्रत्याहाराः। आदिरन्त्येनेता सह मध्यवर्णानां ग्राहक इति। अण्–अइउवर्णाः, अक्–समानाः, एङ्–गुणः, ऐच् वृद्धिः, अच् स्वराः, हल् व्यञ्जनानीत्यादि। अयं तु क्रमः व्याकरणान्तरतः प्रसिद्धो वर्णसमाम्नायः, प्रसिद्धाश्च स्वरादिसंज्ञा अस्माभिरादृताः। तत्रेति वर्णसमाम्नाये स्वरादयः प्रस्तूयन्ते।

‘औदन्ताः स्वराः’। १–१–४॥ अत्र औकारेण अवयवेन विग्रहसमुदायः, अकारादिमत्तदवयवरूपोऽन्यपदार्थसमासस्यार्थः, अत एवात्र लम्बकर्ण इत्यादिवत् तद्गुणसंविज्ञानो बहुव्रीहिः, न तु चित्रगुरित्यादिवदतद्गुणसंविज्ञानः। “प्रश्नोर्थे ” इत्या-

---

१ ६-१-१२। २ ६-१-१३४। ३ ६-१-१३५। ४ क. १५८। ५ स्योनम्—सुखम् बहुप्र सर्वं स्थानम्। ६ ५-१-११४। ७ १-१-१। ८ २-१-७७। ९ १-१-१५२। १० १-४-४१। ११ १-४-२१। १२ १-४-२१। १३ ६-१-२८। १४ ७-४-८। १५ १-१-१११। १६ १-१-१। १७ १-१-११। १८ ५-१-१८। १९ ७-४-१२।

विसन्धे सन्ध्यक्षरग्रहणात्तत्र हि सूत्रे " सम्मत्यसूयाकोप० " इत्यादिसूत्रादधिकारागतस्य स्वरेष्विति पदस्यार्थवशाद्विभक्तिपरिणामेन स्वरस्येति परिणामात् स्वररूपः सन्ध्यक्षरः प्लुतो भवतीति सूत्रार्थः । अतद्गुणसंविज्ञाने तु औकारस्य स्वरसंज्ञत्वाभावे संकल्पेयैदे दोदित्येव क्रियते न तु सन्ध्यक्षरस्येति । ज्ञापकं चाऽत्र, " अष्ट और्जस्शसोः, " " चातोर्येव औः, " " वर्ते औरिंति क्यक्षनेऽर्धे " इत्यादि । औकारस्य हि स्वरत्वाभावे अष्ट औः इत्यादिसूत्रेषु " स्वरे वा " इत्यनेन यलोपो न स्यात् । तकार इति उच्चार्यते स्वरूपेण स्वीक्रियतेऽनेनेत्युच्चारण स्वरूपपरिग्रह इति भावः । तपरत्वाभिदेशस्य औदित्युक्ते औकारस्य स्वरूपं प्रतीयते, तकाराभावे तु आवन्ता इति कृते कष्ट-प्रतीतिः स्यात् । ननु औदित्युक्तेऽपि " विशेषणमन्तः " इति सूत्रबलात् औदन्ता वर्णा इति लभ्यते, किमन्तग्रहणेनेति ? नैव, उदात्तादिभेदेनाऽपि बहुवचनस्य चरितार्थत्वेन औदन्ता अकाराद्या वर्णा इति न लभ्येत, ततो दधि नौः इत्यत्र नौशब्दस्य स्वरत्व इकारस्य यत्वे च दध्न्नौः इत्यनिष्ट रूप स्यात्; एव " लृदन्ताः समानाः " इत्यत्राऽप्यन्तग्रहणफलं ज्ञेयं । न तु लृकारः क्लृपिस्थ एव प्रयुज्यते, न च लृकारस्य स्वरसंज्ञाफलमस्ति, लृकारस्य तु प्रयोगोऽपि न क्वाऽपि दृश्यत इति ? नैवम्, कृप्तः इत्यत्र " अदीर्घाद्विरामैक० " इति द्वित्वस्य, क्लृत्प्तदिव इत्यादौ प्लुतस्य चाऽधिकारागतस्वराश्रितस्य दर्शनात्, .. कारानित्यत्र इकारस्य च लृकारे स्वरे यत्वविधानात्, प्रदेशा इति प्रदिश्यन्ते-कथ्यन्ते संज्ञाप्रयोजनानि एभिरिति " व्यञ्जनाद्घञ् " इति घञि प्रदेशाः प्रयोजनस्थानानि ।

' एकद्वित्रिमात्रा ह्रस्वदीर्घप्लुताः ' । १-१-५ ॥ इति एकेति " सर्वादयोऽस्यादौ " इति पुंवद्भावः । मात्रेति निमेषोन्मेषक्रियापरिच्छिन्न उच्चारणकालो मात्रा, ऐदौतौ चतुर्मात्रावपीत्यन्ये, इति शेषा हि पादाः । अर्धमात्रिकयोरिति, अर्धं मात्राया अर्धमात्रा साऽस्त्यनयोरिति, " अतोऽनेकस्वरात् " इतीके अर्धमात्रिके तयोः । तिस्रः प्लुतमित्यत्र तु विधानबलात्तत्त्व न भवति । अन्यैः कालापकाद्यैर्दीर्घसंज्ञाऽपि कृता नास्ति, ततोऽत्र संज्ञाद्वयेऽपि सन्देहः । यथा अ आ इत्यादौ क्रमेण ह्रस्वदीर्घसंज्ञा दृष्टा, ए ऐ इत्यादावपि किं तथैवेत्याशङ्कायामाह-सन्ध्यक्षराणां त्वित्यादि ।

' अनवर्णा नामी ' १-१-६ ॥ न विद्यतेऽवर्णो येष्वौदन्तेषु तेऽनवर्णाः, ननु संज्ञिसमानाधिकरणत्वेनौदन्ताः स्वरा इतिवन्नामिन इत्येव बहुवचननिर्देशो युज्यते ?,

---

१ ७-४-८९ । २ १-४-५१ । ३ ४-१-१२ । ४ ४-१-५५ । ५ १-१-२४ । ६ ७-४-१११ । ७ १-१-७ । ८ १-३-११ । ९ ७-४-११ । १० ५-१-११२ । ११ १-२-४१ । १२ ७-२-५ ।

उच्यते, वचनभेदेन संज्ञां कुर्वन्नेष ज्ञापयति यत्र नामिनः स्थाने विधीयते तत्र यदि कायात्कार्यी स्वरो न्यूनो भवति तदैव नामिसंज्ञा प्रवर्तते नाऽन्यथा, तेन गच्छावतिन्च्छायतीत्यादौ न गुणोऽत्र एव तथाऽत्र । ऐकारोपदेशफलाभावमित्याभावार्थं नामाय इति । विशेषणविशेष्यभावस्तु सामान्यविशेषभावेन यथा पञ्चादौ घुट्, वेदाः प्रमाणमिति एव " अं अः × क × पफपरा: धिट् " इत्यादावपि द्रष्टव्य । अन्योपरयोश्च शब्दयोर्बहुवचनं प्लुतसंग्रहार्थं, नामिस्वे च निश्चक्रुश इत्यादौ षत्वं सिद्ध ।

'लृवर्णान्ताः समानाः' । १-१-७ ॥ उदात्तानुदात्तस्वरितसानुनासिकनिरनुनासिकभेदादष्टादशधा भिन्नेऽप्यवर्णादयः, तेन समर्थ्यमनिति प्रापितितुल्यस्वप्रतीतिरने नति । समानं तुल्यं मानं परिमाणं परिच्छेदो येषां " समानस्य धर्मादिषु " इति सादेश समानाः परस्परमितरेतरमात्रकं विभ्रमा अपीति । अन्त्याऽन्तवर्णा इति नाऽनुवर्तते, ऋवर्णादित्यादावनयस्य समानसंज्ञाफलभूतदीर्घस्वरदर्शनात्, तथा कृ ऋकारः वस्तृऋकारमवति द्विधाऽपि कृकार इत्यत्र ऋवर्णस्य समानसंज्ञत्वे दीर्घत्वं सिद्धम् ।

'एऐओऔ सन्ध्यक्षरम्' । १-१-८ ॥ न क्षरतीति वा " अक्षं० " इति यप्रत्ययस्य विकल्पेन विधानादपि अक्षरं सन्धौ सन्ध्यक्षरं सन्ध्यक्षरं, तथाहि अवर्णस्य वर्णेन सन्धौ एकारः [ एकारैकाराभ्यामैकारः ] अवर्णस्योवर्णेन ओकारः ओकारौकाराभ्यां च औकार इति ।

'अं अः अनुस्वार विसर्गौ' । १-१-९ ॥ विसृज्यते-विरम्यत इति घमि विसर्गः, कप्रत्ययोपलक्षणं चेदं, तेन विसृष्टो विसर्जनीय इत्यपि संज्ञाद्वयं द्रष्टव्यं ।

'कादीन्यञ्जनम्' । १-१-१० ॥ आदीयते-गृह्यतेऽर्थोऽस्मादित्यादिः, स च सामीप्यव्यवस्थाप्रकारावयवेषु वर्तते, तत्र गङ्गादौ घोष इति सामीप्ये, ब्राह्मणादयो वर्णा इति व्यवस्थायां, माया दम्भश्चादय इति प्रकारे, स्तम्भादयो गृहा इत्यवयवे, सामीप्यवाचकस्याऽऽदिशब्दस्य ग्रहणे ककारस्य व्यञ्जनसंज्ञा न स्यात्, उपलक्षणस्य कार्येऽनुपयोगात्, यथा-चित्रगुरानीयतामित्युक्ते चित्रगवोपलक्षितः पुमानेवाऽऽनीयते न तु चित्रा गौरिति; व्यवस्थार्थोऽपि न घटते वर्णसमाम्नायस्य व्यवस्थितत्वेन व्यभिचारासम्भवात्, व्यभिचारे च विशेषणमर्थवदिति हि न्यायः । कादीनां परस्परमत्यन्तवैसादृश्यात् प्रकारार्थोऽपि न घटते । अवयवार्थस्तु संगच्छते-ककार आदिरवयवो यस्य वर्णसमुदायस्य स कादिः, अत एवाऽत्र तद्गुणसंविज्ञानो बहुव्रीहिः,

१ १-१-११ । २ १-१-१४९ । ३ ४-१-११ । ४ मध्ये हि भरतसूत्रे ।

समुदायस्याऽवयवित्वे समवेतत्वाद्व्यपसूत्रावयवत्वेन समुदायप्राधान्यादेकवचनं, संज्ञि सामानाधिकरण्येऽपि स्वतयः प्रमाणमितिवदाविष्टलिङ्गत्वात् व्यञ्जनमिति नपुंसकत्वं, व्यज्यते-प्रकटीक्रियतेऽर्थोऽनेनेति व्यञ्जनं, स्वराणामर्थप्रकाशने उपकारकं यथा सूपा दीन्योदनस्येति व्यञ्जनसादृश्यादन्वर्थं चेदं नामेति । कस्याऽऽदिः कादिरिति व्यव स्थापाव्ययादिद्वयस्त्वेन स्वराणां न व्यञ्जनसंज्ञा, अनुस्वारविसर्गयोस्तु भवति । ततोऽनुस्वारस्य व्यञ्जनसंज्ञायां संस्कर्ता इत्यादावनुस्वाररूपव्यञ्जनात्परस्य सस्य " धुटो धुटि स्वे वा " इत्यनेन लुक् सिद्धो, विसर्गस्य तु व्यञ्जनत्वे सुपूर्वस्य तुसत्त- यतेः क्विपि णिलुकि तेन लुकि " पदस्य " इति विसर्गरूपसंयोगान्तस्य सस्य लुक् सिद्धस्ततो विसर्गस्य कस्याऽऽदिरितिव्युत्पत्त्या धुट्त्वे " धुटस्तृतीय " इति स्थान्या सन्ने गत्वे सति सुतुग् इति सिद्धम् ।

' अपञ्चमान्तास्थो धुट् ' । १–१–११ ॥ धुट्शब्दो विपयनामत्वात्पुलिङ्गः, एवमुत्तरत्र घुट्शब्दोऽपि द्रष्टव्यः ।

' पञ्चको वर्गः ' । १–१–१२ ॥ सजातीयसमुदायो वर्गः, स चाऽवर्गकवर्गादि- भेदेनाऽष्टधा, वर्णसमाम्नाये केवलिकादिशास्त्रेषु च प्रसिद्धः । तत्र च यः पञ्चसङ्ख्य त्वेन व्यवस्थितस्तस्यैव वर्गसंज्ञेति, अत आह कादिष्विति । यो च इति संज्ञिनां बहु त्वादगृहीतवीप्सोऽपि पञ्चकशब्दो वीप्सां गमयतीति । गुणोत्पात्तीयमेकत्वेन व्यव स्थापयति, " वर्गाद्यमि० " इति गे, वर्गः जात्यपेक्षमेकवचनम् ।

' आद्यद्वितीय शषसा अघोषाः ' । १–१–१३ ॥ इति घुप् इत्यस्य " मतौ कर्मे " इति घञि, घुपण् " घुर्घर्षे " इत्यत्रि वा घोषः, अविद्यमानो घोषो येषां यथाऽन्तरा कन्येति । ननु आद्यार्थे समाहार एव युक्तो यतो मात्रालाघवमप्युत्स वाय मन्यन्ते वैयाकरणा इत्याह बहुवचनमिति ।

' अन्यो घोषवान् ' । १–१–१४ ॥ घोषो ध्वनिर्विद्यते यस्य स तथा, अन्वर्थता च तुल्यस्थानास्येत्यत्र दर्शयिष्यते, घोषवानिति जातिनिर्देशः, अघोषापेक्षया चाऽ- न्यत्व तेन येषामविद्यापी घोषस्तेऽन्यत्वजात्यभ्यासिता घोषवन्त इत्यर्थः ।

' यरलवा अन्तस्थाः ' । १–१–१५ ॥ लिङ्गमशिष्य लोकाश्रयत्वादिति, वर्ण विशेषणमप्यन्तस्थाशब्दः स्त्रीलिङ्गो बाहुल्यात् शब्दशक्तिस्वाभाव्याद्बहुलमुपलभ्य भाव इति । यरलव इतीति–अर्थवत्त्वाभावे नामत्वाभावाच्च स्यादिः ।

---

१ १–१–४८ । २ २–१–८१ । ३ २–१–७१ । ४ ४ ११ । ५ ४–१–१८ । ६ ५–१–१८ ।

'अ अः ×क ×पशषसाः शिद्' १–१–१६ ॥ देशकालपिमेदेऽपि रूपामेदादृष्टान्तमाह–यथाकृतिरिति । यथास्यैवाऽऽकृतिर्यस्येति स तथा, गजकुम्भयोरिवाऽऽकृतिर्यस्य सोऽपि तथा, ककारपकारौ चाऽनयोः परदेशस्याभ्युपार्थेति, सर्वत्र परसन्निधापेक्षैतौ भवतो न स्वतन्त्रौ, नाऽपि पूर्वसम्बन्धाद्वानुस्वारवदिति । रेफदेशत्वात्ककपफसन्निधानेन तयोः प्रयोगादल्पविषयत्वम्, अत एव सत्यपि संज्ञिसामानाधिकरण्येऽस्यीयस्त्वज्ञापनाय शिदित्येकवचनेन निर्देशः कृतः । अथ कथमनयोर्वर्णत्वम् ? वर्णसमाम्नाये पाठाभावात्, सत्यं रेफस्य वत्वात्तयोश्च रेफादेशत्वाद्वर्णत्वसिद्धिः । न च यथादिष्टत्वेन लोपस्याऽपि वर्णत्वमाशङ्कनीयम्, तस्याऽभावरूपत्वात्; न चाऽभावोभावस्याऽऽश्रयो भवितुमर्हतीति अतिप्रसङ्गात् । अयमेवाऽर्थो बहुवचनेन सूच्यते, अनुगतत्वेन तस्य साधकत्वाभावात् इत्याह–बहुवचनमिति । ननु कथं ×क× पयोर्व्यञ्जनसंज्ञाऽपि–पूर्वेषामस्ति तत्कथं तैः सह न विरोधः ? उच्यते, व्यञ्जनसंज्ञानन्तरमेषां संज्ञाविधानात् व्यञ्जनसंज्ञाऽपि, यदि वा कादिर्व्यञ्जनमित्यप्राऽऽश्रया कस्याऽऽदिर्योऽनुस्वारो विसर्गो वा सोऽपि व्यञ्जनमित्यविरोध इति ।

'तुल्यास्यप्रयत्नं सवर्णम्' १–१–१७ ॥ प्रायो विवक्षा तुरादावतुलेः [ तुरादौ तुलेः ] तोल्यतेऽनयेति 'भिदादिभ्यो'' [ इत्यनेन ] तुला, अस्यति–क्षिपति वर्णाननेनेत्यास्यम्; प्रयत्नः उत्साहः । नासिकोष्ठौ चेति व्यस्तावेतौ, समासे तु "प्राणितूर्य॰ इति समाहारः स्यात् । वर्ततीति तालुः "कृवापाजिमिस्वदिसाध्यशूभ्य उण्" इत्यनेन ञित् प्रत्यये रेफस्य च लत्वे तालु । कलपदीपदास्यमात्रमित्यत्र, अल्पार्थेऽपि यके वा ईषदर्थकके 'अव्यये' इति कादेशः, काकलक इति संज्ञा यस्य स तथा, ग्रीवायामुन्नतप्रदेशः आन्तरं इत्यन्तरा भवो "भवे" अण इति अन्तर्भवो वा, भवे तु अर्थे दिगादिभ्यो यः" स्यात् । स्पृश्यन्ते स्म स्पृष्टा वर्णास्तेषां भावः स्पृष्टता, वर्णानां प्रवृत्तिनिमित्तं स्पृष्टताहेतुत्वात्प्रयत्नोऽपि स्पृष्टता; "घञर्थे कविधानम्" इति भ प्रत्यये वा प्रयत्नानां संज्ञा इमा यथारूपमित्युत्पाद्यन्ते एवं सर्वत्र । एवमीषत्स्पृष्टतादि । विभिद्यन्तेऽस्मिन् विवृता वर्णास्तेषां भावः, ईषद्विभिद्यन्ते च । करणमिति वर्णोत्पत्तिकाले स्थानानां प्रयत्नानां च सहकारि कारणं । सर्वं मुखं स्थानमस्य, मुखस्थितानि सर्वाण्यपि स्थानान्यवर्णस्येत्यर्थः । कण्ठतालव्यावितिकण्ठतालुनि भवौ वे स[दिरादिपाद:] समुदायादपि वा । स्पृष्ट स्थानः इति सूक्त्, शब्द ओष्ठपपन्ते वर्तते । स्पृष्ट करणमिति स्पृश्यन्ते वर्णा अस्मिन्नित्यौपचारिके

१ ३–४–१७ । २ ५–३–१४ । ३ ६–१–११७ । ४ गृह्णन्तातञ्छत्रो । ५ उ–१२० । ६–१–२–१२६ । ७ ६–१ १२१ । ८ ६–१–११४ । ९ ५–३–४६ ।

वपि पदत्वं न स्यादिति चेत् तत्र "सुर्यामक्षि" इत्यादिनिर्देशात्, सत्य, पदवर्जनाभावे सत्सु साधु सत्यमित्यादिषु नामसिद्धिरिति पदसंज्ञा स्यादित्येतदर्थं पदवर्जनमिति। राजतेत्यादि, सौभ्रुवमित्यादौ नियमस्य चरितार्थत्वात् पयोभ्यामित्यादौ चाऽप्यव्यञ्जनमित्यस्य राजवद्भ्यत्वमित्यत्रोभयप्राप्तौ "स्पर्धे परम्" इति न्यायात् व्यञ्जनामित पदत्वं भवति।

'नं क्ये'। १-१-२२॥ धर्मायतीति धर्मशब्दः प्राग्वत्यस्यासम्भवात् व्यम्वर्माभावे क्यच्च् न प्राप्नोतीति तद्वदाचेधर्मनशब्दात्प्रत्ययः। अधर्मवान् चमवान् भवतीति, यथा निद्रायतीत्यादि। अधितीति–अन्तर्वर्तिन्या विभक्त्या "तदन्तं पदम्" इति पदत्वं प्राप्तं तस्सित्येवेति नियमेनाऽपोदितमपि व्यञ्जन इत्यंशेन पुनः प्रसृतम्, ततोऽपिति प्रतिषेधेन प्रतिषिद्धमनेन प्रतिप्रसूयते।

'नस्तं मत्वर्थे'। १-१-२३॥ मतुर्मत्वर्थोऽर्थो यस्येति समानाधिकरणो बहुव्रीहिः। यथोष्ट्रो मुखमस्येत्युष्ट्रमुख इत्यत्र, नहि प्राणी प्राण्यन्तरस्य साक्षान्मुख भवतीति सामर्थ्यात्सादृश्यप्रतीतिः, समग्रेण चोष्ट्रेण सह सादृश्याभावादुष्ट्रशब्दोऽवयवे वर्तते, मुखेनैव मुखसादृश्य प्रसिद्धमिति सामर्थ्यान्मुखमिव मुखमस्येत्यर्थोऽवतिष्ठते, एवमिहाऽर्थेन मतुशब्दस्यार्थेन सामानाधिकरण्यमनुपपद्यमान मतुशब्दं मत्वर्थवृत्ति गमयतीत्युक्ते मतोरपि। मतुशब्दस्याऽपि मत्वर्थाव्यभिचारान्मत्वर्थेन ग्रहणमिति। पेचुष्मानिति–"स्वामीर्थोऽर्थविभौ" इति न्यायेनाऽपदसंज्ञस्याऽऽदेशोऽप्यपदमित्युपादेशे कृते सन्तस्याभावेऽपदत्वात् 'कुटस्थेतीय:' इति यस्य कत्वं न भवति।

'मनुर्नभोङ्गिरोवति'। १-१-२४॥ इति शब्दः सान्त उकारान्तमनुशब्दव्यवस्थापयती वर्तते, न मातीति असित्यपि 'मर्यादया' इति नरवादित्वात्, मसमन्नेनवीत्योरित्यस्य मसेर्नभस्तीति क्विपि नम्यतीत्यसि वा नमाः–भावमः, नम आकाश तद्गमस्त्वत् अथ शब्दः पाणिनीये शाकटायने च छान्दसो निर्णीतः, परं लोकप्रसिद्धया शाकटायन एतदर्थं सूत्र चकार, ततो लौकिकप्रयोगो नमोवदिति द्रष्टव्यः।

'वृत्त्यन्तोऽसषे'। १-१-२५ ॥ वर्तनं–वृत्तिः क्तिःवर्तनव्यापारवतीत्यर्थः, वर्तनं स्वस्वपदार्थापेक्षया परस्य समुदायार्थस्य प्रतिपादनं, यद्वा वर्तिपीठ परार्थमभिधेयादित्याशास्यमाना वृत्तिः कर्तरि तिक्, यद्वा वर्तन्ते स्वार्थपरित्यागेन पदान्यत्रेत्यापारे क्तौ वृत्तिः पदसमुदायादिरूपा, सा त्रेधा–समीसवृत्तिः, तद्धितान्तवृत्तिः,

१ १-१-११२। २ ७-४-११५। ३ १-१-२। ४ ७-४-११। ५ २-१-७६। ६ १-२-११८।

नामधातुप्रत्ययेति; राजपुरुष, औपगवं, पुत्रीयम्यतीत्यादि । परार्थाभिधानमिति-अवयवार्थापेक्षया परोऽर्थः, समुदायार्थो यतोऽवयवपदार्थापेक्षया समुदायः परमविव-क्षणः परः तस्याऽर्थस्तस्याऽभिधानम् । अवयवार्थस्यास्तरार्थाभिधानेऽपि इतिशब्दः । अवसानमिति अवसीयतेऽस्मिन्नित्यवसानम् । छीड इति छिदो क्विप्, छनो छिदो यछिदो, "पञ्चम्येतत्वाच्छेपे" इति समास इति कर्तव्य, न तु याने छीड इति; यतस्तस्मिन् कृत "गतिकारकः" इति क्विबन्तेन छिद् इत्यनेन समासे सति छिद् इत्यस्याऽविभक्त्यन्तत्वेन पदत्वप्राप्तिरेव नाऽस्तीति । राजवागिति-अत्राऽन्तरा-यास्पूर्वस्य पदत्वे सति न लोपः, तथाऽवयवाभितपदत्वप्रतिषेधेऽपि समुदायविष-यपाश्रित पदत्वमस्तीति कस्य नभूयति । वाक्त्वक्स्रुच इति-अत्र वाक्छब्दापेक्षया त्वक्छब्दो इत्यन्त इति परस्याऽन्वय इति । वाक्त्वचमिति-अत्र समासान्ते कृत इतिरकारान्ता भवति, न तत्र त्वमिति इत्यन्ता ततो "इत्योऽञ्यसे" इति पदत्वप्रतिषेधस्तयो न प्राप्नोति, समाधत्ते-उच्यते इत्यादिना अयमर्थः समासात्स-मासान्तो विधीयमानस्तस्यैवाऽन्तत्वं व्याहन्ति, न तु तदवयवस्य त्वचः तस्य समासावयवत्वात् । नहि समुदायस्याऽवयवोऽवयवस्याऽवयवो भवति । यद्वत्वं व्याख्या-समासशब्देन समासावयवोऽभिधीयते, ततः समासात्समासावयवात्त्वचः समासान्ता विधीयत इति, भवत्विड्यन्तत्वं त्वचस्तथापि सित्येवेति नियमेन पदत्व निवर्तत इति भावः । अथवा समासात्परः समासान्तो विधीयते तदा स्यादः पूर्वस्यैव एव यदा भवतीत्यस्तु अड्यन्तत्व त्वचः तत्र च पदत्वप्राप्तिरेव नाऽस्तीति कल्पाभाव इति । समास शब्दस्तु तदन्यवशात् क्वचित्समासावयव क्वचित्समासे चाऽऽहति । दधिसगिति-सिञ्चतीति सिच् तदा दध्नः सह इत्यत्र काय, दधि सिञ्चतीति तु न, यतः 'सोपपदात्सिचर्भिच नेष्यते' इति न्यासः । ननु पटुसर्पिषा दीपायुषस्याग्नौ असप इति वचनात्पदमप्यसामाने तस्य पत्वं न प्राप्नोतीति ? उच्यते, "ध्याप्यो रेडाम्" इत्यत्र द्विसकारपाठात् इत्यन्तोऽस्ये न पदमित्यत्र, नञ्प्रयस्य प्रकृतार्थगमकत्वेन, न न सपे पदमपि तु पदमेवेत्यमाश्रितोऽपि पदसंज्ञा तस्य पस्य भवतीति । अग्निसादित्यादौ पदादित्यादप्य तस्य पत्वाभावाभि-व्यक्तः मन् ज्ञापयति नञा निर्दिष्ट पदत्व तस्य पत्वे नित्य, ततो पटुसर्पिषेत्यादावनन्त स्थितस्य तस्य पत्वे न पदसंज्ञा, मादित्यस्य तु तस्य पत्वे दधिसेगित्यादौ पदसंज्ञेति ।

'सविशेषणमाख्यातं वाक्यम्' । १-१-२६ ॥ आख्यायतेऽस्म क्रिया प्रधानत्वेन साध्यतयाभिधायितया वेत्याख्यातम् । यत्र क्रियापदं क्वचित् तत्र कर्ता

१ १-१-७६ । २ १-१-४५ । ३ १-१-१५ । ४ ७-१-११ ।

क्रियापदस्य समानाधिकरण्यं विशेषणमन्यानि व्यधिकरणानि । कर्मापि तु क्रियापदे कर्म समानाधिकरणं, साधुर्वो रक्षतु इत्यादौ साधुरिति रक्षणादिक्रियायाः कर्ता समानाधिकरणं च, रक्षतु इत्यादिक्रियापदस्य तु च इति व्यधिकरणमिति । उच्चैर्वो वदतीति–उच्चवदतीत्युचैः "नुदर्थ्याममध्ये: ककारैकच्चत्व" इति टावत्कार्ये, उदत् उदीचितिरूपं चाडुलकत्वान्न भवति । भोक्तुमिति–सामानाधिकरण्याभावात् क्रियाविशेषणत्वेऽपि न द्वितीया, किन्तु तुमोऽपि तुमर्थोऽन्यभिचारविवक्षायां "तुमोऽर्थे भाववचनात्" इति चतुर्थी, हेतुहेतुमद्भावविवक्षायां "हेतुकर्तृ०" इति तृतीया, सम्बन्धविवक्षायां तु "शेषे" इति षष्ठी, "क्त्वातुमम्" इत्यव्ययत्वेन विभक्तिलोपः । लुनीहि २, पुनीहि २ इत्यत्र "क्रियाव्यतीहारे" इत्यनेन प्लुतः । शीलं ते स्वमिति–शेरते सर्वगुणा अस्मिन्निति "शुकशी०" इत्यले शीलं, अत्राऽस्तीत्यादि क्रियापदं न प्रयुज्यते परं तस्याऽप्रयुज्यमानस्याऽपि स्वमिति समानाधिकरणं । ननु शब्दप्रयोगोऽर्थप्रतिपत्त्युपायस्तस्य चाऽप्रयुज्यमानस्याऽपि विशेषणविशेष्यभावेऽतिप्रसङ्ग , अप्रयुज्यमानत्वाविशेषात्सर्वं सर्वस्य विशेषणं विशेष्यं च स्यात्, किञ्च यद्यप्रयुज्यमानमपि शब्दरूपं विशेष्यं विशेषणं वा गमयेत्तदाऽनर्थकः सर्वत्र तत्प्रयोग इत्याह–अर्पयतीत्यादि । लोकादेवेति–लोके हि साकाङ्क्षत्वे सति क्रियाभेदेऽप्येकवाक्यत्वं प्रतिपद्यते, साकाङ्क्षत्वेऽपि क्रियाभेदे वाक्यभेदार्थं वचनमिति भावः । कुरु कुरु न इति–अत्र युगपद्वाक्यद्वयप्रयोग इत्येकवाक्यत्वाभावात्प्रसादेशस्य न प्राप्तिरिति पराभिप्रायः ।

'अधातुविभक्तिवाक्यमर्थवन्नाम' । १–१–२७ ॥ तत्पदे विशिष्टोऽर्थोऽनेनेति बाहुलकात्करणेऽपि व्यधि वाक्य, कर्मणि तु प्रतीतमेव । अर्थो द्वेधा, अभिधेयः स्वार्थादिभेदात्पञ्चधा, द्योत्यश्च समुच्चयादिरिति–यथा चकारादिना द्योत्यस्य समुच्चयादेः समासादिनाऽभिधीयमानत्वादभिधेयत्वमप्यस्तीत्याह–द्योत्यश्चेत्यादि, अभिधेय इति शेषः । न केवल स्वार्थादिरभिधेयो द्योत्यश्च, समुच्चयादिरभिधेय इति चार्थः । समुच्चयादिरित्यादिपदाद्वा विकल्पादौ एवोऽन्वधारणे बोध्यम् । तथा द्योतकानां विशेषणं न भवति, यथा घटश्च भव्यमिति, तथा चादीनां स्वार्थोऽपि द्योत्यतया न वाचकत्वपेक्षेत्येकोऽप्यभिधेयो नाऽस्ति, स्वरादीनां तु लिङ्गसंख्ये न स्तः । ननु अहन्नित्यत्र विभक्त्यन्तद्वारेणैव नामत्वं न भविष्यति, किं धातुवर्जनेन ? सत्यं, तथापि हन्तीत्यत्र धातुवचनाभावे विभक्तेः प्राक्तनस्य हन्नित्यस्य नामत्वे "नाम्नसि०" इति व्यञ्जनद्वारा पदत्वे च न लोपः स्यादिति धातोर्वर्जनमिति । अथ वृक्षान् इत्यत्र नकार

१ उ १ ३ । २ २-१-६१ । ३ ३-१-४४ । ४ २-२-६१ । ५ ५-१-१५ । ६ ७-४-११ । ७ उ० ४११ । ८ १-१-३१ ।

विधानसामर्थ्यादेव न लुग् न भविष्यति, किं विभक्तिवर्जनेनेति ? सत्य, कर्मस्थान् इत्यादौ “ स्त्रोऽघ्या ” इति न विधानं चरितार्थमित्यन्यत्र नलोपः स्यादिति । ननु साधुर्धर्मे ब्रूत इत्यत्र विभक्त्यन्तत्वादेव नामत्वं न भविष्यति, किं वाक्यवर्जनेन ? सत्यं, “ प्रत्ययः प्रकृत्यादेः ” इति परिभाषया ब्रूधातोरेव विभक्त्यन्तत्वं, न तु समग्रवाक्यस्य, ततो वाक्यस्य नामत्वे साधुर्धर्मे ब्रूत इत्येकरूपाद्वाक्यादिभक्त्यागनिष्टरूपप्रसङ्ग इति । समासादेर्भवत्येवेति-अन्यथा हि अर्थवच्छब्दस्य नामत्वे विधीयमानेऽर्थवत्समुदायरूपस्य वाक्यस्य प्रसङ्ग एव नाऽस्ति, किं वाक्यवर्जनेन ? ततस्तदेव वाक्यवर्जनं बोधयति, समासादेः समुदायस्य भवत्येवेति । नन्वधातुविभक्तीत्यत्र पर्युदासाश्रयणादेवार्थवत एव नामत्वं भविष्यति, नाऽर्थोऽर्थवदित्यनेन, सत्यं; अर्थवदिति संज्ञिनिर्देशार्थं पर्युदासाश्रयणे हि केन धर्मेण सादृश्यमाश्रीयत इत्यप्रतिपत्तिः स्यात्, ततश्चाऽनर्थकानामपि धर्मान्तरेण सादृश्ये नामसंज्ञाप्रसङ्ग इत्याह-अर्थवदिति । अव्युत्पत्तिपक्षाश्रयणे वन इत्यादेः अखण्डस्यैवाऽर्थवत्त्वं, न तु तदवयवार्थस्य वन इत्यादेर्वर्णान्तस्येति, व्युत्पत्तिपक्षे तु धात्वर्थेनाऽर्थवत्तायामपि धातुद्वारेणैव वर्जनसिद्धिरिति । ननु गौरिति वक्तव्ये शक्तिवैकल्याद्गो इति केनचिदुक्तं तत्समीपवर्ती च तदुक्तमपरेण इतः सम् अनुकरोति तदा तदनुकरणस्य नामसंज्ञा स्यान्न वेत्याह-पदेत्यादि-अनुकार्येणेति-यथागवीरूपेणेत्यर्थः ।

‘पुंस्त्रियोः स्यमौजस्’ । १-१-२९ ॥ अलौकिकोऽयं निर्देशः, अन्यथा पुमांश्च स्त्री चेति कृतेऽर्थेसत्वात् स्त्रीशब्दस्य प्राक्निपाते “स्त्रियाः पुंसो द्वन्द्वाच्च” इति समासान्ते च स्त्रीपुंसयोरिति स्यात्, अनेन चैतद् ज्ञाप्यते क्वचिदलौकिकोऽपि निर्देशो भवतीति । स्यमौजसिति-अत्र व्युत्क्रमनिर्देश एवाऽऽवृत्त्या औकारद्वयग्रहणं साधयति, तथाहि-अम् च औश्च अमौ, ततः सिश्च अमौ च जस् चेति कृतेऽव्युत्क्रमपरितस्य द्वितीयाद्विवचनस्य ग्रहः, आवृत्त्या तु व्याख्याने औश्च जस् च औजस्, सिश्च अम् च औजस् चेति कृते जस् साहचर्यात्प्रथमाद्विवचनस्य ग्रहः, एकशेषो वा क्रियते, औश्च औश्च आवौ, ततः सिश्च अम् च आवौ च जस् च तथेति, इत्याह-औरिति ।

‘स्वराद्ययोऽव्ययम्’ । १-१-३० ॥ “ छायेव या स्वर्जलधेर्जलेषु ” इत्यस्य पश्चात्

“ सद्यः सदाऽभ्यासगृहीतशील-विज्ञानसम्पत्प्रसरस्य सीमा,

अदृश्यताऽऽस्यद्वतामलेषु ॥ ” इति पादत्रयं ग्राह्यम् ।

---

१ १-४-४६ । २ ७-४-११५ । ३ ७-३-९६ ।

अत्युच्चैस्त्याविति—ननु पूर्वपदमव्ययमत्रास्त्यव ततस्तत्सम्बन्धित्वात्तदपि प्राप्नोतीति? सत्य, अतिक्रान्तेऽर्थे लिङ्गसंख्यायोगादविशब्दः सत्त्वे वर्तते इति नाऽव्ययम्। "अ-तिरतिक्रमे च" इत्यत्र बाहुलकात्समासाभावप्रसिद्धत्वेत्यादौ क्रिया [ संपन्नस्य ] शब्दस्याऽतिशब्दस्य द्योतकत्वमेवेति। परमनीचैः इत्यादौ, अत्र तदन्तो विशेष-णार्थः, पूर्वस्माद्विशेषं द्योतयति तेन किं सिद्धम्? यत्राऽनुपसर्जनस्वराद्यन्तो भवति तत्राऽव्ययः समुदायमौभयमव्यय भवत्येव, समासस्योत्तरपदार्थप्रधानत्वात्। अन्वर्थसंज्ञेति—अनुगतोऽर्थेन, अथमनुगता वा, अनुगतोऽर्थो यस्या इति वाऽन्वर्थी, सा चाऽसौ संज्ञेति। कारकविभक्तीति—विभक्तयो वचनानि। विभक्तिष्विति—विभ-क्त्यर्थेषु कारकेष्विति—यावत्। ननु भवत्येव तथापि संज्ञाविधौ तदन्तप्रतिषेधस्य प्रापितत्वात्, "<u>ग्रहणवता नाम्ना न तदन्तविधिः</u>" इति प्रतिषेधाच्च कथं परमोच्चै-रित्यादौ तदन्तस्याऽव्ययसंज्ञेत्याह—अन्यथाऽश्रयणे चेत्यादि। न व्येति न नानात्वं गच्छति सत्त्वधर्मान् गृह्णातीत्यन्वर्थसिद्धिः। अयमर्थो यदन्वर्थसंज्ञाकरणाद्द्वितीयम-व्ययमित्युक्तस्यापीदं तद् विशेष्यत्वेन विज्ञायते तस्य स्वरादीतिविशेषणत्वेन, ततश्च "विशेषणमन्तः" इति न्यायात्तदन्तविज्ञानात्केवलस्य तु व्ययपदग्रिवक्षायात्परमोच्चै-रित्यादावप्यव्ययसंज्ञा विज्ञायत इत्यर्थः। यदव्ययमव्यय शब्दरूपं, किं विशिष्टम्? स्वरादि स्वराद्य तदव्ययसंज्ञ भवतीति च सूत्रार्थः समभवनि। तदुक्तर्—भेष्यत्काले [अधोभाग], अस्तम्—नाश यथाऽस्त गतः—सवितेति, दिवा—दिने, दोषा—रात्रौ चच्छ पिते च, योम्—वैयधिक सुखम्, भयस्—सुखम्, मिहायसा—सत्यम्, छन्दः "पृभृ तन्त्रिव म्न्यविभ्यः" इति बहुवचनादीप्रत्ययऽस्त्रागम च रोदसी—द्यावाभूमी, ॐ—प्रणवा-भ्युपगमादौ, भूस्—भूमि, भुवस्—अन्तरिक्षम्, समया निकषा च सामीप्ये, अन्त राठीति आप्रत्ययऽन्तरा—विमर्दे मध्य चाऽऽप्रत्ययप्रधान, बहिः—बहिर्भूते बहिष्ठे च, असाम्प्रत—अयुक्तम्, विस्मितार्थादः पराद्यर्थैर्विदिरत्याप्रत्यये प्रद्धा—प्रमत्तये, अर्वः "तीर्ति०" इति क्विति त गणपाठान्मान्तस्वे, स्वत—स्तुतौ, अस्तेः "क्षिपर्योस्त्याद्य०" इति निपातनात् च तद्वादस्य गणपाठान्मागय, सत्य—प्रभप्रतिषेधयोः, इत्यूत्यादेर्णादे-र्बिरत्याकारे इद्धा—प्राकाश्ये, मुधा—निर्निमित्तप्रीतिकरणयोः, मिथो—रहःसहार्थयोः, मिथ—स्वार्थे, मिथः—विजनवियोगतरे नरादेः, मिथुस्—सङ्गमे, मिथुने—युग्मम् निपा-तनान्मान्तत्व, अनिश—भनवरतम्, मङ्क्षु—शीघ्र, ञटि—संपात इत्यतः "स्तुभ्रात्यजि" इत्यादिबहुवचनादिप्रत्यये बाहुलकादिटि च, झटिति—शीघ्रार्थे, सामि—अर्धे, मावि-

१ ३-१-२५। २ ७-४-११२। ३ ७ ४-११। ४ ७-२-१। ५ ७ २-११४। ६ ७ १-२६।

शकले, विष्वक्-समन्तात्, अन्वक्-पश्चात्, तावत्प्राक्सतात् इति त्रयः शब्दा स्वपिप्रभृतिसप्ततीनां "अञ्चेगतयः" इति निपातनात्सिद्धाः शीघ्रार्थे, कापट्-शीघ्रानुवृत्तसामीप्यकामेषु पिकाद्यपकसारो प्रागादित्वात्, हिरुक्-वियोगे, योक-शीघ्रसम्प्रस्पर्शयोः मनाक्-ईषदप्राप्तयोः, अरं-शीघ्रमस्पर्श वा, परं-भनामिदे, परं किन्तु, तिरस्-अन्तर्धवशा तिर्यग्भावेषु, मनस्-चित्त, नमस्-प्रणामे, भूयस्-वारं वारम्, प्रायस्-बाहुल्येन, प्रवाहु-अर्थ्यर्थी अस्यैव गणपाठान्मान्तत्वे प्रवाहुक्-अस्पर्शे, प्रवाहुकं-अस्पर्शे समकालं च, आर्य-प्रीतिसम्बोधने पापाहिरते च, हलं-सीरं, आर्यहलं-निशित सीरं पठास्कारम, पञ्चपद्-अस्पर्श, ऋते-वियोगे विना च, सम्पूर्णस्परेः पठिपठीति इ प्रत्यये गणपाठात्समो भक्षेपे सपदि, साक्षात्-प्रत्यक्षतुल्ययोः, सत्-परिणामे, प्रशाम्-प्रशामके, सनात्-चिरन्तने, सनत्-हिंसायां, नाना-पृथग्भावे, विना-योगप्रतिषेधे, सहसा-अतर्किते, युगपत्-क्रियासमभिहारे सहार्थे च, उपांशु-रहस्यवचनकर्मवचने च, पुरस्तादयः इ प्रथमे पुरोऽर्थे च, प्रभृत्-नित्ये, पुनः-पुनरर्थे च, मा प्रमादक्लिकशिक्षित इति स्मृगोहिरेः क्विपि कुवित्-योगप्रशंसास्तिभावेषु इति स्वरादयः । इतिशब्द-एवं प्रकारार्थः, एवं प्रकाराः स्वरादयो गृह्यन्ते न त्वेतावन्त इत्यर्थः, यतः—

"इत्यन्त इति संख्यानं,निपातानां न विद्यते । प्रयोजनवशादेते,निपात्यन्ते पदे पदे ॥ १ ॥"

*आकृतिगणार्थमिति*—आक्रियतेऽनयेत्याकृतिर्यथैकवस्था गणस्वरूपमिति । अव्ययीभावस्य चाऽव्ययत्वं नाऽङ्गीकर्तव्यं, तदङ्गीकरणे सुपकैर्नीचैःपरिस्यादिष्वु-पाधिप्रत्ययनीत्यपाऽपि "अव्ययस्य कोट् च" इत्यत्र प्रसज्येत । तथोपकुम्भमन्यामि-त्यादौ दोषामन्यमहरित्यादिवन्मामप्रतिषेधः-स्यात् । अथाऽव्ययीभावस्य 'षष्ठ्यर्थे-पूर्वाव्यय' इति षष्ठीसमासप्रतिषेधेऽव्ययसंज्ञाफलमिति चेत्, तत्र समासकाण्डे बहु-लाधिकारादेव सेत्स्यतीति, किञ्चाऽव्ययीभाव इति महती संज्ञा यत्र कृतवानाचार्य-स्तज्ज्ञापयति क्वचिदव्ययत्वमपीति, तेन चैत्रस्योपकुम्भमित्यत्र न समासः ।

'चादयोऽसत्त्वे' । १-१-३१ ॥ अनुकार्यादावितिभावित्यादसुवैसाधि-त्यत्र चादकस्याऽविशब्दस्य चिनोतीति च इत्येवं क्रियाप्रधानस्य च चशब्दस्य नाऽ-व्ययत्वमिति, अह-निर्देशविनियोगक्लिष्टार्थेषु, एवशब्दस्यैव निपातनान्मान्तत्वे एवम्-उपमानोपदेशप्रभावितवर्णप्रशंसासु, नेत् चेत् नयतेर्मिनोतेश्च विपि निपातनाचायमे ह्यापि प्रतिषेधविचारसमुच्चयेषु, नचेत् नयदि-निषेधयोः, यच यशब्द एवाऽर्थ चित्

१ इ. ८०० । २ पुरस्तात् पुरः पुरस्तात् इति पुरआदयः । ३ ७-१-३१ । ४ ३-१-८५ ।

चेदर्थे पठ्यते, अथ च दास्यति, अथ चेद्दास्यतीत्यर्थः, केचित्तु चण शब्द इत्यस्य चिजन्तस्य रूपमिच्छन्ति तत्तु न बुध्यामहे, कच्चित्–प्रश्नकालयोः, यत्र–यस्मिन् स्थाने सदा बाधका, नह–प्रत्यारम्भविषादप्रतिषेधेषु, नहि–अभावे, हन्तप्रीतिविषादसम्प्रदानेषु, माकिस् नकिस्–माङ्पूर्वोऽसन्तपूर्वश्च कायतेर्लिङीति इति आलोप नञर्थेत्यस्याभावे च एतौ द्वावपि निषेध वर्जने च, वाव त्वाव–सम्बोधन, न्याव यावत् त्वावत् न्यावत् एते सर्वेऽप्यनुमानप्रतिग्राह्येपसमाप्तिषु, त्वै तुवै न्वै नुवै एवे वितर्के पादपूरणे च, रै–दान दीप्तौ च, वै–स्फुटार्थे, शृणोति वातिवषटिभ्यो बाहुलकाद्डटि प्रत्यये यथाक्रम श्रौषट्वौषट्वषट्स्ते च श्रौषट् वौषट् वषट् एते त्रयोऽपि हविर्दानादौ, षट् षाद् वेट् एत त्रयः प्रयासायां, पाट् प्याट् एतौ सम्बोधने, फट् हुम्फट् छंवट्–भर्त्सनसम्बोधने, अथ–अथोऽर्थे, आह्–कोपपीडयोः, स्वधा–पितृबलौ, स्वाहा–हविर्दाने, चन–अप्यर्थे पादपूरण च, हि–हेत्ववधारणे च, अथ–मङ्गलाऽनन्तराऽऽरम्भप्रश्नकार्त्स्न्येषु, अथो–अन्वादेशादौ, नो नोहि–एतौ निषेध, भोम् इत्यादयो नव सम्बोधन, ही–विस्मये, हे इत्यादयो दश मनुष्यसम्बोधनयोः । ननु–विरोधोक्तौ, अनन्वयादौ च; नुकमादयः पञ्च प्रत्याख्याने, कम्–प्रश्ने, हुम्–भर्त्सने, कुम्–प्रश्ने, उम् सुम् एतौ रुषोक्तौ, हम्–रोषानुकम्पादौ, हिम्–सम्भ्रम–भर्त्सनयोः, अद्–विस्मये, कद्–कुत्सायां, यद् तद्–इत्वर्थवाक्योपन्यासयोः, इद्–एवार्थे ईषदर्थे च, चिद्–प्रभावधारणयोः, किद्–भर्त्सनपादपूरणयोः, स्विद् विमर्श–प्रश्नयोः, उत–विकल्प, बत–खेदानुकम्पासन्तोषविस्मयामन्त्रणेषु, इव उपमावधारणयोः, तु विशेषणपादपूरणयोः, नु(शब्दो)वितर्कोपमानयोः, यथ वाक्यान्तरोपक्रमे, कथन–कथ्यर्थे, किमुत–वितर्के, किल–सम्भ्रमवार्तयोः, किं किल–निपातद्वोकार्थेषु किलार्थे च, किंस्विद् उतस्विद् आहोस्विद् इति त्रयोऽपि प्रश्नवितर्कविकल्पेषु, अहह अद्भुतखेदयोः, नहवै नवै इत्येतौ प्रत्याख्याने, नवा–विभाषायां, अन्यत्–अन्यार्थे निपातनाच्च तकारः, अन्यत्र अन्यपूर्वोऽयतेरातो रोऽश्वावाम इति रे, अन्या विकल्पकाले, तपतेः क्विपि ' अपोसीनां पोषः " इति पर्यस्य मत्वे, तत् तप् एतौ प्रतिग्रहे, अथकिम्–अङ्गीकार, विषु–नानात्वे, पट्–पटुत्वे, पत्तु–स्वयर्थे, खलु–निषेधवाक्यालङ्कारजिज्ञासाऽनुनयनिश्चयेषु, यदिनाम–पक्षान्तरे, यदुत–पराशयप्रकाशनादौ, प्रत्युत–पूर्वोक्तवैपरीत्ये, यदूपूर्वाद्वेतेरिदिति डाप्रत्यये यदा देशापचिक्रमे, यथा कथा चति अनादरेऽपेत्यर्थः यथः " यथर्पूयेति " च भाष्ये च यथा–चाम्यतावीप्सा–

[1] भोस् भगोस्, अघोस्, अहो, हहो हे अहो आहो उताहो इत्यादयः । [2] १–१–१५ ।
[3] ऋ. २११ ।

पर्यन्तविहविसारस्यार्थेषु, पुत्-कुत्सायाम्, ध-हिंसाप्रातिलोम्ययोः, यावत्तावत् एतौ मर्यादावधारणेषु, दिष्टा-प्रीतिसेवनयोः समाचनप्रातिलोम्ययोर्वा, मर्या-सीमबन्धे, ग्राम-पीडायाम्, नाम-प्रकाश्यसम्भाव्यक्रोधापगमकुत्सनेषु, स्म-अतीते पादपूरणे च, इति ह पुराभुतौ, सहादयः पञ्च-सहार्थनिर्देशनिषेधनवाक्यपादपूरणेषु, ईम्-संभ्रम प्रमाणानुमानेषु, सीम्-अभिनवम्यावहरणामर्षपादपूरणेष्वित्येके, कीम्-अभ्यन्के, आम्-प्रतिवचनावधारणयोः, आम्-स्मृतिखेदयोः, इति-एवमर्थे १, आद्येऽर्थे २, हेत्वर्थे ३, प्रकारार्थे ४, प्रत्यक्षानुमति ५, ग्रन्थसमाप्तौ ६, पदार्थविपर्यासादौ ७ च, अथ अड अट एते त्रयोऽपि भर्त्सने, धाया-निष्पत्तौ, अनुपद-अनुमाने, केचित्तान्त्वमन्ये, हन्तपरे दीर्घादि च मन्यन्ते; रशोम्-कुत्सायाम्, अत्राप्रभृतयश्चतुर्दशाऽपि पूरणभर्त्सनाऽऽमन्त्रणनिषेधेषु ।

'अधण्तस्वाद्याशसः' ।-१-१-३२॥ तस्वादयः प्रत्ययास्ते च प्रकृत्यभिनामाधिन इति तैः प्रकृतिरनुमीयते, तस्यार्थेते विशेषणत्वेनाऽऽभीयन्ते, ततो "विशेषणमन्तः" इति तदन्तविज्ञान भवतीत्याह तदन्तमिति, किञ्च प्रत्ययस्यैवाऽव्ययत्वेनाऽऽश्रुतत्व इत्यादौ प्रत्ययमात्रास्यपदार्थत्वेन नामत्वे स्याद्युत्पत्तौ 'प्रत्येयः प्रकृत्यादेः' इति वचनात्प्रत्ययमात्रस्यैव प्रकृतित्वेन तदन्तत्वे पूर्वस्य च चार्थेऽभिव० " इति पदत्वे "अपूर्वोऽध्यवाम्वाद्य " इति विकल्पप्रसङ्गः तस्मात्तदन्ता समुदाय एवाऽव्यय न प्रत्ययमात्रमिति, अश्रुतत्व इति । अत्र सम्बन्धेकवचनस्य लुप्, यद्वा 'अतोऽमोऽऽऽसत्र' इत्यनेन। धा, प्राङ् प्राच्या दिशः प्राच्यां वा दिशीति, दिक्शब्दाद्दिग्देशकालेषु " इति धा तस्य " लुगञ्चेः " इति लुप्, यथासम्भवं च "स्यादेर्गौणस्य०" इति कीलुक्, ततः सिद्धसिकीनां "अव्ययस्य०" इति लुक् एतद्विशेषणस्य च क्रियाव्ययविशेषण इत्यनेनाऽव्ययविशेषणत्वान्नपुंसकत्वं भवति, एवं दक्षिणादिशब्देभ्यो विशेषणतद्विभ्यः सिकसिकयन्तेभ्योऽनसादयो ज्ञेयाः, यथासम्भवं च "सर्वादयोऽस्यादौ" इति पुंवद्भावः, नवरं उपरि उपरिष्टादित्यत्र नामग्रहणे लिङ्ग विशिष्टस्याऽपीति न्यायादूर्ध्वशब्दस्याऽप्युपादेयः । बहुधा इति बहवो वदति प्राधिन्नादौ "बहसंख्याल०" इति धम्, बहवो ददतीति संख्येकार्थो० " इति शस्। पथि द्वैधानीत्यत्र धनानीति ज्ञेयाः, संशयद्वैधानीत्यत्र च वचनानीति ज्ञेयाः।

'धत्तस्याम्'। १-१-३४॥ आमिति पष्ठीबहुवचनस्य, तद्वितस्य, परोक्षास्थान-

१ ७-४-११२ । २ ७-४-११५ । ३ ३-३-११ । ४ २-१-३९ । ५ ७-१-११९ ६ ७-३-११२ । ७ ७-२-१२१ । ८ १-४-१५ । ९ ३-२-७ । १० १-१-६१ । ११ ७-१-१५ । १२ ७-१-१५१ ।

निष्पन्नस्य चाऽविशेषेण त्रयाणामपि ग्रहणं प्राप्नोति, द्वयोरेव चेष्यतेऽतोऽतिव्याप्त्य-पहृतत्वादलक्षणमेतदित्याह–वक्तसीति, वक्ष्यतस्त्वुपलक्षण ततो "धातोरनेकस्व-रात्॰" इत्यादिना विहितस्याऽप्यामो ग्रहण तेन पाचयाञ्चकृषेत्यादौ टाळोपे पद-त्वादनुस्वारः सिद्धिः, न चोपलक्षणात् षष्ठीबहुवचनस्याऽपीति ग्रहण किं न स्यादिति वाच्यम् ? यतो य आम् आमेव भवति स एव गृह्यतेऽय तु नाम् साम् वा भवतीति, यद्वा वचसी अविभक्ती तस्मादव्ययादामोऽप्यविभक्तरेव ग्रहण ततो दरिद्राञ्चकृवद्भि-रित्यत्र कम् स्याननिष्पन्नस्य पचतितरामित्यत्र "किं त्यादेऽव्यय॰" इति विहितस्य च ग्रहणं भवति, यत एतावेन तयोर्वचस्योरविभक्तित्वेन हितावित्ति व्युत्पत्त्या तद्धि-तावित्यभिधीयत अस्मिन्न व्याख्याने "किं त्यादेऽव्यय॰" इत्यनेनैवम सूत्रं सम्पूर्णं गृह्यते, आदि शब्देन तु धातोरनेकस्वरेति विहितस्य कम् कानस्थानस्येति । तथा दरिद्राञ्चकृवद्भिरित्यत्राऽऽमन्तस्याऽव्ययत्वेऽपि कुत्सितार्थे "अव्ययस्यकोद् च" इत्यक् न भवति, अपरिसमाप्तार्थत्वेनाऽऽमन्तस्य कुत्सितायथासम्भवादिति । उच्चै-स्तरामिति–कश्चित्स्वार्थेऽतिप्रकृष्टे चाऽर्थे तरप् ।

'क्त्वातुमम्' । १-१ ३५ ॥ क्त्वेति ककारोऽसन्देहार्थः, अन्यथा त्वा इति निर्देशे सन्देहः स्यात्, किमयं क्त्वा प्रत्ययस्य निर्देशः किंवा विदित्व गोत्व यष्टाभिस्त्वा विदितगोत्वा इति त्वप्रत्ययस्याऽऽमन्तस्येति । न द्वितीयैकवच-नस्येति—द्वितीयैकवचनान्तस्याऽव्ययत्वे–"अव्ययस्यकोद् च" इत्यक् स्यात्, तथा त्वयस्य दर्शन कुर्वित्यादौ 'तृन्मुदन्त "इत्यनेन षष्ठी न स्यात् । नन्वेवं यस्त-न्यपवन्यमन्तस्याऽव्ययत्व कथ निषिध्यते ? सत्यं, द्वितीय च तदेकवचन चेति विग्रहे तस्याऽपि संग्रहः, द्वितीयापेक्षया द्वितीय चैकवचन यस्तन्यपवन्योरमिति । स्वादुङ्कारमिति–स्वादुनः करण पूर्वमिति स्वाद्वर्थादसीर्घाद् " इति रम्यम् । यावज्जीव-मदादिति यावज्जीव्यत इति णम्, अदादित्यत्राऽन्यपवन यस्तनीति यस्तनी न भवति, नाऽन्यपवनप्रष यासस्योरिति निषेधात्, किंतु भूतमात्रेऽद्यतनीत्यनेनाऽद्यतनी ।

'गतिः' । १-१-३६ ॥ अदः कस्यति–अग्रहाजुपदक्षऽन्तरद इत्यनेनाऽदः-शब्दस्य गतिसंज्ञा ।

'अप्रयोगीत्' । १-१-३७ ॥ प्रयोगः–शब्दस्योच्चारण सो'स्याऽस्ति प्रयोगी, न प्रयोग्यप्रयोगीति संज्ञिनिर्देशः, इदिति संज्ञति । लौकिक इति–लोकस्य ज्ञाता 'सार्व-सर्वेभ्योऽभ्यावे" इत्यनेन इकण् लौकिकः ।

---

१ ३-४-८६ । २ ७-१-८ । ३ ७-२-११ । ४ १-१-१ । ५ ५-४-७१ । ६ ६-४-१५

'अनन्तः पञ्चम्याः प्रत्ययः'। १-१-२८ ॥ न विद्यतेऽन्तशब्दो वाचको यस्य स तथा, पञ्चमीति प्रत्ययोऽभिधीयते स च प्रकृत्याविनाभावीति तेन प्रकृतिराक्षिप्यते तथा चार्थे इत्याह पञ्चम्यर्थोविश्लाघि, शब्द इति स च शब्दो वर्णस्तत्समुदायो वा भवति, शब्दत इति कृत्वा शब्द शब्देनोच्यत इति । ननु नायमस्य प्रत्ययत्वे को दोष इति ? सत्यं, अनन्तदित्यादौ नागमेन भाव्यतो सन्धित्वाभावदन्तौ प्राक् "अन्तर्भावो" इत्यत्रागमो न स्यात्, अथ तन्मध्यपतित-स्तद्ग्रहणेन गृह्यत इति भविष्यति तदस्य न्यायस्याऽनित्यत्वज्ञापनार्थमन्तग्रहणं, तथाऽ-न्तग्रहणाभावे लाङ्गलघ्यपनिः इत्यत्र "चर्मिवर्मि॰" इत्यापनिञिकागमे तस्य प्रत्ययत्वे "स्यादीस्त्रौ" के इत्येनेन ह्रस्वः स्यादिति तथाऽन्तग्रहणाभावे पञ्चम्यर्थाद्विधीयमा-नत्वेनाऽऽगमस्याऽपि प्रत्ययत्वे प्रत्ययाप्रत्यययोः प्रत्ययस्यैवेति न्यायात् प्रेम्नमि-त्यादावेव "योर्चर्यवाम्व॰" इत्यनेन चत्वं स्यान्न तु मधुवाङ्मा इत्येनेत्यादौ, "न-नामेरे इति पञ्चम्यन्ताद्विधीयमानस्य प्रत्ययत्वाभाव इति । अपरं च "भवतश्च॰" इत्यत्र मधुद्वेषिस्य इत्यस्य प्रत्ययाप्रत्यययोः इति न्यायेन नागमस्य प्रत्ययत्वे तस्यस्यैव ग्रहणं स्यान्न तु भन्त्रमोचनप्रविहर्ययोरित्यस्य, तस्मादन्तग्रहणमवश्यं विधेयमिति । उभयथाऽपि पञ्चम्यां सम्भवन्त्यां "परः" इति परिभाषया प्रत्ययो नियन्त्रणत प्रकृतः पर एवेति, तर्हि स्वरात्सूर्नो नोऽन्त इत्यपि कथं न लभ्यत इति चेत् ? सत्य, नो र्मोऽन्तस्य" इत्यत्राऽनुवित इति भणनात्, अन्त्यपोपान्त्यत्वाभा-वात् माम्रिरच लोपस्य नाऽस्तीति ।

'तस्यतु संख्यावत्'। १-१-३९ ॥ वत्करणाभावे कृत्रिमाकृत्रिमयोरिति न्यायात् एक द्व्यादीनामकृत्रिमाणां न स्यादिति ।

'बहुगणं भेदे'। १-१-४० ॥ वैपुल्य इति-यथा महो धन, बहु धृत भेष इति, अथ बहुगणशब्दयोर्वचनात् संख्यात्वमस्त्यन यतो भेदः परिगणनं संख्येति तदेकद्व्यादीनामिव बहुगणशब्दयोरपि लोकात् संख्यात्वसिद्धौ किमने-नाऽतिदेशवचनेन ? अतिदेशो हि अन्यत्र प्रसिद्धस्याऽन्यत्र प्रसिद्धिमापयार्थ इत्याह-बहुगणानित्यादि, लोके देकद्व्यादीनां नियतावधिभेदाभिधायित्वे संख्याप्रसिद्धिरव योग न वधति संख्याप्रसिद्धेरभाव इति ।

अथचूर्णिकायां समाप्तोऽय प्रथमः पादः ॥

---

१ ४-४-२६ । २ ६-१-१११ । ३ १-४-१४ । ४ १-१-७५ । ५ १-४-६४ । ६ ८-३-२८ । ७ ७-८-११६ । ८ ४-३-७५ ।

'समानानां तेन दीर्घः' । १-२-१ ॥ सम्यगनिति प्राणिसाहचर्यप्रतीतिरनेनेति व्यञ्जनात् घञिति घञि समानं, तुल्यं मानं परिमाणं यषां "समानस्य धर्मा०" इति समादेशे समानाः, अत्राऽनन्तरानन्तरिभावलक्षणे सम्बन्धे षष्ठी । तेनेति तृतीयानिर्देशः स्थानित्वप्रतिषेधार्थः । दण्डाग्रमित्यत्र "ह्रस्वस्य" इत्यग्रशब्दस्य पदत्वाभावे दण्डशब्दाकारस्य 'ह्रस्वस्य' इति कथं लुग् न भवतीति ? उच्यते, <u>सर्वं वाक्यं सावधारणं भवतीति</u> न्यायात् अपद इति सावधारणं व्याख्येयम्, अपद एव यत्कारो भवतीति, अथ तु वाक्यावस्थायां पदेऽपीति, तर्हि "गतिकारक" इति न्यायात् प्रायणमित्यादौ विभक्त्युत्पत्तेः प्रागेव समासे कथं न भवतीति ? सत्यं, अपद इत्युत्तरपदमपि गृह्यते उत्तरं च तत्पदं चेति कृत्वा "ते लुग्वा" इत्युत्तरशब्दलोपादिति । तत्राऽऽयुरिति–इण्गतौ 'कृवापाजि०' इति उणि आयुः, पुरुषः, प्रकृतम्, औषधम्, जीवनम्, पुरूरवः पुत्रो वा; इणोऽपि दित्युसि वा, आयु जीवितम् तस्य ऋषभ इति । "तृतीयार्मन्मयस्य गुरुर्वैकाऽनन्त्योऽपिकतृद्" इत्यत्र ऋद्वचनादृकारस्याऽपि ऋकारापदिष्टकार्यविधानात् स्त्तऋषभ इति विग्रहे स्त्तर्षभः स्त्तषिषु ऋषभ इत्यर्थः ।

'ऋलृति ह्रस्वो वा' । १-२-२ ॥ वाल ऋश्य इति ति वल् प्राणनवि वलतेषा "भर्भ०" इत्यनन्ये वा रुद् माप्ताम्य वा रुडो नाऽपि रस्य लत्वं च वालः । ऋश्गतौ प्लुतौ वा सौत्रो धातुस्तस्मात् 'ऋषिजनि' इति किति ये ऋश्यः मृगजाति, "ऋजेष्ठर्जे च" इति ऋजेः उप्रत्यये ऋजादेश च ऋजु ।

'लृत लृत ऋलृभ्यां वा' १-२-३ ॥ ऋ इति दीर्घपदुपरम भिदरवास्त्र विधानमनर्थकमिति सविशयमाहमाह–ऋ इति स्वरसमुदायो चेति यथान्तरत्वे भवभदानाह तद्धीति । त्रिरेफतुरीयमिति रफस्य तुरीयो रफतुरीयो एकस्य रफस्य चतुर्भागीकृतस्य द्वौ चतुर्थभागावित्यर्थः, द्वौ रफतुरीयावस्मिन्निति, अधिकमर्धं यस्याः अध्यार्द्धा अर्धेन वा अध्यधा स्वरस्य मात्रा स्वरमात्रा अध्यधा स्वरमात्राऽस्मिन्निस्यर्थ स्वरमात्रम् । सकलरफकारमिति, मध्यः परिपूर्णो रफ ऋकारधाऽत्र तथा । अर्धं मात्रा यस्याः साऽर्धमात्रा, स्वरस्य भक्तिभाग स्वरभक्तिः अर्धमात्रा स्वरभक्तिर्यस्य तथा ।

'ऋतो वा तौ च' । १-२-४ ॥ होतृकार इति, हातुऋकार इति षष्ठीसमासः, होतृसम्बन्धी होत्रा लिखित उच्चारितो वा ऋकार इत्यर्थः ।

---

१ १-२-१४१ । २ १-१-१५ । ३ २-१-११३ । ४ १-२-६५ । ५ १-१-१८ ।
६ उ १ । ७ ५-४-११ । ८ ५-३-११ । ९ उ ३६१ । १० उ ७२२ ।

'ऋस्तयोः' १-२-५ ॥ अथ ऋकारऌकारयोः सजातीयस्य पूर्वं प्रतिपादितत्वा-त्समानानां तेनेत्यनेनैव द्विमात्रऋकारः सेत्स्यति किमनेन [1] न च वाच्यम् ऋऌ ऋतम् इत्यत्र ऌकारस्य स्थानित्वाद्दीर्घत्वे प्रत्यासन्नत्वात् ॡकारः स्यादिति । यतो द्वयोः स्थानित्वमुक्तं तत्र ऋकारमेव स्थानिनमाश्रित्य दीर्घे क्रियमाणे प्रत्यासत्त्या ॠकार एव भविष्यति । सत्यं स्यादेवम् यदि ऋकारस्यैव स्थानित्वे किञ्चिन्नियामकं स्यात् । यावता द्वयोः षष्ठीतृतीयानिर्दिष्टयोः स्थानित्वमिति पूर्वं परं वा ऌकाररूपं स्थानिनमाश्रित्य दीर्घे क्रियमाणे ॡकारोऽपि स्यात्, ॠकार एव चेष्यत इत्येतदर्थमस्याऽऽरम्भ इति ।

अत्र च प्रकरणे ऋकारस्य ऋकारे दीर्घत्वात् पितॄषभः, ह्रस्वत्वात् पितृ ऋषभः, 'ऋतो वा तौ च'। इत्यनेन ऌ ऋ इत्यादेशद्वयात् पितॢषभः पितृषभः इति रूपचतुष्टयं सिद्धम् । ऌकारस्य ऌकारे दीर्घत्वात् क्लृकारः ह्रस्वत्वात् कऌऌकारः, ऌसन्धाभावात् क्लृकार इति रूपत्रयं सिद्धम् । ऋकारस्य ऋकारे ऌकारस्य ऌकारे दीर्घत्वह्रस्वत्वमतान्तरप्रकृतिभावाक्लृप्तीनि त्रीणि रूपाणि । तथा ऋकारस्य ऌकारे " ऋऌती " ति ह्रस्वत्वात् विकल्पपक्षे मतान्तरेण प्रकृतिभावात् " ऋतो वा तौ च " इत्यत्र मतान्तरेण रूपस्थानित्वात् ऌ ऌ इत्यादेशद्वयात् " ऋस्तयोः " इति ऋविधानाच्च रूपपञ्चक । एवं ऌकारस्य ऋकारे " ऌऋती " ति ह्रस्वत्वात् विकल्पपक्षे मतान्तरेण प्रकृतिभावात् ऌ र इति ऌभावात् " ऋस्तयोः " ऋभावाच्च रूपचतुष्कं तथा ऋकारस्य ऌकारे " ऋऌती " ति ह्रस्वत्वात् " ऋतो वा तौ च " इत्यनेन ऌ ऋ इत्यादेशद्वयात् " ऋस्तयोः " इति ऋ इति विधानाच्च रूपचतुष्टयम् । तथा ऌकारस्य ऋकारे " ऌऋती " ति ह्रस्वत्वात् ऌ र् विधानात् " ऋस्तयोः " इति ऋविधानाच्च रूपत्रयम् ।

' ऋणे प्रदशार्णवसनकम्बलवत्सरवत्सतरस्यार् '। १-२-७ ॥ ऋणमिति मतावेवेति अर्पोतीति के ऋच्छ गतौ च प्रापणे चेत्याभ्यां कर्तरि कर्मणि वा क्ते "ऋह्री०" ति तस्य नत्वे, आभ्यामेव 'पृथीडी इति क्विति जप्रत्यये ऋणम् प्रमथमि त्युपकरणं तन प्रकृष्ट प्रवृद्धं वा ऋणमित्यपि । तत्र ऋणान्यस्येति यथानुपूर्वीविज्ञानार्थं व्युत्पत्तिमात्रमेतद्यावत् संज्ञाशब्दोऽयम् । यद्यपि परत्वात्सर्वत्राऽऽर् प्राप्नोति तथाप्य रएव बाधक आरादेशो न ह्रस्वस्येत्याह–समानानामितीति ।

'ऋते तृतीया समासे' । १-२-८ ॥ अर्तेः क्ते ऋह्री ' इति नत्वविकल्पे

---

१ एवं [illegible] । २ १-२-४ । ३ १-२-५ । ४ १-२-२ । ५ [illegible] । ६ [illegible] ।

ऋतश्चेति ऋतयातोः क्तरि के वा ऋतः, तस्मादानन्तरं कर्मधारये निमित्तनिमित्तिनोरेकः समासोऽस्त्येवेति कुतो नाऽऽरादेशः ? उच्यते, ऋतकृतशब्दावयवस्य ऋतशब्दस्याऽनर्थकत्वेनाऽनर्थकत्वाभावाऽऽरादेश इत्याह–परमतकृत इत्यत्रस्थित्यादि। सुखार्थ इत्यत्र तृतीयान्तस्य सुखशब्दस्य " ओमाङि " इत्याकारलोपे प्रत्ययाश्रितत्वेनोभयपदाश्रितत्वेन वा बहिरङ्गः, प्रकृत्याश्रितत्वेनैकपदाश्रितत्वेन चाऽन्तरङ्गे कर्तव्येऽसिद्ध इत्याकारलोपे सति चस्य पदान्तत्वाभावाच्च दत्वम् ।

'ऋत्यारुपसर्गस्य' । १-२-९ ॥ उपसृत्य धातुमर्थविशेष सृजतीति क्रिया यपि न्यङ्क्वादित्वात्कत्वे उपसर्गः । सर्वापवाद इति–पूर्वसूत्रविहित आरादेशः " ऋवर्णस्य० " इत्यर एव बाधको न ह्रस्वस्य, अयं त्वारो ह्रस्वस्य च सर्वस्य प्राप्नुवतो बाधक इत्यर्थः । प्रार्छतीति–ऋच्छे' अर्तेर्वा " श्रौति० " इति ऋच्छादेशः येन धातुनति यथैव प्रणर्स इत्यादौ प्रशब्दस्योपसर्गत्वाभाव " उपसर्गा० " इत्यनेन नासिकाशब्दस्य नसादेशो न प्राप्नोति ? उच्यते, यत्रोपसर्गत्वं न सम्भवति, तत्रोपसर्गत्वेन प्रादयो लक्ष्यन्ते, न तु सम्भवत्युपसर्गत्व इति । अत्र च नसशब्दनकारस्य " नसस्य " इति णत्व, नन्वेवं प्रभृता ऋच्छका यस्मात्स प्रर्च्छक इत्यादौ प्रादित्वेन प्रशब्दस्योपसर्गत्वादार् प्राप्नोति ? नैवम्, प्रशब्दोऽत्र गतार्थेऽन्वर्मान्यप्रवर्तमानो णकप्रत्ययस्यार्थ कर्तारं विशिनष्टि, न ऋच्छेर्धातोरर्थमित्येतदातु सम्बन्धाभावात् एव प्रत्यनुपसर्गत्वमस्योच्यत इति ।

'नाम्नि वा' । १ । २ । १० ॥ नामावयवयोगाद्धातुरपि नाम तस्मिन् एवमग्रेऽपि, वा नाम्नीत्यत्र द्रष्टव्य नाम्नीत्यनेन ऋकारादिर्धातुःसामानाधिकरण्येन विशेषयितुं न शक्यत इत्यवयवद्वारेण ऋकारादिसमुदायो धातुर्नाम्नीत्यनेन विशेष्यत इत्याह–नामावयव इति ।

'ऐदौत्सन्ध्यक्षरैः' । १ । २ । १२ ॥ नन्वत्र त्रिमात्रचतुर्मात्रयोरादेशिनोः स्थाने कथ द्विमात्रावेवाऽऽदेशौ भवतः, यावता स्थानी ' आसन्नः " इति न्यायात्त्रिमात्रौ चतुर्मात्रौ च प्राप्नुत इति ? सत्यम्, सन्ध्यक्षरैरिति बहुवचन द्विमात्रादेश प्रतिपत्त्यर्थं, अन्यथैकवचनेन निर्देशं कुर्यात्; एतदर्थं च लघुपसर्गनिवृत्तिमपि करोतीत्याह सन्ध्यक्षरैरिति ।

' ऊटा ' । १ । २ । १३ ॥ पदादिसमुदायात्तुल्यत्वादपि " आसन्नः " इति न्यायादौदेव भवतीत्याह–औकारश्च इति । लौ' धौरिति–अकारस्याप्युदाहरणमिदमेव,

१ १-२-१४। २ १-२-६। ३ ८-१-१ ८। ४ ७-१-११३। ५ १ १-१५। ६ ७-४-१२ ।

हृस्वाभ्यामबनन्ताभ्यामदन्ताभ्यां वा । ऊधमाचष्टे पयमाचष्टे "णिष्ठेतुकम्" इति णिचि क्रियादिः पूर्ववत् ।

'प्रस्यैधैष्योढोढ्यूहे स्वरेण' । १ । २ । १४ ॥ अवर्णस्य स्वरेणोऽनुवर्तते तस्य च प्रथमान्तेन सामानाधिकरण्याभावेन अवयवावयविसम्बन्धे षष्ठीस्याह–प्रशब्दसम्बन्धि नोऽवर्णस्येति, प्रैष इति ण्यकारपूर्वको व्यापार एव प्रेषोऽपि, प्रैष्यः प्रेष्यश्च दास उच्यते, प्रौढो हस्तिनः पश्चात्तदनुप्रवेशः प्रकृष्टतर्कश्च, अपोढः अपोहतेस्सेति के रूपं निराकृतेऽर्थे । प्रेव इति–ई इतिधातोः प्रापविस्सेति, ईष्क इतिधातोः प्रैति स्मेति, ईङ्ग गतावित्यस्य प्रेयत स्मेति वा गत्यर्थेति क्त रूपं भूतार्थे प्रकर्षे गतार्थे च, प्रोत इति वेगेधातोः प्रोयते स्मेति कर्मणि के भावि च, ऊयेङ् तन्तुसन्ताने इत्यस्य प्रोय्यते स्मेति के यलोपे च, ठसंज्ञक इत्युक्तः प्रोयते स्मेति क्ते च सिध्यति, यदा वा ईष्य इति क्रियते तदापि "ओमाङि इत्यस्य विषयेऽपि "उपसर्गस्याभिन०" इत्यस्य प्राप्तिरेव, उभयोः स्थाने इति न्यायेन भावई इत्येतयोरुभयोः स्थाने निष्पन्नस्य यतो यदा आङा व्यपदेशस्तदा ' ओमाङि " इत्यस्य, अन्यथा "उपसर्गस्य० " इत्यस्येत्यत उक्तं यस्मिन् प्राप्त इति, प्राप्त एवेत्यवधारणव्याख्यानात् ।

'स्वैर स्वैर्यक्षौहिण्याम्' । १–२–१५ ॥ स्वैर यथा समभागौयवनिष्पन्नोऽपि सम इत्यवयवधर्मेण समुदायस्य व्यपदेश एवमिहापि स्वैरावयवयोगात्समुदायोऽपि व्यारम्भः स्वैरः, स्वैर्यवयवयोगात् स्वैरी, अक्षौहिण्यवयवयोगादक्षौहिणी, ततः स्वैरश्चाऽसौ स्वैरी च, स चाऽसावक्षौहिणी चेति कर्मधारयः, यथा मर्यादाभिविधी च यः इत्यत्र समुदायोऽवयवधर्मेण मर्यादावयवत्वान्मर्यादा, अभिविध्यवयवत्वाद् भिविधिरिति व्यपदिश्यते, ततो विशेषणसमासो भवति, समुदाये च स्वैरस्वैर्यक्षौहिणीरूपे कार्यासम्भवादवयव एव स्वैर इत्यादिः कार्यभागिति सौत्रो वा निर्देशः तेनेतरेतरयोगे बहुवचन समाहारे हस्वत्व च न भवति, अथवा स्वैरस्वैरिभ्यां सहिताऽक्षौहिणी स्वैरस्वैर्यक्षौहिणीति मयूरव्यंसकादयः" इति सूत्रसान्मध्यपदलोपी समासः, एवमन्यत्राऽपि । तथाऽत्र सूत्रे विषयसप्तमी, तेन स्वैरादिषु निष्पत्स्यमानेषु योऽकार इत्यर्थः, स्वेनाऽऽत्मना ईरः स्वैरः कारक कृता इति समासः, ईर इति सामान्येन घञन्तस्य अन्तस्य च परिग्रह इत्युभयत्राऽपि कार्यं, स्वैरशब्दस्य घञन्तस्याऽप्यभावदर्शनात्मनर्थिनाप्रत्ययेन कर्माभिधानं भवति, स्वयमीरतीति पुत्रादित्वात्ता धिककिमन्वयया प्रयोगोऽयम् । एतस्यार्थमिति–अन्यथा णिनि स्वैरीत्यनिष्टं रूपमाप

१ १-४-४२ । २ तन्तुसन्ताने । ३ १-१-१४ । ४ १-२-११ । ५ ३-१-११६
६ १-१-१८ ।

। अधापामृतोऽस्यामस्तीति, इत्यर्थकथनमात्रं, अधापामृतिनीति तु विग्रहः
र्थः, अधौहिणीपूर्वपदस्यादिति णत्वम् ।

'अनियोगेलुगेवे'। १-२-१६ ॥ अनियोग-अवधारणमवश्यम्भाव इत्यर्थः ।
वेत्यत्र एवशब्दो वाक्यालङ्कारे, ये त्वनियोगेऽव्यापारणे इच्छन्तीति-ये क्षिप
ज्याः, कट कुर्वन्त्यादिव्यापारस्य तदभावे। ' ममैवोऽध्ययनेन " इत्यादि एतेषु सर्वेषु स्व
ाख्यानमेवाऽस्ति, न तु व्यापरणमिति, यदाऽध्ययन सह समासस्तदाऽध्याऽध्यन्वनैवे
र्थः-निमूलकाष कषतीत्यादाविति। " भावोस्वमिमित्तकस्यैव " इति, भवनिमित्तस्यैव
ादौव इत्यर्थः। " छेद शाकटायनस्यैव " इति प्रस्तन्याःवाक्यमित्युक्तिः। इथिर
ति-सुमूर्ष इत्यत्र वा सन्प्रत्ययस्य वा इथिः प्रवृत्तिरित्यर्थः। इहैव स्यादित्यादीनि
भिनीयप्रश्नाणि। ' यदैव पूर्वे जनने शरीरम् ' इति कुमारसम्भवः। ' रहैवकोप० '
यादि कादम्बर्याम्, अत्र रिपोर्हिरण्यकश्यपोः; ' अद्यैवाऽऽवां रण० ' इति वेणीसंहारे,
वरसेव० ' इत्यादि किरात, कुलटाऽसती, पतञ्जलि -योगस्य महाभाष्यस्य शास्त्रकर्ता
ऋषिविशेषः, सीम्नोऽन्तः-एकदेशः, अध्ययनमिति अधशब्दस्याऽध्ययस्य हितादित्वा-
समासः, मनीषा बुद्धिः, स्वे इति तुशब्दस्योकारलोप स्वे इति रूप मन्यत परः, ततः
न स्वेयोकारलोप इति परस्याऽऽशयः; तुवै, त्वे, तुवै, न्वै, इति तु ४ अवधारणार्थाः ।

' वौष्ठौ तौ समासे '। १-२-१७ ॥ अत्र सूत्रत्वात्समाहारोऽन्यथा " मोमि
र्षे० " इति स्वैरिति व्याख्या निषमः स्यात्, यद्वा पुटापुटिकवित् ओष्ठावयवयो-
ात्समुदायोऽप्योष्ठ इति प्रक्रियया कर्मधारयः। तौ चेन्निमित्तेति-एकत्रैवेति, पर
मोष्ठसौन्दर्यं यस्या इति परमौष्ठसौन्दर्या इत्यत्राऽकारलुग्भवति। विम्बाः फलं
विकारोऽवयवो वा " इमादिर्भ्योऽण्, " अधरोत्तरयोरोष्ठे नित्यमिति नन्दिस्वामी।
' ओमौकि " आ ऊढा ओढति " गतिकन्यः " इति समासः, तद्वयपात्निक्षपर्याय
स्यादिक्रिया योज्या, तथा दम्पत्योरिति मथर्याय वर्जनीयं वेति योगः ।

' उपसर्गस्यानिणेधेधोति '। १-२-१९ ॥ न इमत् अनियत्, अनियस्व

---

१ अनियमि नियमयमस्व । २ पा २-१-१ । ३ पा ६-१-८ । ४ पा १-४-१११ ।
। यदैव पूर्वजनने शरीरम् सा दक्षरोषात् सुदती ससर्ज। तदा प्रभृत्येव विमुक्त सङ्गः, पतिः पशूनाम
ाीमपरिग्रहः ॥ इति कुमार संभवे प्र स ५३ श्लो ॥ ६ जगत्सुरेन्द्रः स भवार दृष्टमिव
ण्य ७ कल्पसंख्यया। रहैवकोपादग्रस्त्रिपट सत्वभवत् निर्मितापत्यानकम् ॥ कादम्बर्यां मङ्गल
श्लो १ ॥ ७ अङ्क ४ श्लो १५ । ८ सर्ग १२ श्लो २६ । ९ १-१-११ । १० ६-२-४५ ।
११ १-२-१४ । १२ १-१-४१ ।

तदेव अनिषेधेद्, अनिषेधेन ओदेत्यादिविग्रहः, न विद्येते इषेधौ यत्र सोऽनिषेध् स चासौ एषेति द्वन्द्व इति वा ।

' वा नाम्नि '। १-२-२० ॥ उपेन्द्रीयतीति इत्यत्र धुटस्तृतीय इति न पस्य वत्वं, 'असिद्धं बहिरङ्गमन्तरङ्गे' इति न्यायात्, न च वाच्यं "स्वरस्य परे०" इति, "नै सन्धी०" त्यादिना बाधितत्वात्, यतस्तत्र परिभाषाऽपि 'असिद्धं बहिरङ्गमन्तरङ्गे' त्यिनेन न्यायेनाश्रायि एवमन्यत्राऽपि "ओमाङि" इति पूर्वसूत्रेणाऽनेन च सूत्रेण अवर्णलोपे व्यञ्जनान्तत्वे संयोगान्तत्वे "पदस्य" इति लोपोऽसंयोगान्तत्वे "धुटस्तृतीय" इति तृतीयत्वं च प्राप्नोति, तदसिद्धं बहिरङ्गमिति न्यायाच्च भवतीति ज्ञेयम् ।

' इवर्णादेरस्वेस्वरे यवरलम् '। १-२-२१ ॥ अस्वे स्वरे इत्यसमस्तनिर्देशः स्वरसम्बन्धनिवृत्त्यर्थः, तेन "यवोऽयाम्" इत्यादौ स्वरस्यैवाऽनुवृत्तिः, न तु स्वस्येति तेन राधेन्द्रीत्यादौ स्वेऽपि भवति । पित्रर्थ इति पित्रेऽयमर्थशब्देन नित्यः, "तदर्थार्थेन" इति अर्थशब्देनैव चतुर्थ्या अभिहितत्वाद्वाक्याभावे अर्थशब्देन नित्यसमासः ।

' ह्रस्वोऽपदे वा '। १-२-२२ ॥ अति पतीति, ह्रस्वोऽपि सन्धिकार्यमिति, "निर्भ्या वाद्युपसर्गेभ्यो" इति वर्तत एवेति । ह्रस्वस्याऽपीति-अयमर्थः, व्यक्तिः पदार्थः तत्र च प्रतिव्यक्तिलक्षणेन प्रवर्तितव्यं, अप्रवृत्तौ च तस्याऽनर्थकत्वं स्यादिति पर्जन्यवत्सर्वत्र फलाभावेऽपि तेन प्रवर्तितव्यं, पर्जन्यो हि पावकं पूर्णं च सर्वमभिवर्षति । पक्षाविति-ननु ऊकारस्यौकारस्य च ओष्ठ्यत्वादस्वस्वराभावेनाऽप्राप्त इति व्यावृत्त्यसङ्गतिरुक्तेति ? सत्यम्, मतान्तरेणौकारः कण्ठोष्ठ्य इत्यूकारमोष्ठ्यं प्रति अस्व इति न व्यावृत्त्यसङ्गतिरुक्तेति । नद्युदकमित्यादौ षष्ठीसमासे सप्तम्यन्तवर्तिविभक्त्यपेक्षया पदत्वमपीति, युगपत्पदत्वापदत्वे, अत्र च सूत्रेऽपद इति पर्युदासे नञः प्रसज्यप्रतिषेधात्र च विधिः सामर्थ्यप्राप्ततया गौणत्वात्प्रतिषेधस्य च विधीयमानतया प्राधान्यात्तदाश्रयमेव कार्यं भवतीति भावः । एवमिति-"नाम नाम्नैकार्थ्ये" इत्यनेन प्रथमं ङेः पश्चाद्ङसो समास सतीत्यर्थः, ततोऽनुव्यपत्तदित्यतः समासत्वेऽङ्ग् 'दीर्घङ्याब्' इत्ययेन अपवेति-स्वरादेराकृतिगणत्वादिमव्ययान्तामत्वाद्वाऽव्ययत्व मित्यर्थः, अव्ययत्वात्स्याद्युत्पत्तिरपि स एवेति । ईर्षादेरिति-ह्रस्वोऽपदे वेति च सूत्रद्वयेन रूप्यत्रेति ?, पक्षे मतान्तिरपनयनार्थं य् इति पत्रति पत्वपाचनार्थम्, इत्यस्ते

१ ७-४-११ । २ ७-४-१११ । ३ १-१-१८ । ४ १-१-६१ । ५ १-१-७६ । ६ १-१-११ । ७ १-१-७१ । ८ सचित्ता इति वेत । ९ १ १-१८ । १० १-८-७५ । ११ एतदन्तसंदर्भोदाहरणं पठितम् । १२ एतमर्थि इति पत्री पुस्तकान्तरेण ।

दधि अत्रेति २, तत्र दध्यत्रेति स्वरूपेणैकं रूप, "अदीर्घाद्वि०" इत्यादिसूत्रेण त्रतकारस्य द्वित्वे द्वितीय, धस्य द्वित्वे तृतीय, धस्य त्रतकारस्य च द्वित्वे चतुर्थ, तथा "ततोऽस्या" इति यस्य द्वित्वे पञ्चम, यस्य त्रतकारस्य च द्वित्वे षष्ठमेव दधि यत्रेति दधि अत्रेति च रूप त्रतकारस्य विकल्पेन द्वित्वे रूपचतुष्टयमित्येव दश रूपाणि ज्ञेयानि। तथा नदी एषेति सन्ध्योर्यत्वे नद्येषा १ अत्राऽदीर्घा० इति विकल्पेन दस्य द्वित्वे नद्द्येषा २ "ततोऽस्या" इति यस्य द्वित्वे नद्य्येषा ३ ह्रस्वत्वे नदि एषा ४ इवर्णात्परतो यकारे नदी येषा ५ मतान्तरेण प्रकृतिवद्भावे नदी एषा ६ इति षट् रूपाणि । इवर्णोवर्णाभ्यामेव च परतो यकारवकारौ स्त्येते न तु ऋवर्णऌवर्णाभ्यां परतो रस्थानिति ।

'ऋस्तोऽध्याप्' । १-२-२३ ॥ रायैन्द्रीति, इन्द्रो "देवता" ऽस्या इत्यपि ऐन्द्री पूर्वदिक्, पूर्वत्स्थान भ्रियते स्वन रूपणाऽऽत्मानेनेति "भ्यादिभ्यः" इतिक्तौ धृतिः सन्तोषस्तया धृतिरिति "कारकं कृता" इति समासः, रामो धृतिर्धरणमिति कृतीति षष्ठीसमासो वा ।

'य्यक्ये'। १-२-२५ ॥ गव्यमिति गोशब्दस्य युगादिपाठे हितार्थे तदन्तानपि तस्माद्यप्रत्ययार्थः, तेन सुगव्यम् अतिगव्यम् इत्यादावापि "तदर्थे-युगादेर्यः" इति यः सिद्धः । उपोयत, औयत इति रूप, वेञ्-तन्तुसन्ताने इत्यस्य येयः, उंद् ञुड् इत्यस्य च कर्मणि, स्वरजन्यायप्रत्यये ओकारागमाभावादेशाभावे कर्थं शरव्यमित्यादिरूपाऽऽह शारव्यमितीति ।

'ऋतोरस्तद्धिते' । १-२-२६ ॥ ननु कार्यमित्यत्र परत्वात् व्यमित्यत्र णोपदत्वात् वृद्धिरेव भविष्यति किं तद्धितग्रहणेन ? सत्य, अत्र तद्धितग्रहणं विना बाभ्रव्यात् इभ्रव्यात् इत्यनयो रत्व स्यात्, ननु परिसर्येत्यत्राऽपि प्राप्नोति । न तत्रा ऽन्यदपि वक्तु शक्यं स्वपोऽधिकार मग्रहण गुणार्थमिति ।

'गवोतः पदान्तेऽस्य लुक्' । १-२-२७ ॥ यद्यपि पदान्त इति स्यधिके रपमकारस्य पदोतम सम्भवति तथाप्येदोतोरेव कर्तव्यम् ।

'गोनाम्न्यवोक्षे' । १-२-२८ ॥ इत्यत्राऽकारलोपबाधनार्थमवादेशविधानात् अकारस्य च पदान्त इति च विशेषण गवाक्ष इत्यत्राऽपदान्तत्वादकारस्य लोप प्राप्तिरेव नाऽस्ति, कुतस्तदपवादोऽवादेशः सम्भवति ? किञ्च, "एदोतः" इत्यत्रैव सूत्रऽ

---

१ १-२-१ १ । २ ५-१-११ । ३ ७-१-३ । ४ निवहम्म् इति पेपः । ५ १-२-२१ ।

स्येत्यस्मिन्नेव सूत्रांशेऽकारस्य ' नामसिद् "[1] इति पदत्वे, "एदोतः पदान्ते"[2] इत्यनेन लोपप्राप्तिर्नाऽन्यत्रेत्येदोतोरेव पदान्त इति विशेषणमिति ।

' गोर्नाम्न्यवोऽक्षे ' । १-२-२८ ॥ गोर्नाम्नि संज्ञायामिति, सा च समुदा येनैव गम्यते नाऽवयवैरित्याह गम्यमानायामिति ।

' स्वरे वाऽनक्षे ' । १-२-२९ ॥ न अक्षोऽनक्ष इति प्रसज्यप्रतिषेधोऽयं, पर्युदासे हि विधिः प्राधान्यात् प्रतिषेधस्य तु सामर्थ्यप्रापितत्वात् गोऽक्षसदृश इत्यादावनक्ष- विधिरेव स्यात्तदाश्रितः प्रतिषेधः, प्रसज्ये तु प्रतिषेधस्य प्रधानत्वादक्षादिसमुदाय स्थेऽप्यवयवेऽक्षाश्रितः प्रतिषेधः सिध्यतीत्याह–सर्वेस्वर इत्यादि, ओत इत्येवेति, चित्रा गावो यस्य स चित्रगुः पुंवद्भावो ह्रस्वत्वं च, ततश्चित्रगवेऽयं चित्रग्वर्थं इति, अत्र ओत इत्यनुवृत्तिमन्तरेण ह्रस्वत्वे कृते एकदेशविकृतोऽप्ययं गोशब्द एवेत्यत्रा- ऽपि स्यादित्यर्थः ।

' इन्द्रे ' । १-२-३० ॥ स्वर इत्यस्याऽधिकारे, इन्द्रे इति, तदन्तादादाविति चकर्म्यं, गवेन्द्रयज्ञ इत्यादावर्थे केवले च व्यपदेशिवद्भावाद्भवति ।

' प्लुतोऽनितौ ' । १-२-३२ ॥ अतीति नाऽनुवर्तते, इति प्लुतवर्जनवैयर्थ्या- दित्याह–इति प्लुतस्यादि । असन्धिरिति–न विद्यते सन्धिर्यस्येति बहुव्रीहिणा व्या ख्येय, एष उदाहरणं, देवदत्त ३ अत्र न्वसि, "दूरादामन्त्र्यस्येति"[3] प्लुतः, आमन्त्र्य मो देवदत्तेति कस्यचिदाह्वयस्याऽन्त इदमामन्त्र्यपदं द्रष्टव्यं, वाक्यान्ते प्लुतस्य विधा नादिति ।

' ई३वा ' । १-२-३३ ॥ लुनीहि३ इति, " क्रियाशी प्रैषे "[4] इति प्लुतः, केन- चित् कश्चित्लुभिनोमीद ' स पृच्छके प्रत्याह चिनुहि३ इदमिति अत्र हेः प्रभाव्यमान इति प्लुतः । वदा३ इति, यदङ् कान्तौ वटीत्यपि वदाऽत्र प्लुतोऽपि छान्दसः ।

' ईदूदेद् द्विवचनम् ' । १-२-३४ ॥ अग्नी इति इत्यादौ दूरादामन्त्र्यस्य इति प्लुतः । तवे इति, ननु यथा स्वरे परे सन्धिकार्यनिषेधस्तथा पूर्वदेशस्थितेऽपि किं नेति ? सत्य, सप्तम्या निर्दिष्टपूर्वस्य इति न्यायात्स्वरापेक्षया पूर्वदेशव्यव स्थितस्यैव ईदादेः सन्धिनिषेधो नतु पूर्वस्थिते स्वरे, यद्येवं यत्र परत्र स्वरो भवति तवे आसाते इति तत्र पूर्वेणाऽपि सह सन्धिप्रतिषेधः प्राप्नोतीत्यत आह–अत्यासन्नेरित्यादि, अयमर्थो यस्मिन् सति यद्भवति तत्तस्य निमित्तमिति परस्वराश्रितत्वात्प्रथमं यस्वस्य

---

१ १-१-३१ । २ ७-४-९२ । ३ ७-४-९९ । ४ ७-४-९ ५ ।

तद्वत् अपादेशस्य च निषेधस्ते एव च परस्परस्य प्रत्यासन्नं यत्तु परस्परमन्तरेणाऽपि भवतीति न तत्स्वरनिमित्तं ननु प्रत्यासन्नं चेति प्रत्यासत्तिन्यायात्तन्निमित्तकस्यैव कार्यस्य निषेधो नाऽतन्निमित्तकस्येति । केचित्तु इति–जयादित्यप्रभृतयः । भाष्यस्थेने त्यादि–भाष्यकारवार्तिककारयोरसंमतत्वाच्चेति । अन्ये त्विति–उत्पलादयः । द्यौश्च पृथिवी चेति पृषोदरादित्वात् रोदसि इदन्त आदेशस्ततो द्विवचनम् ।

' अदो मुमी ' । १–२–३५ ॥ अदसो मुमी इति विग्रहो नत्वमुष्य मुमी इति विग्रहः प्राप्नोति, कथमदस इति ? सत्य, अविवक्षितार्थस्य प्रायोगिकस्याऽदस् शब्दस्याऽत्र प्रयोगः, तत्र तु सार्थको गृह्यते, इत्यदः शब्दसम्बन्धिकार्याभावेऽदस इति भवति । द्वित्वाभावे तु स्वैरादिवद्वचनस्यैव ग्रहण्य, द्वन्द्वत्वाद्वा समाहारेऽपि न द्वन्द्वः । अम्यन्तेति–अम् गतावित्यतो भावे घञि आमः सोऽस्याऽस्ति इन् ।

' चादिः स्वरोऽनाङ् ' । १–२–३६ ॥ अनाङित्यत्र पर्युदासाश्रयणेन सदृशग्रहणाच्चादिना स्वरस्य विशेषणाच्चदन्तत्वासम्भवात्सामानाधिकरण्यालाभात् केवलस्य ग्रहणमित्याह–आङ्वर्जितश्चादिरव्ययसंज्ञः स्वर इति । वृत्तौ तु द्वितीयमुदाहरणम् । अ अपेहि इत्यादौ अ इ उ ओ शब्दा अहोशब्दार्थे, इ–खेदे, उ–अवमानां, ऊ इति अन्यायवचने, आ एव किल मन्यसे इति आकारो वाक्यालङ्कारं वाक्यार्थविपर्ययं वा द्योतयति, उच्यते–पीडयते धीयादिवस्त्यननेति “ व्यञ्जनाद्घञि ” ऊत्, सोऽस्मिन्नस्ति “ मत्वर्थीयो र ” इति र ऊत्वरः, सुपोतेर्णिग्यलि भाव ओः भाव ओभावस्तु करोति णिचि पूर्ववत्, द्यौ ओभावयेति क्रियापदमसम्बद्धं, नानु उ इति शायतेऽनेनाऽऽङ्क्षनादीति कर्मणि० ” इत्यादिना उपि नानु, अत्र नानीत्युकारनिर्देशाच “ नञनञ ” इति प्रतिषिद्धाऽपि वृद्धिर्भवति । आ उदकान्तादिति–अत्राऽऽश्रमर्यादायां तेन प्रियप्रोषाद्नुगमन स्योदकमर्यादाभाव आङा द्योत्यते । आ आर्येभ्य इति–अत्र आङभिविधौ तेन यशो गति अस्यार्याणामभिविधित्वं द्योत्यते । मर्यादाभिविधौ चेति–अवधिमता सम्बद्धोऽवधिरभिविधिरभिव्याप्तिः, अवधिमपि यो व्याप्नोतीत्यर्थः, अवधिमता सम्बद्धो योऽवधि स मर्यादा स परित्यज्य यो वर्तत इत्यर्थः । वाक्यस्मरणयोरिति–वाक्यशब्देन वाक्यार्थ उच्यते, चादीनां द्योतकत्वात्, अर्थस्यैव च द्योत्यत्वात्, न तु शब्दस्येति । आ एवं किल मन्यसे–पूर्वप्रक्रान्तवाक्यार्थस्याऽन्यथात्वद्योतनायायमत्राऽऽकारः, अन्ये तु वाक्यशब्देन वाक्यमेवाऽऽहुस्तत्र आ एवं किल मन्यसे नैव पूर्वममस्याः सम्प्रति

१ ७–२–१६ । २ उ १ ।

मन्यस इति भाष्यसूचनायाऽऽकारः प्रसज्यते यथा स्मृतेः स्थानक आकारः प्रसज्यते यतः स्मृत्यर्थो निर्दिश्यत आ एवं तु वदिति ।

'ओदन्तः'। १-२-३७ ॥ नो इन्द्रियमिति, इन्द्र-आत्मा तेन सृष्ट दृष्ट जुष्टं वा तस्य लिङ्ग वा इन्द्रियमिति, सूत्रनिपातनादिन्द्रिय, नो सदृशमिन्द्रिय नोइन्द्रियं मन उच्यते । समयपदेति-इत्यादर्थकथनं, नतु स्वेरारम्भकमिदं वाक्य, कृत्स्नस्तियोग एव स्वेर्विधानात्, गोऽश्ववदित्यत्र " अपभ्यस्ता " इत्यभ्युपगते सर्वत्रैवोक्तः पदान्त इत्यलोपः । इत्याद्यपीति-तिरस्तनमम्बराम् इत्याद्यपि स्वरादिर्नतु चादिरित्यर्थः । अहो इत्यादय इति-अ इ उ अहो इति, उत अहउ उताहो इति, आ इ उ आहो इत्यादावयामेकाचादिसमुदायस्याऽपि चादित्वात्सूत्रेणैव सिद्धत्वात्, अनर्थकमिति परस्याऽऽशयो, नवं, एकनिपातत्वाचादिषु तथैव पाठात्सूत्रेण न प्राप्नोतीति पृथग्यो मारम्भ इत्याह-अहो इत्यादय इति ।

'सौ नवेतौ'। १-२-३८ ॥ आमन्त्र्यविहितः सित्र प्रायः, अन्येन स्वरस्य व्यवधानादोकारासम्भवाच प्राप्त्यभावात्सविषयोऽनर्थकः, वेत्युक्तेऽपि विकल्पे सिद्धे नवेत्यधिकारार्थं कृतं तत्र सर्वत्र यत्र नवेति तत्राऽधिकारो यत्र तु वेति तत्र नाऽधिकार इति ।

'ऊँ चोञ्'। १-२-३९ ॥ ऊँ चेति सूत्रस्यास्त्वप्रविभक्तिकं पदं प्रक्रियालाघवार्थं, कार्यी निमित्तं कार्यमित्यय निर्देशक्रम इति कार्यिणः पूर्वोपादाने प्राप्ते ऊँ चेति कार्योपादानमसन्दिग्धलक्षणकार्यप्रत्यायनार्थं, तेन तस्यैवाऽसौ भवति तस्य चाऽभावरूपता-पत्तिविषयस्यैव ऊञोऽभवत् पक्षराद्विकल्पेन भवतीत्याह-प्रसज्यतीति, उ इति अहो इतीत्यर्थः । तत्र विकृतस्येति-विकृतस्याऽजितो विकृतो सरथां स्वरूपहानिरित्यर्थः, अयमभिप्रायो ह्रासिमानुकारो, एषा निरनुबन्धोऽपरः सानुबन्ध इति, तत्र यो निरनुबन्धस्तस्याऽऽश इत्यत्र भोक्षरादेव इष्यन नाऽपरस्य, अत एव आन्तस्य रुजतीत्यत्र भवन्तिद, अपराऽत्र सूत्र उकारप्रश्लेषात् उ उञ् ऊञ् इत्युच्चारणेन उञो विवक्षणादुच्चारणस्योञो ग्रहणादहा इत्यादौ न भवति, उपरत्र तु नास्याभयमादीर्घीभूतस्याऽपि आन्तस रुजतीत्यादौ भत्वं भवति ।

'अञ्वर्गात्स्वरे वोऽसन्'। १-२-४० ॥ ननु वस्तुतगर्भकर्मधारयात्सप्तमी, यथाऽऽमसित्युक्त यदि मकाररूपाद्वस्य स्वरूपमा मात्रा निर्दिश्यते तदाऽऽस्यवविधानमनर्थकं स्यात्, अथ उम्रूपस्य स्थानिनो निर्दिश्यते तदिति चेत् ? सत्यं, एवं सत्युम

१ भ्रुक्तो [illegible] [illegible] । २ १-१ ११ ।

एव निवृत्तिं कुर्यात्, तस्मादसन्निति मुख्यार्थबाधायां गुणकल्पनाऽप्रधानकल्पनाऽऽश्रीयत इत्याह–असन्नभूतवदिति–असिद्धपदकृतवदित्यर्थ । ततश्च स्थान्याश्रय कार्ये सिद्धं भवति, ननु असन्निति विनाऽपि प्रथममेव द्वित्वे कृते कुक्कुटक्त इति सत्स्यपि तत्कि-मननाऽत्र दर्शितेन ? सत्य, अत्र परत्वात् ' ह्रस्वाद् ङ्णनो द्वे " इत्यनेन बाध्यमाने द्वित्वं बाधित्वा नित्यत्वादनेन षकारस्यास्य षाऽसत्त्वाद्द्वित्वं । किञ्च आपयनमिति-भासमन्त्वश्चात्नामनेकार्थत्वेनोच्यते क्षिप्यति वस्त्वस्मिन्निति आवपनं–सर्वं भाजनं । तत्रूरस्य मतमिति–यत्र ' वतोऽस्याः " इत्यस्याऽप्राप्तिस्तत्र ' अदीर्घोद्० " इति प्राप्त-मपि द्वित्वं न प्रवर्तते निस्यत्वादिकारणेभ्यः, असत्त्वाद्द्वित्वमिति, " अदीर्घाद्० " इति " वतोऽस्याः " इति द्वित्वादौ कर्तव्येऽसत्त्वेन वतोऽसन्निस्यत्राऽपि वा योजनीयः, वक्ष्य-माणसोऽपि षाऽसन् भवतीत्यर्थ । ततः पक्षेऽसत्त्वविधानात् कार्यसिद्ध्य प्रति सत्त्वमेव ।

अइउवर्णस्यान्तेऽनुनासिकोऽनीनादेः १–२–४१ ॥ विरामस्थायेति, वकार स्यैकारार्थत्वेन विरामस्थादेव न सन्धिः सन्धिरभाव इत्यर्थः ॥ वृक्ष इति, ' कारिके-चनम् " इति सूत्रे कस्याऽविदिरिति तत्पुरुषसमास विसर्गस्यापि व्यञ्जनत्वे " नाम्नि सिद्० " इति वृक्षाकारस्य पदत्वादन्त इति व्याख्येन अमत्रविकल्पति " पूर्वमपदार० " इत्यादिना विष्णुः पृथिवीपतिरमिप्रायेण ।

॥ इति अवचूर्णिकायां समासोऽय द्वितीयः पादः ॥

'तृतीयस्य पञ्चमे'। १–३–१ ॥ " ओ नैवौ " इत्यतो नयेति, " पदोर्वः " इत्यतः पदान्त इति, अइउवर्णस्य० " इत्यतोऽनुनासिक इत्यधिकारत्रय पादान्त यावदनुवर्तते, ' अपवादोऽधिकार ' इति न्यायात्, प्रथमद्वितीयतृतीयादित्वे वर्गस्यैव यम इत्याह–वर्गतृतीयस्येति, स्थान्यासन्न इति पदगोत्रस्कस्तृतीयस्याद्यस्थस्क एवाऽनुनासिक इत्यर्थः । माघ्मधुरा पक्षीत्येवशीलति उन्मत्त इति बाहुलकत्वाद्वा " मिघेरु० " इत्यादिनिपातनाद्वाक्, मधु माधुर्यमत्राऽस्तीति ' मेध्यादिभ्यो रः " इति रे मधुरा । षण् नया इति, नीयत परस्य वृद्धिमय धर्मिरिति " पुंनाम्नि घ " इति घ नयाः, षडिति अमन्त , षण्णां नया इति षष्ठीसमासो वा षट्संख्या नयाः षण्णया इति मयूरव्यंसकादित्वात्समासः, कर्मधारयस्तु संकपाममाहार येत्यत्र नियमसद्भावान्न भवति, एवमन्यत्राऽपि सरूपायाः समासो द्रष्टव्यः, नयनमिति–नयतेर्भावे करणा धिकरणयोर्वाऽनटि नयनं, षष्ठी वा समासो व्यस्त वा पदद्वय भावानढि तृतीयासमासो वा, अत्र दस्याऽसत्त्वे तस्थानस्य नस्याऽप्यसत्त्वात्मलोपो न भवति । ककुम्मण्डल-

१ १-१-१७ । २ १-१-१४ । ३ १-१-१३ । ४ १-१-१ । ५ १-१-११ । ६ १-१-१८ । ७ १-२-१७ । ८ १-२-४१ । ९ ५-३-६१ । १० ५-१-१६ । ११ ५-२-१२ ।

'प्रथमाद्धुटि शश्छः' १ । ३ । ४ । वाक्छूर इत्यादि, शूर वीरमि इति शूरयत इत्यपि इ इु इुं भुं सुं इति अवतीति "चिजिर्ह्रोममि०" इति र दीर्घत्वे च शूरः, शिष्यतीति "भूणवणगुप०" इति निपातनात् सश, शिताऽर्थे श्रेवत इति लिहापपि श्रेव, श्मनि मुलेकदश श्रते "श्मनैः शीकोदित्" इति दित श्मश्रु कूर्चे, श्यैङो "चिर्विभिञो०"ति मे श्यामा अप्रवृत्ताः स्त्रियः श्यामवर्णा वा । वाक्छूर इत्यादिप्रयोगेषु तृतीयस्य प्रथम कृत वाक्शस्मथमात् शकारस्याऽनन छः प्रवर्तते, ततस्तृतीयाधिकारणैव सिध्यति न च परत्वात् "अघोषे प्रथमोऽशिटः" इति प्रागेव प्रथमो भविष्यति ततस्तृतीयाभावात्कथ शस्य छादेशो भविष्यतीति वाच्य, यतस्तत्रा ऽनित्यधिकाराश्र प्रागेव प्रथमत्वमिति, सत्य, तृतीयाद्विधीयमान छ तृतीयस्य प्रथम त्व पश्चाव प्राप्नोति विधानसामर्थ्यात्, यथा "ङ्ः षः स्तोऽश्चः" इत्यत्र सश्च तकारपरत्वे त्व कृत टत्व न भवति पड्स्सीदन्तीत्यत्र । किञ्च प्राङ्छ छन सुगण्ट् छेते इत्यादौ तृतीयाभावाच्छत्त्व न स्यादिति विप्पर्यमिति । अघुटीति पर्युदासात्स्वरान्त स्यानुनासिकपरस्य शस्य छो भवतीति । वाक्छूर इत्यादौ "ऊनार्थपूर्वाद्ये" इति स ।

'रः कखपफयोः × क $\asymp$ पौ' १ । ३ । ५ । ननु 'निरनुब धग्रहण न सानु बन्धस्ये'ति न्यायात् करोतीत्यादौ मानुब धस्य रफस्याऽऽदेशो न प्राप्नोति । सत्य, 'धरोः सुपि०" इत्यत्र कवर्जनाद्गोरप्यादेशः । तद्धि "रः पैदान्त०" इति सूत्रावि न्नुब धे रफोऽनुवर्तमान स्वयमव सिद्ध मत् ज्ञापयति 'निरनुबन्धग्रहणे सामान्य ग्रहण'मित्यपि न्यायोऽस्तीति ।

'शषसे शषसे वा' १ । ३ । ६ । कः षण्ड इति सन षण समकाविति षणधातोः सन्यत इति वाक्य "पञ्चमाद्डः' इति ड पादुलकस्त्वाष मध्यामाव षण्डो वृषसमूहः । ननु शषस सो वेत्यत्र सकार एव विधीयतां तस्य च "सर्वे शषौ" इति कृते कश्शत कष्षण्ड इत्यादौ शकारषकारौ सत्स्यत । एवमुत्तरत्राऽपि कश्वरति कष्टीकते भवांश्चरति भवांष्टीकते इत्यादौ शषौ सत्स्यत इत्युभयार्थमित्यपि न चक्रम्य, तथा कः शत इत्यादौ "धुटस्तृतीय" इत्यस्मिन् कतम्य रुत्वस्य, अन्तः शत इत्यादौ त्वासिद्ध बहिरङ्गमिति न्यायन शत्वस्याऽसिद्धत्व तृतीयत्वमपि न प्रसर्प्यति तस्कि शषयोः पृथग्विधानमिति ? सत्य, असिद्ध बहिरङ्गमिति न्यायस्याऽनित्यत्वज्ञा

१ उणा १६२ । २ उणा १८६ । ३ उणा ८१ । ४ उणा ३४ । ५ १-३-५ । ६ १-३-३८ । ७ ३-३-६० । ८-१-३-५७ । ९ १-३-५१ । १० उणा ११८ । ११ १-३-६१ । १२ १-३-७६ ।

दोषाभाव इति । अनुस्वारापक्षयाऽवयवावयविभावेऽनुनासिकापेक्षया स्थान्यादेशभावे पूर्वस्येति षष्ठी । प्रशान्तरति× प्रशाम्यतीति क्विपि, "अर्हम्प्रशमस्य" इति दीर्घत्वे "मा मो म्वोश्च" इति मस्य नत्वं प्रशान्, अत्र नस्याऽसत्त्वे 'नाम्नो नोऽनह्नः" इति नलोपो न भवति । स्सरुक इति स्सरत्प्रत्यय स्सरुः ससृगुरिः, त्सरौ कुशल इति "कोऽश्मादेः" इति क स्सरुकः ।

'पुमोऽशिट्यघोषेऽख्यागि रः' । १-३-९ ॥ अत्र रमपनीय स इति कृते विधानसामर्थ्यादुत्वाभावे पुमलीत्यादि न सिध्यति । पुस्कामेति–पुर्मांसं कामयते 'शीलिकामि०" इति णो यद्वा कर्मणिङन्तात्कामना कामो 'पुर्वर्णे०" इत्यल् णिङभावे कमन वा भावे घञि वृद्धौ कामः, पुसः कामोऽस्या आपि "पुंर्स्त" इति सः । पुंस्कोकिल इति पुमानिव कोकिलः पुंस्कोकिल इति मयूरव्यंसकादित्वान्मध्यपदलोपी समासः । पुर्मांसं चलयति "कर्मणोऽण्" दीर्घत्वे परपक्षोऽन्नेन "पुर्माम्नि०" च ञरः । क्षुर इति "नाम्नुपान्त्य०" इति कः । ख्यार इति ज्वलादित्वाण्णः, पुम् ख्यातः–अत्र ख्याग एव वर्जनात् ख्यांक् प्रकथने इत्यस्मिन् पुंख्यात इति भवत्येव ।

'नृनः पेषु वा' । १-३-१० ॥ अघुड्‌पर घुट्‌पर च पकारमात्रे निमित्तेऽस्य प्रवृत्तिः प्राप्तिस्तदर्थस्त्वादित्यर्थः । तेन नॄः प्सातीत्यादि सिद्धम् ।

'द्विः कानः कानि सः' । १-३-११ ॥ अनुकार्यानुकरणयोर्भेदस्य विव क्षितत्वात्कसन्तानुकरणादपि षष्ठी तथा सप्तम्यपि । द्विरिति कान्मत्कमवनक्रिया पक्षया क्रियाविशेषणमिदम् । अथाऽत्र सकारे कृते 'सोर्रुः" इति रुत्वं कथं न भव तीत्याह रस्यस्यादि–अयमर्थो यदि सस्य रुत्वं स्यात्तदा रफाधिकारणैव सिद्धं किं सवि धानेन प्रक्रियागौरवं च परिहृत भवति । तथाऽत्राऽनुस्वारस्य व्यञ्जनत्वात् "पदस्य" इति संयोगान्तलोपः कथं न भवति ? नैव, तत्र मुख्यव्यञ्जनसंयोगस्यैवाऽभिहितत्वा दस्य तु सामर्थ्यप्रापितत्वेनाऽमुख्यव्यञ्जनत्वात् ।

'स्सटि समः' । १-३-१२ ॥ सम इति प्रादिपठितस्यैव समो ग्रहणं, न षम ष्टम वैक्लव्य इत्यस्य विजन्तस्य, संस्कृतं भक्ष्य" इत्यादिज्ञापकात्, अनुस्वारस्य व्यञ्ज नत्वात् "धुँटो धुटि स्वे वा" इति पक्षे सकारलोप द्विसकारमेकसकारं च संस्कर्तेति रूपद्वयं द्रष्टव्यं । सत्कृतिरित्यत्र गवादिपाठात् सट् न । अन्यमते तु सपरः कृगः सट्

× क्रमशोऽत्र—१ ४-१-३७ । २ ३-२-१७ । ३ २-३-११ । ४ १-१-१० । ५ ५-१-७१ । ६ ५-१-२८ । ७ २-१-१ । ८ ५-१-७३ । ९ ५-२-११ । १० ५-१-५४ । ११ २-१-७२ । १२ २-१-८१ । १३ ६-२-१४ । १४ ३-२-७८ ।

ञ्चित, इत्यत्रैव स्यात् । अकारादिना व्यवधानाच्च भविष्यतीति चेत् न, 'येन नाऽव्यवधानं तेन व्यवहितेऽपि स्यात्' इति न्यायादेकेन वर्णेन व्यवधानमाश्रीयते । अथ प्रथमपक्षे किं ह्मलयतीत्यादौ सूत्र चरितार्थमिति किमिति व्यवधानमाश्रीयत इति चेत्, न मन प्रतिपादकेन हकारे परे मकारादावेव सूत्रार्थः स्वीकृत, स प्रति पक्षान्तरस्याऽसम्भवाद्विपरीतप्रतीतिः स्यादिति तन्निरासाय परग्रहणं कर्तव्यमेवेति । तथापि न कर्तव्यं विपर्ययप्रतीतौ हि अस्य वैयर्थ्यं स्यात् 'तौ मुमो०" इत्यनेनैव रूपद्व यस्य सिद्धत्वात्, सत्यम् तर्हि नियमार्थमिदं स्यात्ततो मकारादौ हकार एव स्यान्ना ऽन्यत्र । ततश्च त्वं मन्यसे इत्यादौ पूर्वेणाऽपि न स्यादिति परग्रहणम् । तथा हकारस्य स्वो नाऽस्तीति व्यवहितमकाराद्यपेक्षया स्वोऽनुनासिको भवन्मकारादिरूप एव भवतीति ।

'सम्राट्' । १-३-१६ ॥ रेफस्य स्वत्वाभावादनुनासिकप्राप्तिरेव नाऽस्ती त्याह–अनुस्वाराभाव इति । एकवचनस्याऽप्रसक्त्वाद्विवचनादावपि भवति ।

'ङ्णोः कटावन्तौ शिटि नवा' । १-३-१७ ॥ अस्योदाहरणेषु द्वयसानां " चेतः श्चिटः " इति वा द्वित्वे दीर्घह्रस्वयोः ङ्णोः सत्त्वे चत्वारि रूपाणि, ह्रस्वा ग्रस्वयोस्तु ङ्णोरेव ' अदीर्घादिति " वा द्वित्वे च पञ्च रूपाणि, भवाञ्छेत इति ' तवर्गस्य० " इति नस्य ञत्व, षण्मण्षीति सस्यं सपौ " इति षत्वम् । नन्वत्रा ऽन्तग्रहणं किमर्थं ? ङ्णोः कटाविस्येवोच्यताम्, नैव, एवं कृते ङ्णोः पञ्चम्यन्तत्वे कटयो- रादेशत्वं स्यात्तन्निरासायान्तग्रहणम्, तर्हि ङ्णः कटमिति समाहारं कृत्वा ङ्ण इति पञ्चम्यन्तत्वमादेशत्वनिरासाय व्याख्यायताम् ? न, अन्तग्रहणे सति प्राङ्क् साथ इत्यत्र ककारस्य पदान्तत्वात् नाम्यन्तस्था० " इत्यनेन पदमध्ये विधीयमानं षत्वं न भवति, अन्यथा परादित्वेन ककारेण सकारस्य पदादित्वविधानात् षत्वं स्यादिति । तथा सुगण्ट्सु इत्यत्र "नैामसिदय्० " इति टकारस्य पूर्वभक्तत्वेन पदान्तत्वे पदान्तौ ट्वर्गात् " इति प्रतिषेधात् 'संस्य द्वपी ' इति सकारस्य षत्वं न भवति, परावयवत्वे तु अपदान्तत्वेन प्रतिषेधाभावात्स्यादेवेति । गण् शब्द इत्यतो क्विपि गण्, क्विपि तु दीर्घत्वे गाण्, तथा सुगण् इत्यत्राऽकारणिगोर्लोपस्य " स्वरस्य परे प्राग्विधौ " इति स्थानिवत्त्वे कर्तव्ये " न संधि " इति स्थानिवत्त्वाभावात्कथं न दीर्घ इति चेत् ? सत्य, तत्र इन्वर्जनस्योपदेशावस्थायां पञ्चमान्तग्रहणार्थत्वेन व्याख्यास्यमानत्वात् ।

१ १-१-१४ । २ १-३-१६ । ३ १-३-१२ । ४ १-१-६१ । ५ २-३-१५ । ६ १-१-२१ । ७ १-३-६१ । ८ ४-१-१ ७ । ९ ४-४-१११ ।

'श्नः सः स्तोऽश्चः' । १-२-१८ ॥ षट् सीदन्ति, मतान्तरेण षड् सीदन्ति, इत्यत्र "वर्गे चिट" इत्यनेन वा द्वित्वे चातुरूप्यं, षट्र् सीदन्ति, "अदीर्घाद्०" इति टस्य "वर्गे चिट" इति सस्य च वा द्वित्वे अष्टरूप्यमिति सप्त रूपाणि भवन्ति । षट्त् सीदन्तीति "पदान्ताट्टवर्गात्" इति निषेधात्तवर्गस्य न टत्वं, पठिति प्रयोगस्थो टकारः घत्वेऽनुकृतस्तत एव "अघोषे प्रथमोऽशिट" इति टत्वं न भवति, इत्याह टकारनिर्देशादिति । भवान्त्साधुरिति—अथाऽत्र नकारस्य "नोऽप्रशान" इत्यनुस्वारानुनासिकपूर्वः सकारः कस्मान्न भवतीति ? उच्यते, अधुट्पर इति वचनात्, अत्र हि धुट्परस्तकार इति । षट् श्च्योतन्तीत्यत्र "सस्य शषौ" इत्यत्राऽनित्यपि कारे वर्तमाने अवर्णनाभाव दन्त्यसकारस्य सः स्यादिति, ननु तर्हि पदस्थानस्यापि तालव्यः पठनीयः किं दन्त्यपाठनति ? सत्यं, दन्त्यं पठनं ज्ञापयति '<u>दन्त्यापदिष्टं कार्यं तालव्यस्याऽपि भवति</u>' परं दन्त्यस्थाननिष्पन्नस्य न सर्वस्य, तेन भवान् शेते इत्यादौ स्तो न भवति, ननु मधुगित्यत्र "स्वरस्य परे०" इति पित्वोपरूपस्य स्वरादेशस्य स्थानित्वात् श्लोपो न प्राप्नोति, न च वाच्यं "न सन्धि" इत्युपतिष्ठत इति, अस्वस्थानीति वचनात् न, अस्वस्थानीत्यत्र नञ्निर्देशेन '<u>नञा निर्दिष्टमनित्यमिति</u>' न्यायात्स्थानित्वाभाव इति ।

'न शिश' । १-१-१९ ॥ भवाञ् शूर इत्यादौ भवाञ् शूर इत्यत्र "वर्गे चिट" इति वा द्वित्वे चातुरूप्यं, कुर्वञ् छेते इत्यादौ कुर्वञ् शेते इत्यत्र । "अदीर्घाद्" इति शस्य वा द्वित्वे कुर्वञ् श्शेते इत्यत्र च "वर्गे चिट" इति द्वित्वे पञ्च रूपाणि ।

'अतोऽति रोरुः' । १-१-२० ॥ भेति निपात, कार्यी निमित्तं कार्यमित्येष हि निर्देशक्रमः । अत्र तु कार्यिणः पूर्वनिमित्तोपादानेन निर्देशक्रमातिक्रमं कुर्वन्नपि कारातिक्रमं सूचयति । तथाऽऽतोऽत्यतीति निर्देशात्सन्निपातलक्षणन्यायो नोपतिष्ठते । ननु तरावपनं तर्पणमित्यत्र रुसम्बन्धस्यैव ग्रहणं कस्मान्न विज्ञायते किमित्युरित्व एवाति ? सत्यं, "अतोऽति रोः" रित्यत एव ज्ञापकात्, किमेतत्सप्रोपादानस्यैव रोरुः प्रत्याऽनुवृत्तिस्तत्र च भोभगोऽघोभ्यः परस्य पदान्तस्थस्य रोरन्यस्याऽसम्भवात्सानुबन्धस्यैव ग्रहणं भवतीति । सुभोत ? यत्र त्वसीति । अत इति तपरनिर्देशेन स्वरूपग्रहणात्सुत्र सति न भवति, परत्वादन्तरङ्गत्वाच्चोकारात्पूर्वमेव प्लुतः ।

'अवर्णभोभगोऽघोऽर्लुगसन्धिः' । १-१-२२ ॥ ननु सन्धिरूपतायां

---

१ १-१-१६ । २ १-१-१२ । ३ १-१-६१ । ४ १-१-५ । ५ १-१-८ । ६ १-१-६१ । ७ ०-४ ११ । ८ ०-०-१११ । ९ १-१-२ ।

भत्यामसन्धिरिति प्रतिषेधो युक्तो लुक् तु भमावरूपत्वात्सन्धिरूप एव न भवतीति रूप निषिध्यत स चाऽसन्धिरित्याह–सन्धिरित्यादि, अत्र सन्धिशब्देन सन्धिनिमित्त स्योपचारादभिधान । धर्मं चरतीति " धर्मोधर्माच्चरति " इत्यनेनकणि धार्मिकाः । भग वद्भगवतामिति–भज्यन्ते सम्यन्ते स्वेन रूपेण स्थाप्यन्ते पदार्था अनेनेति " गोचरसं चर० " इति घ भगं, तदस्याऽस्ति मतौ भगवत् इतिरूप, अघम् पापकर्मेऽस्त्योऽस्ति मतौ अघवत्, अनवहितस्याऽन्यत्र व्यासक्तस्याऽभिमुखीकरणं सम्बोधनमामन्त्रणमि- त्यर्थः । असन्धिरित्युत्तरार्थमिति । ननु " स्वरे वा " इत्यत्रैवाऽसन्धिस्वरं चेत्येवम् सन्धिग्रहणं क्रियतां, नैव, लुक्संनियोगशिष्टत्वज्ञापनार्थत्वादत्रोपादानस्य, तेन यत्राऽ- नेनाऽधिकारेण लुक् तत्रैवाऽसन्धिः, तथाऽऽआऽऽपाच्छतीत्यादौ सन्धिप्रतिषेधो न भवति । किञ्चैवं कृते सन्देहः स्यात्, स्वरे निमित्तेऽसन्धिर्वा भवतीति, ततो वन्द अग्रमित्यनिष्टं रूपं स्यादिति, तथाऽसन्धिरित्यस्य संनियोगशिष्टत्वे यत्र लुग् निवृत्तिस्तत्र तत्सम्बद्धोऽसन्धिरित्यपि निवर्तत इति ।

'य्वोः'। १-३-२१ ॥ शुचिरित्यत्र क्विपि सत्युट् स्यादिति विधि सिद्धमित्युक्तं न च ' स्वरस्य " इति णि लुकः स्थानित्वं " नं सन्धि० " इत्युपस्थानात्, तर्हि ' य्वोः " इति कथं यस्य न लुक् ? सत्यं, तदा स्थानित्वात्, अभ्युपगतीति विप् क्विब्वा, विधि तावयस्य न लुक् " स्वरस्य " इति णिचः स्थानित्वात्, क्विपि तु यद्यपि "नं सन्धि०" इति णिचः स्थानित्वं न भवति तथापि न यस्य लुक्, "ईसासः" इत्यनेन व्यञ्जनद्वारा सिद्धे कार्यमिति यत्र क्विपि कश्चित् व्यञ्जनकार्यमनित्यमिति ज्ञापनार्थम् । ततो यलुग् न भवतीति, यद्वा लुगिति संज्ञापूर्वको विधिरनित्य इति, ननु शयम् करोतीत्यत्र पदान्तत्वं नाऽस्ति णिलोपस्य स्थानित्वात् ततो व्यञ्जनविकल- त्वं स्यादुभयोरिति इति ।

' स्वरे वा '। १-३-२४ ॥ कथास्ते तथास्तुरित्यादिषु स्यादिविधौ " सोरुः " इति रोरसत्त्वात् ' असिद्धं बहिरङ्गमन्तरङ्गे ' इति न्यायाच्च, ' अत धेः स्यादौ० " इति न दीर्घः ।

' अस्पष्टाववर्णात्त्वनुञि वा '। १-३-२५ ॥ सप्तमीमन्तात् क " धो घाम्व० " इति निपातनात्सप्त ।

१ ६-४-४५ । २ ५-१-१११ । ३ १-१-१४ । ४ ७-४-११ । ५ ७-४-१११ । ६ ४-४-१२१ । ७ ४-४-११८ । ८ २-१-७२ । ९ १-४-१ । १० ४-४-७४ ।

प्लुतोऽभिधीयत इत्याह दीर्घस्यानादिति, ननु किमर्थमिद यतो दीर्घमाश्रित्य "अना ङ्मांङ० " इत्यनेनैव द्वित्वं या भविष्यति ?, सत्य, इदमेव ज्ञापकं '<u>दीर्घापदिष्टं नप्लुतस्येति</u> '

'स्वरेभ्यः ' । १-३-३० ॥ पदान्त इति निवृत्तमिति । " गच्छति पथि दूधे " इत्यत्र गच्छतीति निर्देशाच ।

'हविहस्वरस्यानु नवा ' । १-३-३१ ॥ अप्यत इति ' भीर्वृस्नभि " इति के, " पर्वः कगम् " इति क्त्व, अप्यत इति घञि न्यक्कादित्वात्कत्वेऽनेन द्वित्वे वा औणादिकेऽर्के प्रथममव कस्य द्विरूपत्वाभावेऽनन द्वित्व, पपग्रद इति-ग्रावत इत्यप् पृषोदरादित्वाद्ग्रत्वा, अत्र द्वित्वे कृतेऽपि '`रोरलुग०' इत्यनेन रलोप सति न कश्चिद्विनश्यति ? सत्य, यद्यत्र र वर्जन न स्याच्चदोत्तरसूत्रेऽपि रवर्जनाभावऽ इत्यत्रोत्तरेण द्वित्वे ' रोरेलुग्० " इति लुकि आह इत्यनिष्ट रूप स्यादिति । ननु कर इत्यत्र द्वित्वे कृतेऽपि 'लुगस्या " इत्यादिनाऽस्य लुग्भविष्यति किं स्वरवर्जनेन ? सत्यं चारु दारु वारीत्यादौ चारू दारू वारी इत्याद्यनिष्ट भवेदिति स्वरवर्जन, अत्राऽनित्यस्य-स्याऽभावे सत्यन्तरङ्गत्वाद् द्वित्वकृत पश्चात्परोक्षानिमित्तत्वेन चरित्र द्विवचन स्याच तथ प्रोर्णुभावेत्यनिष्टरूपापत्तिः, ननु द्वित्व कृतमपि निमित्ताभाव इति निवर्त्स्यति किमनुग्रहणेन ? सत्यं, अनुग्रहणादेवाऽय न्यायोऽनित्य इति ।

'अदीर्घाद्विरामैकव्यञ्जने ' । १-३-३२ ॥ अदीर्घादिति पर्युदासादनुवृत्तस्य स्वरस्य विशेषणमित्याह अदीर्घात्स्वरादिति, मप स्वङ् इत्यत्र प्रथमककारस्य ' संयो गस्याऽऽदौ० " इति लुकस्माच भवति ? न च मान्यमर्य द्वित्वादस्योऽनर्थक इति, अन्यत्र द्वित्वभुतमरितार्थत्वादिति ? सत्य, मदस्वरस्यति र्लोपादानात् व्यक्तिपदाथ भाश्रीयत, तत्र च ककारविषयस्य द्वित्वस्याऽऽनर्थक्य मा भूदिति न भवति, ननु " किरो " इति सूत्रे द्विवचननेद ज्ञापित, यथा सानुनासिकस्याऽपि निरनुनासिक एवाऽऽदेश इति, तत्कथ सर्य्यतः इत्यत्र सानुनासिको यकार इति ? सत्य, स एव सानुनासिको यकारो द्विरूपो भवति न त्वय भिन्न आदेश क्रियत इति सानुनासिक एव भवतीति, यद्यपाऽपि चार्थकत्वया ह्यपि यकारो सानुनासिको ज्ञापत, सानुनासिकयकार स्यव द्वित्वापत्त्यादिति, गाम एन भ्रासीरभिति " विपृतो नाम्नि " इति क्तः, विपथ इति " मैर्योपसर्गो " इति यः, अत्र द्वित्वे कृत रलोप च वार्ये स्यात्,

१ १-३-१८ । २ १-१-२ १ । ३ क्वा ११ । ४ २ १-८६ । ५ १-३-४१ । ६ १-३-११३ । ७ ३-१-८८ । ८ १-३-१५ । ९ ५-१-७१ । १० ५-१-१२ ।

इतविधानस्य पुंसि विसर्गान्तस्य परितार्थत्वान्नपुंसके विहत इत्यत्र विरामस्वरस्तोकारस्य द्वित्वं स्यात्, प्रथमत्वादिकमिति पर्य्यदनमित्यादिषु ।

‘अनुस्वारस्यान्तस्थात:’ । १-३-१३ ॥ अन्तस्थात इत्यत्राऽय्यादिस्वायम् ।

‘ततोऽस्या: ’ । १-३-१४ ॥ दध्यत्रेत्यादौ । ‘असिद्धं बहिरङ्गमिति’ न्यायादन्तरङ्गे द्वित्वे कर्तव्ये बहिरङ्गो यणादेशोऽसिद्धः कस्मान्न भवति ? न चाऽस्याऽसिद्धत्वे सूत्रमिदमनर्थकं भवतीति वाच्यं, ध्यानमित्यादावननादिरूपं यादौ तस्य सार्थकत्वादिति ? उच्यते, ‘ न सन्धियंवविधिः ’’ इत्यत्र द्वित्वस्य सन्धिविधित्वे न स्थानिवद्भावप्रतिषेधे सिद्धे द्विग्रहणमसिद्धं बहिरङ्गमन्तरङ्गे इति न्यायस्य बाधनार्थं द्वित्वमुपपद्यते । तथाऽथेत्यस्मिन् रस्य न द्वित्वमर्हस्वरस्येत्यधिकारात्, तस्य तु द्वित्वे स्यात्त्याम्यतीति द्रष्टव्यं ।

‘ शिटः प्रथमद्वितीयस्य ’ । १-३-१५ ॥ प्रमत्स्थान इत्यतः कर्तरि “ मो वाक्ष ” इति पे कृते ‘ क्षीबेरथाम्य ’’ इति क्यां स्थाली स्थालयतीति वा “ स्फरेम्य इः ” स्थालिः अस्यत इति ण्यपि शिलेमास्य ’’ इति वाऽऽस्य, स्वम्भात्र इति स्वमृछात्र इति स्थिते वौ द्रुमो ’’ इत्यनुनासिको मकारस्ततम्छस्य द्वित्वे बभोवे मधमो इति छस्य चः ।

ततः शिटः ’ । १-३-१६ ॥ ताभ्यां ततः, तच्छब्दस्याऽनन्तरपूर्वस्य परामर्शित्वेन प्रथमद्वितीययोरनुकर्ष इति, श्रिद्‌यायस्य ’’ इति यस्य कचारे कृते द्वितीयादपि सस्य द्वित्वे अक्स्सरा इति रूपं । नराः मुखन्तः सीदन्त्यस्यामिति पृषोदरादित्वात् दसी, कास्यते इति पिमन्तस्य, एव कम्प्यते इत्यपि ।

‘ पुत्रस्यादिन् पुत्रादिन्याक्रोशे ’ । १-३-१८ ॥ नकारान्ततामित्यस्य धर्मादिमिति समासे उत्तमप्राप्तोऽपि नलोपो न कृतः, आदिन् पुत्रादिन्नुपादानेऽपि न्यामग्रहण इति न्यायात् स्त्रियामुदाहृत, तत्रैव प्रायशाऽऽक्रोशसम्भवात्, क्लीब पुंसयोऽपि पुत्रादननाऽऽक्रोश तत्राऽपि प्रतिषेधो भवत्येव, पुत्रादी भवेति, अधीत्य पुत्रानत्सीति “ क्रोधमीत्ये इति णिन् पुत्रादिनी शिशुमारीति, अध्यारोपेण हि निन्दाक्रोशौ, तत्त्वाख्यान तु तदमम्भव इति प्रतिषेधाभावात् भैरीभोद इति द्वित्वं भवत्येव, नागीति क्षीबेरथाम्य० इति क्षीः ।

---

१ ७-४-१११ । २ ५-१-६१ । ३ २-४-५४ । ४ धातु ६ । ५ उणा २६४ । ६ १-१-१४ । ७ १-१-५ । ८ १-२-५६ । ९ ५-१-१५७ । १० १-१-११ । ११ २-४-५४ ।

'म्नां धुड्वर्गेऽन्त्योऽपदान्ते' । १-३-३९ ॥ यद्यत्र वर्गग्रहणं न स्यात्तदा गन्तेत्यत्र मकारस्यान्तस्थाऽपि तकारापेक्षयाऽन्त्यत्वादित्यव्यवस्थानिरासाय वर्गग्रहणम् निमित्तवर्गस्यैवेति-मकारनकारापेक्षयाऽन्त्यस्य वर्णस्याऽन्त्यस्याऽभावादिति। बहुवचनमिति-अयमर्थो 'वर्णग्रहणे जातिग्रहणमिति' जातिनिर्देशे प्राप्ते बहुवचनं व्यक्तिनिर्देशार्थं, तेन यानान्मकारो नकारश्चाऽपदान्तस्तत्र सर्वत्र तद्वर्ग्यस्यापेक्षया वैयर्थ्यं मा भूदिति प्रवर्तमानोऽन्त्यः कार्यान्तरबाधायै प्रभवति। गम्यते, हन्यते, इत्यत्र म्नोर्निमित्तपकारस्याऽन्त्यो रः स्यात् ।

'शिड्हेऽनुस्वारः' । १-३-४० ॥ ननु पिंषि इत्यादौ अस्यानुस्वारः स्थानित्वादकारेण वस्य व्यवधानादनुस्वारो न प्राप्नोति, किमन्यत्वाभवेण ? नैवम्, "न सन्धि०" इति सन्धिविधौ स्थानित्वनिषेधात् । ननु हस्य शिट्संज्ञां कृत्वा शिड्यनुस्वार इत्येवोच्यताम् ? सत्यम् यदि हस्य शिट्संज्ञां कृत्वाऽहग्रहणं न क्रियते तदा श्रौढदित्यत्र "श्वयोपे शिटः" इति हलोपऽनिष्टं रूपं स्यादिति ।

'रो रे लुग्दीर्घश्चादिदुतः' । १-३-४१ ॥ 'नन्वपदान्त इत्यधिकारात् अग्नयः, अपास्याः, अशोकः, अवासाः, अचाकाः, अपापाः, इत्यादिष्वेव प्राप्नोति, ननु स्वारान्तमित्यादावपीति ? नैवम्, अदिदुत इति ग्रहणादपदान्त इति नाऽनुवर्तते, यत इकारात्परस्य रेफस्य रेफेऽपदान्ते सम्भवो नाऽस्तीति, भिन्नस्थानिनिमित्तमपनाह्य । किं पुनरिदं सानुबन्धस्य कार्यिणो रेफस्य ग्रहणं निरनुबन्धस्य वा ? तत्राऽऽद्यपक्षेऽग्नी रथेने त्यादि सिध्यति, न तु पुना रमत इत्यादि, द्वितीयपक्षे पुना रमत इत्यादि सिध्यति न त्वग्नी रथेनेत्यादि । न चोभयपरिग्रहे किञ्चिन्नियामकमस्ति ? उच्यते-अत्र 'रो रे०' इत्येकप्रयत्ननैव पञ्चद्वयोच्चारणादेकत्र सानुबन्धस्याऽपरत्र निरनुबन्धस्य निर्देशात् 'निरनुबन्धग्रहणे सामान्यग्रहणमिति' न्यायाच्च सामान्येन ग्रहणं भवतीत्याह रेफस्येति । अनन्तरत्वामिति-ननु सामान्यनिर्देशादनन्तराणामेवेति कुतो लभ्यत इति चेत् ? उच्यते-रे इत्युपश्लेषसप्तमीनिर्देशात्तुल्यत्व दीर्घोऽपि रेफोपश्लिष्टस्यैव भवतीति ।

'ढस्तड्ढे' । १-३-४२ ॥ अनित्विति, इह यत्र पदान्ते "धुटस्तृतीयः" इत्यस्य बाधकम्, अपदान्ते तु "तृतीयस्तृतीयचतुर्थे" इत्यस्य चेति, ततोऽनित्यत्वधिकार एतयोः सूत्रयोर्विषय मुक्त्वा ज्ञातव्यः । अत एव मधुलिड्ढौकते इत्यत्र पूर्वं तृतीयस्याभावे सति न ढस्तड्ढ इत्यस्त्वेति । चकृड्ढे इति-अत्र 'भोम्यन्तात्०" इति यस्य ढत्वे 'अदीर्घाद्विराम०" इति तस्य द्वित्वे 'तृतीयस्तृतीय " इति ढस्य डः आगतम्, आगतमिति-ढढौ

---

१ ४-४-१११। २ ४-१-३५। ३ २-१-७६। ४ १-३-७५। ५ १-१-८ ।

दृशौ, दृशेत् उपमे इति धातू "वेदोऽस्तु" इतीडनिषेधः ! लेढा इति—नन्वत्र परत्वाद्गुणो भविष्यति किमन्तिस्यविकारेणेति ? सत्यम्, ढलोपस्याऽसिद्धत्वेनाऽन्तरङ्गत्वात्प्रथमं ढलोपो दीर्घत्वं च प्राप्नोति । ननु ढस्याऽऽभ्यासधर्ममप्यसत् ततो गुणो भविष्यति ? सत्यम्, 'तथाप्यसिद्धं बहिरङ्गमन्तरङ्गे' इति दीर्घत्वं स्यात्, 'कार्यो विधिः' इति न्यायेनाऽन्तरङ्गं ढत्वं ततस्तस्मिन्नभिमते गुणोऽसिद्धो यतो गुणोऽकार्यो विधिरिति, कार्याभिन्नपक्षे इदमुक्त, शास्त्रासम्भपक्षे तु गुणे कृते ढत्व भवति ।

'उदःस्थास्तम्भः सः' । १-३-४४ ॥ ननु उत्स्थातेत्यत्र सकारलोपः कस्मान्न भवति ? न च नान्यमडागमेन व्यवधानाम भविष्यति, यतोऽड्विनोऽत्र व्यवधायकं न भवति, सत्यम्, आदुत्स्थाउद इति पदं स्थास्तम्भः सकारस्य च सम्बन्धनीय, उदस्थात् उदस्तम्भदित्यनयोः सिद्ध्यर्थम् । उदस्थादित्यत्राऽडागमाद् पूर्वमनित्यविकाराम भवति, अडागमे च सति पञ्चम्या निर्दिष्टे परस्य तथाऽनन्तरस्यैव न व्यवहितस्येति न भवति । उत्स्थान इत्यत्र स्थानस्य विशेषणं उद्, न तु तिष्ठतेरिति ।

'तदः सेः स्वरे पादार्था' । १-३-४५ ॥ तद इत्यनेन तदादेशस्य सस्य ग्रहणमन्यथा व्यञ्जनात्सिलोपः सिद्ध एव । अनुकरणस्यापवाद इत्यत्र स्यदादित्वाभावः शब्दार्थानुकरणे हि 'प्रकृतिवदनुकरणम्' इति न्यायः प्रवर्तते । शब्दानुकरणे तु नेति । कथमिदमिति चेत् ? 'तदः सः स्वरे' इति "वैरिस्यवाचिनि" इति सूत्रग्रहणात् । पादार्थेयं पादार्थो यस्या इति वा पादार्था ।

'एतदश्च व्यञ्जनेऽनग्नञ्समासे' । १-३-४६ ॥ प्रकृतेः परः भूयमाणः चकारः प्रकृत्यन्तरसद्वितीयतां गमयन् पूर्वसूत्रभुतप्रकृत्यैव सद्वितीयतां गमयति । नञः समासो नञ्समासस्ततो द्वन्द्वगर्भो नञ्तत्पुरुषः । नञ्समासे च सति न भवतीति अनेन नञः क्रियासम्बन्धं दर्शयन अनग्नञ्समास इति प्रसज्यप्रतिषेधाऽयमिति दर्शयति । पर्युदासे हि सति नञिवयुक्तमन्यसदृशे इति न्यायेन नञ्समासादन्यत्राऽपि समास एव वर्तमानाभ्यामेतत्तच्छब्दाभ्यां सिलोपः स्यादिति । अनग्नञ्समासे इति प्रतिषेधात् परमैष करोतीत्यादौ तदन्तादपि सस्तुट् । यदं सम्पा जैनापाठ्यपरि इति ये मन्यः—अनुबन्धग्रहणादिति—अयमर्थः । सरिति इदनुबन्धग्रहणादन्यानुबन्धसहायस्य लोपाभावः, एतद् चरतीत्यादौ । अथाऽत्र परत्वादत्व पक्षे च कृत सकारस्याऽभावाल्लोपो न भविष्यति ? सत्यम्, विशपविहितत्वादत्वपरत्वाभ्यां पूर्वमेव लोपः स्यादिति । किञ्च एतद् सकम्नातीत्यादावपि स्यात् ।

---

१ ४-४-६२ । २ १-३-२० । ३ ७-१-८ ।

'व्यञ्जनात्पञ्चमान्तस्थायाः सरूपे वा'। १-३-४७ ॥ समाहारेऽपि यत्र स्वाद् इत्वाभावः। आदित्यो देवताऽस्याऽऽदित्य इति-अत्राऽकारलोप लुका सन्धि विधित्वात् स्थानिवद्भावप्रतिषेधेऽनेन पक्षे यलुक्। स्य इति कृतं शाङ्गरस्यादिष्वपि स्यात्।

'धुटो धुटि स्वे वा'। १-३-४८ ॥ प्रत्तमिति-प्रपूर्वाद्दाञेरारम्भेऽर्थे क्तेः, "मार्दागस्व०" इति त्तादेशः। अवदीयते स्म क्तः "निर्विर्णान्यचाम्" इति वा। क्षिप्धि पिण्ढि इति-क्षिपूपिषोः पञ्चम्या हौ "नैषां स्वरात्" इति श्नप्रत्यये "श्नास्त्यो-र्लुग्" इत्यलोपे "हुधुटः०" इति हेर्धिभावे 'धुतीयस्तृतीय' इति तृतीयत्वे "तवर्गस्य०" इति दत्वे "श्नो धुड्०" इति सत्वेऽनेन पक्षे दलोप चेति। मार्ग्रमिति-मृगो 'मृग्भ्यां नोऽन्त्यस्य" इति क्विति ग नागमे मृग्न 'तस्येदम्" इत्यपि।

'तृतीयस्तृतीयचतुर्थे'। १-३-४९ ॥ लिप्स्यते इत्यत्र सस्य गः, यदभवे इत्यत्र तस्य द आसन्नः प्राप्नोति।

'अघोषे प्रथमोऽशिटः'।।१-३-५०।। पयस्सु इत्यत्र "शषसे शषसं वा" इति विधानादपि न प्राप्नोति किमशिट इति वचनम? सत्यम्, श्च्योतत्यादयर्थम्। तथाऽशिट इत्यभावे वृक्षः पुष्य इत्यादौ कस्याऽशिः कादिरिति व्याख्यया विसर्गस्यापि प्रथम मान्तस्थाति धुट्त्वे अघर्षहविसर्गकपयाः कथ्मा इति कत्व स्यात्। श्च्योततीत्यादि प्रयोगत्रये यथासङ्ख्य चटताः स्युरिति। अस्ति आस्ते इत्यादिषु च सस्य तकारः स्यात्।

'विरामे वा'। १-३-५१ ॥ वैयधिकरणमिदमधिकरणम् कुङ् इत्यादि-यथाप्राप्तो धकारः, 'परिष्वभिज्ञस्तमो यभू" इत्यादौ रयः। कुक्कित्यादिचतुष्टये कटतपाः स्युः। यम इत्यत्र पः स्यादिति।

'न सन्धिः'। १-३-५२ ॥ संहितायामिति-सन्धीयन्ते वर्णा अस्यामिति "'धीपिभ् " इति क्विति ते संहिता, वर्णानां परः सन्निकर्षः। एकपद इति-विषय सप्तमीति इति, भवतीत्यादावेकपदे नित्य संहिता। धातूपसर्गयोरिति-धातूपसर्गयोः प्रेक्षयतीत्यादौ नित्यसमुदितत्वात्समासस्यापि निरन्तरानेकपदात्मकत्वात् पदधातूप-सर्गसमासानां नियमेनैकप्रयत्नोच्चार्यत्वाच्च विरामाभावान्नित्यं संहितेति। वाक्ये तु सर्वत्रैकप्रयत्नोच्चार्यत्वस्याऽनियमाद्विरामाभावेन संहितेति।

'रः पदान्ते विसर्गस्तयोः'। १-३-५३ ॥ विसर्गः प्रम्पूर्योपरि विन्दुद्वयं

---

१ ४-४-७ । २ ४-४-८ । ३ ३-४-८२ । ४ ४-३-१ । ५ ४-३-८१ । ६ १-३-४९ । ७ १-३-१ । ८ १-३-२९ । ९ उणा १४ । १० १-३-१६ । ११ १-३-६ । १२ ५-३-१६ । १३ उणा २१ ।

कृते, तयोरित्यत्रैकाऽपि सम्बन्धवशाद्द्विधा भिद्यते; एका वैषयिकेऽधिकरणेऽपरा त्वौपश्लेषिके इति । असिद्धं इति–प्रत्ययाश्रितत्वेन बहुस्थान्याश्रितत्वेन च बहिरङ्गता, वर्णमात्राश्रितत्वेन त्वन्तरङ्गता । पदान्तेऽपः पदनदिति च कृत्वादौ कृते रेफस्य पदान्तत्वमिति ।

'स्पागि'। १-३-५४ ॥ स्पाग्येव विसर्गनियमात् स्पाद् प्रथम इत्यस्मिन् जिह्वामूलीयोऽपि ।

'शिट्यघोषात्'। १-३-५५ ॥ अघोषात् परस्य पदान्ते रेफस्याऽसम्भवाद् घोषादिति शिटीत्यस्य विशेषणमित्याह–अघोषात्परे शिटीति ।

'अरोः सुपि रः'। १-३-५७ ॥ ननु पयःसु इत्यादिषु "सो रुः" इति कृतेऽन्त्यस्याकारेण रेफात्परः सकारः कथं न भवति ? सत्यम्, नित्यत्वात् "र: पदान्ते विसर्गस्तयोः" इति भवति । स्वर्णनाशाधिकन्यायो निरनुबन्धन्यायस्याऽनित्यत्वेन "र: कखपफयो:०" इत्यादौ छान्दसिकस्याऽपि भवति ।

'वाहर्पत्यादयः'। १-३-५८ ॥ निपातनात्पदान्ताधिकारो निवृत्तस्तेनोपस्पर्शे न याति, यथा च–सुपीरमित्यादि सिद्धम् । गीर्पतिरिति–अत्र क्षीरस्वामिना भ्रातुः पुत्रादित्यात् षत्वमिष्यते । प्रचेता राजन्निति सम्बोधने विशेषज्ञापनाय सम्बोधनादन्यत्राऽप्युदाहार्यम् । तत्र समास एव अन्यत्र तु अम्बादिरिति दीर्घत्वे विशेषाभावः । बहुश्रुतः–कर्मधारयात्समासान्ते प्रचेताराजः प्रचेतोराजः । प्रकटोऽप्याह–प्रचेतसो राजा प्रचेताराजः । प्रचेतो राजाऽस्य प्रचेताराजा प्रचेतोराजेति, आकृतिगणार्थत्वाद्बहुवचनस्य । वारि चरति कचिदिति के चार्थः । उषसि बुध्यते "नाम्युपान्त्य ०" इति के उषर्बुध इत्यनयोः षत्वमुत्वं च न भवतीति ।

'शिट्याद्यस्य द्वितीयो वा'। १-३-५९ ॥ अत्राऽयमर्थः प्रतिवर्गमाद्यस्य प्रथमापेक्ष च द्वितीयमिति, तेन कचटतपानां खछठथफाः क्रमेण शिटि भवन्ति । क्रमेणोदाहरणानि ।

'तवर्गस्य श्चवर्गष्टवर्गाभ्यां योगे चटवर्गौ'। १-३-६० ॥ स्नानित्याग्रहेत्यादि–अयमर्थो योगग्रहणं विना सहार्थे तृतीयायां "वैवर्णस्येषणोर्दित्व" इत्यादिवद् यथासङ्ख्यमपि स्नानित्याशङ्का । परिभ्यो यथासङ्ख्यं तु "पञ्चम्या निर्दिष्टे परस्य०" इति न्यायात्परस्यैव तवर्गस्य स्यान्न पूर्वस्येति योगग्रहणम् । ननु तवर्गस्य क्रियार्थत्वेन

१ ५-१-७१ । २ ५-१-५४ । ३ १-३-६ । ४ ७-४-१ ४ ।

च विशिष्टवर्णसमुदायस्याऽभिधानात् तथ् क्षेते इत्यादिषु एकैकस्य तवर्गशब्दाप्रवृत्तौ कथं कार्यित्वमिति ? सत्यम्, समुदायैकदेशस्याऽपि तदात्मकत्वात् ग्रामो दग्ध इत्यादिवत् समुदायशब्देनाऽभिधानात् दस्याऽपि तवर्गत्वे सति दकाररूपतवर्गस्याऽनन्तरः नकारः; यद्वा यथा ग्रामे वसति गृहे वसतीत्यादौ ग्रामाद्येकदेशादेरपि ग्रामादिशब्दाभिधानम्। न हि देवदत्तादिरेवमभिधीयमानो ग्रामं वा व्याप्य वसति किन्तु एकदेशे। तत्र स एकदेशो ग्रामो गृहं चोच्यते तद्वदत्राऽपीत्यदोषः। छन्छादयतीति— छदण् संवरणे इत्यस्य छदण् अपवारणे इत्यस्य वा युजादेः स्वार्थणिजन्तस्य रूपम्। छन्नापयतीति 'मणीकृत्यापारे णिग्' "हन्त्यर्थाच्च" इति णिगन्तस्य वा रूपम्। तातृ इति-शसि तस्रो तसि च रूपम्। एवं *भवत्त इत्यपि। पूर्वेण षकारयोगेति—" ने शात् " इत्यनेन निषेधो वक्ष्यते, परेण षकारयोगेति—" शिर्टवर्गस्य "—इत्यनेन। अनित्यत्वविकाराद् अशिश्रिषतीत्यत्र द्वित्वे कृते पश्चात्टवर्गः, अन्यथा अशिश्रिषतीत्यनिष्टं रूपं स्यात्। एवमशिश्रिटिषते इत्याद्यपि। एवमुत्तरसूत्रेऽपि "वर्गः क्रमम्" इति न भवतीति— तथ् क्षेते, तचरतीत्यादौ उभयाश्रितत्वात्तस्य बहिरङ्गं पदमाश्रितत्वात्कत्वमन्तरङ्गमिति। षकारस्य षत्वमपीति—ष्मवतीत्यादौ " सस्थे षणौ " इति कृतस्य षकारस्य " नैमत्तय० " इत्यनेन युक्ताश्रित षत्वं प्रत्ययाभावाच्च भवतीत्यर्थः।

' सस्य शषौ '। १-३-६१ ॥ ननु ष्मवतीत्यत्र ' दन्त्यापत्तिरिदं कार्यं तालव्यस्याऽपि भवतीति ' भणनात् " नाम्यन्तस्था० " इत्यनेन षत्वं कथं न भवतीति ? उच्यते-पाठकाले यो दन्त्यसकारस्तस्य कृतत्वाभावादिति।

' न शात् '। १-३-६२॥ तवर्गस्येति-असम्भवात्सस्येति न व्याख्यातम्।

' पदान्ताट्टवर्गादनाम्नगरीनवतेः '। १-३-६३ ॥ तवर्गस्येति—उपरत्र तवर्गस्येति भणनात्तवर्गस्य सस्य चेति सम्बध्यतेऽत्र। नामित्यामादेशस्येति—अनुस्वारस्य पान्तस्य षमन्तस्य च नमतरचयच एकः। अत्र च आमादेशो नाम् तस्यैवाऽर्थवत्त्वाद्ग्रहणमित्याह—षड्नाम—नामशब्दो नकारान्तोऽमशब्दोऽकारान्त इति।

' लिलौ '। १-३-६५ ॥ अनुनासिक एव भवतीति—विपरीतनियमस्तु निरनुनासिकस्य सानुनासिक इति, " तवँल्लस्य लुक्त " इत्यत्र लृकारेति करणाच्च भवति। प्रायिकं चैतज्ज्ञापकं, तेन "सेमानानां तेन दीर्घः" इत्यादौ भासम एव भवतीति।

॥ प्रथमाध्यायस्य तृतीयः पादः समाप्तः ॥

---

१ १-४-२ । २ १-१-११ । ३ १-३-६४ । ४ २-१-४१ । ५ १-३-६१ । ६ २-१-८७ । ७ १-१-१५ । ८ १-२-१४ । ९ १-३-१ । * भवर्ध तत्सम्-इमत्सोष शब्दो इत्यस्मात् वक्तिवि (ख्य १ ) इत्यनेन अन्यस्य भवत्यादे तस्य वक्तिकम्।

'अत आः स्यादौ जस्भ्याम्ये' । १ । ४ । १ ॥ अत्र प्रत्ययाप्रत्ययोरिति सिद्धे स्यादिग्रहणं "येयमसत्स्वरे" इत्यादौ प्रयोजनार्थम् । तेन राजभ्यामित्यत्र नलोपस्य स्यादिविधौ विधेयेऽसिद्धत्वादाकारो न भवति । न चाऽत्र स्यादिग्रहणाभावे "त्रिचतुरः" इत्यादिविहितस्य स्यादर्ग्रहणं भविष्यतीति । यतस्तस्य ग्रहणेऽपि न किमपि फलम् । अन्यच्च स्यादिग्रहणे श्रुतिग्रहणात् कर्मा प्रत्ययत्वात् 'विमेभिरिति" इत्येतत् प्रयुक्तं निषिध्यते । किंचाऽत्र स्यादिग्रहणाभावे यन्य इत्यत्राऽपि " येयमेनयेस्य " इति चाकित्वा-ऽभावः स्यात् । वृक्षा इति–अत्र असि अपवादत्वात्समानदीर्घस्याबाधकस्य " अकोऽस्य-पेऽपये " इत्यस्य बाधकोऽयमाकारः । भाभ्यामिति–इह भ्यस्य भवतीति "कैचिद् इति के अपकृतेर्वा सिद्ध । भमयाभ्यामिति–स्यादेः पूर्वमेकपदत्वाभावात्कथ " ऐप् वर्ये इति वत्वं भमभप्रकृतेः ? उच्यते–भाविनि भूतवदिति न्यायाद्भवति । भमभा-येति–भकारसन्निपातेन विधीयमानो यकारस्तद्विघाताय कथं प्रभवतीति न वाच्यं, यग्रहणनैयर्थ्यप्रसङ्गात् ।

'भिस ऐस्' । १ । ४ । २ ॥ एसादेशनैवेति–एसादेशे कृते "वृक्षैः" इति न वाच्यं, विधानसामर्थ्यात् । अन्यथा वृक्षैरित्यनिर्दिष्टं स्यात् । तदा इसिति कुर्यात् । अतिजरसैरिति–एकदेशविकृतस्याऽनन्यत्वात्कृतजरसोऽपि जराशब्द एवाति । भिस्स टति–प्यांच इत्यस्याऽभिपूर्वस्याऽभिप्सायत इति "पर्यवगोदावः" इत्यादि पृषोदरादि-त्वादभेरकारलोपे यस्य सकार आपि तत्स्थानुरोधाद्विकल्पेन टाभवे भिस्सा भिस्सटा ।

'इदमदसोऽक्येव' । १ । ४ । ३ ॥ इदावधारणार्थं इति–तेन प्रत्ययनियमो न भवति । तदभावे च तकैः विश्वकैरित्यादि सिद्धम् ।

'टाङसोरिनस्यौ' । १ । ४ । ५ ॥ अन्ये स्थिति–यदि हि अतिजरसिनेत्येव-स्याधकारस्य साधुत्वेन नाऽभिमत स्यात्, तदा टा इत्येतस्य नकारादेशमेव कुर्यात् तत्राऽपि येनेत्येव कृत वृक्षेणेत्यादि सिध्यत्येव । कथमेतमिति चेत् येदनुस्मोऽचि इत्यत्र टावचनग्रहणात् ।

'ङेरस्योपधीतो' । १ । ४ । ६ ॥ अत् इत्येव क्रियताम् किं दीर्घकरणेन ? न चैवं कृते वृक्षस्याः इति प्राप्स्यतीति, तदा हि त् इत्येव कुर्यात् । सत्यम् । मतान्तरेऽतिजरसा-दित्यपि मन्यते तत्सिद्धयर्थं दीर्घकरणम् । दीर्घकरणाच्च स्वमतेऽपि सम्भवमिति बोध्यम् ।

१ १-१-६ । २ १-१-१ । ३ ३-४-११ । ४ ७-४-६८ । ५ १-३-११३ ।
६ ५-१-१ १ । ७ १-१-१२ । ८ ५-१-११ । ९ १-४-४ ।

‘सर्वादेः स्मैस्मातौ’ । १ । ४ । ७ ॥ परमसर्वस्मायिति—स्यादाक्षिप्तस्य नाम्नः सर्वादिविशेषणाद्विशेषणेन च तदन्तविधर्भाव्यत्र सर्वादिरिति द्वन्द्वे निषेधाद्वा ‘ग्रहणवता नाम्ना न तदन्तविधिः’ इत्यस्याऽनुपस्थानाच्चदन्तस्य परमसर्वस्मै इत्युदाहृतम् । केवलस्य व्यपदेशिवद्भावात्तदन्तत्वं द्रष्टव्यम् । विश्वस्मायिति—सर्वशब्द साहचर्याद्विश्वशब्दस्याऽपि समस्तार्थस्य ग्रहणं न तु जगदर्थस्य । स्वार्थिकप्रत्ययेति—इत्य यदतोऽयमाशयः । स्वार्थिकप्रत्ययोऽपिगणपाठफलमिति । भवराणीति—शब्दरूपापेक्षया नपुंसकनिर्देशो नाऽर्थापेक्षया । तेन स्त्रीपुंनपुंसकेषु सर्वेष्वप्यर्थेषु सर्वादित्वमिति । स्वाभिधेयेति—पूर्वादीनां शब्दानां स्वाभिधेयो दिग्देशकालस्वभावोऽर्थस्तमपेक्षते यः स स्वाभिधेयापेक्षः । चोऽवधारणे । दिगादीनां अर्थानां पूर्वादिशब्दाभिधेयानां यत्पूर्वादित्व तन्नियमेन कञ्चिदवधिमपेक्ष्य सम्पद्यते न त्ववधिनिरपेक्षम् । तथाहि—पूर्वस्य देशस्य यत्पूर्वत्वं तत्परं देशमवधिमपेक्ष्य भवति । परस्याऽपि यत्परत्वं तत्पूर्वदेशमपेक्ष्य भवति । तस्मात् पूर्वादिशब्दवाच्यापेक्षयेऽवधर्मे केनचिदवधिना भाव्यम् । तत्र तस्यैवाऽवधेः पूर्वादिशब्दाभिधेयापेक्षोऽवधिभाव एकान्तिकः स नियमो व्यवस्थापरपर्यायः । तस्मिन् गम्यमाने पूर्वादीनां शब्दानां स्वाभिधेय एव वर्तमानानां सर्वादिकार्यम्, न तु वाच्ये । यो हि पूर्वादिशब्दाभिधेयादर्थादन्यस्याऽवधिभूतस्य नियम स एव पूर्वादिशब्दवाच्यो भविष्यतीति । अतस्तस्मिन्नान्तरीयकतया गम्यमाने पूर्व-पर अवर-दक्षिण-उत्तर-अपर-अधर इत्येतानि सप्तशब्दरूपाणि सर्वादीनि भवन्ति । अवधिमति दिगादिलक्षणे वर्तमानानि पूर्वादीनि सर्वादीनि भवन्तीत्युदाहरति—पूर्वस्मै इत्यादि । बहिर्योगेनेति—बहिर्योगे वर्मे बहिष्ठ चर्मणि बहिःशब्दः । पुरि वर्तते इति—पुरीति शब्दप्रधानो निर्देशः । यदाऽन्तरशब्दस्य पुर्व्यञ्जनान्तो वाच्यो भवति तदा सर्वादित्वस्य निषेधः । यदा ईकारान्तोऽकारान्तो वा पुरः पुरी शब्दद्वयम् वाच्या भवन्ति तदा सर्वादित्वमस्त्येव । सर्वविभक्त्यादय इति—आदिशब्दाद्यथायोगमकजेकशेषपूर्वनिपात पुम्वद्भावद्विभाव्—आयनिञ्—मयट्—अकच्प्रयोजनानि गृह्यन्ते इति । न तु सर्वमादीयते गृह्यतेऽभिधेयस्यैतस्यान्यार्थाभिधानात् सर्वेषां यानि नामानि सर्वादीनि । संज्ञोपसर्जने च विशेषेऽवतिष्ठेते । तथाहि—यदा सर्वशब्दः संज्ञात्वेन नियुज्यते तदा प्रसिद्धप्रवृत्तिनिमित्तपरित्यागात्स्वरूपमात्रोपकारी प्रवर्तत इति विशेष एवाऽवतिष्ठते । उपसर्जनमपि महत्त्वाधममहत्त्वार्थातिक्रान्तार्थविशेषणतामापन्नम् अतिसर्वमित्यादावतिक्रान्तार्थेषु विशेषयति । एवं बहुव्रीहावपि । उभसूत्रयञ्जो नाम्युपाम्य०” इति च उभः । तत्पूर्वापादः “ आतो वो हायनः ” इति के निपातनाद्विद्यत उभयट् । तदरति—प्रत्ययान्तर

१ ५-१-५४ । २ ५-१-५५ ।

रूपम् । भिस्वारिद् सम्भ्रमेऽत्तः " केचिद् " इति के । त्वत् अस्यैव धातोः " संज्ञेश्च स्यात्मत्वायः " इति निपातनात् ।

'नेमार्धप्रथमचरमतयायाल्पकतिपयस्य वा' । १ । ४ । १० ॥ द्वितयेति-तयि रूपे च, अपि मतायाम्यामपि तयायौ शब्दौ स्तः । परं व्याख्यानात्तयायौ प्रत्ययौ । तयोः केवलयोरसम्भवात्तदन्तस्य कार्यं दर्शयति-तयेति व्युत्पत्तिपक्षे तद्-साहचर्यात्तयस्य तद्धितस्य ग्रहणं, न तु " गर्वेहयस्य " इत्यौणादिकस्य । व्यवस्थित-विभाषेति-व्यवस्थित मर्यादानतिक्रान्तं प्रयोगजातं विशेषेण भाषते विभाषेति । अर्धा नाम केचिदिति-नामेत्यव्ययम् । नाम नाम्ना संज्ञया नाम प्रसिद्धार्थो वा । केचिदर्धन्ते किं नाम अर्धा नाम तदा क्लीबः ।

'द्वन्द्वे च' । १ । ४ । ११ ॥ वर्णाश्रये च दशनाम्नि कृते द्वन्द्वस्योभयपदप्रधानत्वेऽपि वर्णदशना इत्यत्र 'द्वन्द्वे च' इति न विकल्पः । सर्वादिरित्यानन्तर्यषष्ठी विज्ञानात् । यद्वा सर्वादिरित्यावृत्त्या पञ्चमी व्याख्येया । 'पञ्चम्या निर्दिष्टे परस्य' इति न्यायाच्च स्यादेर्व्यवहितत्वाच्च भवति । वस्त्रान्तरवसनान्तरा इति-वस्त्रमन्तरं येषां ते वस्त्रान्तराः । सर्वादित्वादन्तरशब्दस्य पूर्वनिपाते प्राप्ते सप्तम्यन्तादित्वात्परस्य पूर्वनिपातः । एवं वसनान्तराः । ततो वस्त्रान्तराश्च वसनान्तराश्चेति कृते समानार्थत्वादेकशेषः प्राप्नोति । नैवम्, अत्र वसनशब्दो गुहपर्याय इति न समानार्थत्वम् । यद्वा एकोऽन्तरशब्दो व्यवधानार्थो अन्यश्च विशेषार्थो । ननु चाऽन्तरशब्दो बहुव्रीहौ वर्तते न द्वन्द्वे इति कथमस्य प्रत्युदाहरणं, न । सदवयवको बहुव्रीहिरपि द्वन्द्व इति ।

'न सर्वादिः' । १ । ४ । १२ ॥ सर्वादिकार्यमिति-सर्वादिकार्यं कर्मणास्थाने न प्राप्नोतीत्यर्थः, प्राप्तावपि परस्यैव भवे ।

'तृतीयान्तात्पूर्वावर योगे' । १ । ४ । १३ ॥ समाहृतेति पूर्वशब्दस्याऽवरेण सह समाहृतिर्मेऽभिप्रेत इति समासात्समाहारः । कर्मधारयो वा पूर्वावयवयोभावादिति । योगे सम्बन्ध इति-योग एकार्थीभावो व्यपेक्षा चोभयं गृह्यते । मासपूर्वायेति-"पूर्वसदृश॰" इति समासः । तृतीयाया अपि तृतीयायाः 'स्थानीयाः' इति स्थानिवत्वेन तृतीयान्तत्वम् । लुप्यमानेऽपि इति परिभाषया पूर्वस्य प्रत्ययस्य प्राप्तं लुपि निमित्तभूतायां तदेव निषिध्यते । अतः "अचोऽचि" इति स्थानित्वं ततस्तृतीयान्तत्वं सिद्धम् । ननु मासपति मासेनेत्यत्र योगग्रहणं विनाऽपि " सर्वादौ पदविधिः " इति न्यायेन भविष्यति

१ ५-१-१११ । २ कथा ४२ । ३ कथा १० । ४ ७-४-१४ । ५ १-१-६ ।
६ ७-४-११२ । ७ ७-४-११ । ८ ७-४-१३१ ।

निषेधः किं योगग्रहणेन ? उच्यते, योगग्रहणादन्यदपि सिद्धं, अपरैः सामान्येन तृतीयान्तेन योगे प्रतिषेधः कृतो, न तृतीयान्तात्, तेषां मते पूर्वाय मासेनेत्यपि भवति, तन्मतसंग्रहार्थं तु पूर्वदिग्योगेऽपि पञ्चमी व्याख्येया ।

'अवर्णस्यामः साम्' । १ । ४ । १५ ॥ परस्परायामः सामादेशे यत्रैव सामादेशे(शः) एवोच्यते( च्येत ), परोक्षादयस्तु आम् धातोर्विधीयमानः सर्वैर्न सम्भवति, "कर्तुः क्विप्०" इति क्विप्प्रत्ययान्ततायां सम्भवेऽपि स्यादेरित्यधिकाराभिरस्यत इत्याह—षष्ठीति ।

'आपो ङितां यै यास् यास् याम्' । १ । ४ । १७ ॥ आबन्तादि, पूर्वसूत्रेषु सर्वादिरव्यभिचारेऽप्युत्तरसूत्रे सर्वादिग्रहणादिह सामान्यमवगम्यते इति । कारीषग न्धायै, अणि अणन्तत्वात् "अणेये०" इति इञि तु 'तुर्बोते" इति ङीः प्राप्नोति ? नैवं, यत्र ण्यादेशः समवन्ति, "अयमयेकप्०" इति सूत्र स्वरूपस्याप्यो ग्रहण, न ण्यादेशरूपस्य, एतद् व्याख्यानतो लभ्यते, इञस्तु इकारान्तस्य ङीरुक्तः ।

'सर्वादेर्डस्पूर्वाः' । १ । ४ । १८ ॥ अस्य, इदम्शब्दस्य 'ङौ डेः" इत्यस्मे 'ङोरस्या " इत्यकारलोप "आत्" इत्यापि "आपो ङितां०" इति यायायादेशे "अनक्" इत्यदादेशेऽनेन डस्पूर्वत्वे "डित्यन्त्य०" इत्यकारलोप, यथात्र यायायादेशे कृते सर्वादित्वेन तस्यापुमादित्वात् कसि कृते व्यञ्जनादित्वाभावादक्रूपमदादेश इत्याह—परत्वादिति । प्रियसर्वायै इति—सर्वशब्दस्य प्राक्निपाते प्राप्ते "प्रियैः" इत्यनेन प्रिय स्य प्राक्निपातः, अथ बहुव्रीह्यादेरिति—परेण बहुव्रीह्यादेरिति प्रागभिधये तदेवाऽन् दित अत आदेः फल न निरीक्ष्य, त्वकं पिताऽस्याऽक पिताऽस्य इकौ पुत्रावस्य क समयचारिणोऽस्येति ।

'टौस्येत्' । १ । ४ । १९ ॥ एदिति तकारोऽसन्देहार्थ, अन्यथाऽन्तरेण तकारमेरित्युच्यमाने किमिस्येकार आदेशो भवत्याहोस्विदिकारः स्यात्, टौसोः परयोः पूर्वे आदेशा इति सन्देहः स्यात् ।

'औता' । १ । ४ । २० ॥ आबन्तस्यैवेति, आबन्तस्यस्येकाऽपि षष्ठी द्विधाऽर्थवशाद्भिद्यते, सम्बन्धितया स्थानितया इत्याह—आबन्तस्य सम्बन्धिना औता सह आबन्तस्यैव स्थाने इति । बहुसङ्ख्ये—एकवदिति "सैनानीवा०" बाऽऽबन्तत्वम् ।

---

१ ३-४-१५ । २ १-४-२ । ३ १-४-७१ । ४ १-१-७१ । ५ १-१-११३ ।
६ १-४-१८ । ७ १-४-१७ । ८ २-१-२६ । ९ २-१-११४ । १० १-१-१५७ । ११ ७-४-१ ३ ।

निर्देशात्सखिपती नाऽनुवर्तेते, स्त्रिया इति विशेषणस्य विशेष्यसापेक्षत्वात्सखिपतिभ्यां परेषां क्विपां " क्षितिक्षीतीय टर् "इत्येवमादिभिर्विशेषविधिभिराभ्रातत्वादित्करणस्य तु प्रयोजनवत्त्वात्सामान्यमिदुदन्तमधिकृत्य गम्यत इत्याह—इदुदन्ताच्छब्दा इति ।

' स्त्रीदूतः ' १ । ४ । २९ ॥ स्त्रियै इति, ग्रामण्यादि शब्दो हि क्रिया शब्दत्वात्रिलिङ्गत्वाभित्यस्त्रीविषयो न भवतीति स्त्रियामपि वर्तमानादापेक्षाभावः । आमलक्या इति–आमलकादुणादिप्रत्ययान्तात् ङ्य । आमलकी वृक्षवाची ध्वनिः । यद्याऽऽमलकस्य फलं विकारो वृक्षः, दुःसंज्ञकस्य मयटो यथा पाटलकान्लुप्, गौरादित्वात् ङीः, तदापि आमलकीशब्दो वृक्षवाची, वर्णविधित्वेनति, इकारोकारौ यत्रौ तदाभिता दापादयः ।

' वेयुवोऽस्त्रियाः ' १।४।३० ॥ आध्यै, आध्यायति, प्रध्यायति, आदधाति, प्रदधातीत्येवंशीलाऽऽधीः, प्रधीः, एतौ च शब्दौ बुद्धिवाचकौ यथाभूतमित्यस्त्रीलिङ्गौ, आधीप्रधीशब्दौ क्रियाशब्दत्वेन सर्वलिङ्गत्वाद्ग्रामण्यादिशब्दवदित्यस्त्रीविषयौ नेति चिन्त्यमेतदित्येके ।

' आमो नाम् वा ' १ । ४ । ३१ ॥ षष्ठीबहुवचनस्येति, अत्र स्त्र्यानस्य सानुबन्धत्वादपरस्य चाऽसम्भवात्साधवधिकाराच्च षष्ठीबहुवचनस्यैवाऽऽमो ग्रहणम् ।

' ह्रस्वापश्च ' १ । ४ । ३२ ॥ पूर्वेण विकल्प एवेति विशेषविहितत्वेनाऽपवादत्वादिति शेषः ।

' संख्यानां र्णाम् ' । १ । ४ । ३३ ॥ र् च ष् च न् च तेषां ष्णाम् । "चवर्गस्य " इति यस्य " रषृवर्णा० " इति तु न एकपदत्वाभावात् । "वोत्तरपदान्त०" इत्यपि न, यतः षकारो न पूर्वपदस्थः किन्तु मध्यपदस्थः । तर्हि रेफ पूर्वपदस्थोऽस्ति तदपेक्षया णत्वं भवतु ? न, पदेऽन्तर इति निषेधात्, ननु र्णामिति शब्द निर्देशः संख्या चैकत्वादिरथः । ततः शब्दार्थयोः सामानाधिकरण्यं न सङ्गच्छते ? सत्य, उपचारात्संख्यार्थाः शब्दाः संख्याशब्देनाऽभिधीयन्ते, यथा संख्यायत आभिरिति " उपसर्गादातः " इति करणाधार इति परमप्यनर्ट बाधित्वा बहुलवचनादङि आपि च, संख्याशब्दनैकादयः शब्दा प्रयोज्यन्ते इति । त्रिंशतामिति ननु च त्रिंशदादयः शब्दाः संख्येयेष्वपि वर्तमाना " विंशत्या द्यास्तदन्ते " इति वचनादेकस्य एव वर्तन्त इत्यत्रैकवचनान्ता एव भवितुमर्हन्ति कथं बहुवचन ? सत्य, एकशेषात् । अथा-

१ १-१-९ । २ १-१-६१ । ३ १-१-७५ । ४ ५-१-११ ।

नामिति अथाऽप्यनुशब्दादामि परस्मात् " षाईन० " इत्याकारे नान्तस्याभावात्कथं नाम् भावोऽत्र आदाऽऽम् तद्वचनान्वाया भवीति।

' प्रेरणया ' । १ । ३ । १४ ॥ आमः सम्बन्धिन इति, सम्बन्धस्योभयनिष्ठत्वं आमः सम्बन्धिन इत्यपि युक्तं, आमः सम्बन्धित्व च प्रत्येकारकं, यस्मादामः सम्बन्धी प्रेरकस्ततः स आम इत्युच्यते, आम्सम्बन्धीति-कार्यकारणभावे षष्ठी । त्रिशब्दः कारणमाम् च कार्ये, यथा त्रिशब्दमधुत्वे माम् ।

' एवोत्कृभ्यो वसिरुक्तो रः ' । १ । ४ । १५ ॥ सूत्रतकारस्वरूपग्रहणार्थः, तेन लाघविकमोरप्येदोतोः परिग्रहः । परमेरिति- "भावो नेन्द्रवरुणस्य " इति ज्ञापकात्पूर्वपूर्वोत्तरपदयोः कार्ये ततः सन्धिकार्यमतः परमरिति प्राप्नोति ? नैवं, ' ज्ञापकज्ञापिता विषयो ह्यनित्या ' इति ।

' क्षितिक्षीतीय उर ' । १ । ४ । १६ ॥ इति सायते दीयते स्म युष्मैः सास सातिः सौत्रः, सुखे सावति वा मुख्य इति अत्र विधि कृत ' प्वोः यैऽम् " इति यस्य लुम्न, यतः ' स्वरस्य परे० " इति विलोपः स्थानी। न च ' नै सन्धि इत्यस्याऽप्रवृत्तः, 'नञा निर्दिष्टस्याऽनित्यत्वात्', मधतु वाप्यकाञ्चस्त्वदेवसूत्रं "य्वोः प्वऽप्० " इति सूत्र लुम इति संज्ञा, संज्ञापूर्वको विधिरनित्यो यथा ' फ्रो " इति सूत्र करणात् किम्भिर्योर्म्पिञ्जनकार्यमनित्यं यतो प्रयोगिनामुपलक्षणः क्विप् ।

' ऋतो डुर ' । १ । ४ । १७ ॥ ऋकारापदिष्टं लृकारस्याऽपि, तेन ऋफिता विक्तये कृतलृकारः यदाह उपाध्यायः-माप्लृ इत्येतस्मात् पतृपामाप्ल इत्येव भवति।

' तृस्वसृनप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृप्रशास्त्रो घुट्यार् ' । १ । ४ । १८ ॥ प्रशास्तादनाम्स्वर इति न । तत्र ऋकारोपादानाद्वा, कथमिति चेत् ? प्रशास्तृणाम् प्रशास्तृसस्य । अतिकर्तारमिति-अत्र तत्पुरुषो न बहुव्रीहिः कथप्रसङ्गात्तेन च व्यवधानेन प्राप्स्यमाणात्, नन्वत्र सूत्र घौ निमित्ते किं न दर्शितम् ।' स्वौष्मौ " इति न्यागमव्यवधानात्म प्राप्नोतीति चेत्र नागमः प्रकृतरेषोऽत्र इति, सत्यं; अवयवेनाऽवयवस्य प्रकृत्यवस्य व्यवधानं भवतीति न दर्शितम् ।

' अर्वी च ' । १ । ४ । १९ ॥ कौ घुटि चेति-अत्र निमित्तान्तरः श्रूयमाणम

१ ७-४-५२ । २ ७-४-११ । ३ ४-४-१३१ । ४ ७-४-११ । ५ ७-४-१११ ।
६ ४-४-११५ । ७ १-४-६५ ।

कारो निमित्तान्तरसम्पेक्षः प्रत्यासत्तेरनन्तरस्त्रोपात्तमेव निमित्तमुपस्थापयति, कर्त्रपि सखे पितरि धारिणीत्यादावुभयोः सावकाशत्वेन ।

' मातुर्मातः पुत्रेऽर्हे सिनामन्त्र्ये ' । १ । ४ । ४० ॥ ननु कथं मातृशब्दस्य पुत्रार्थे वृत्तिर्न ह्यसौ पुत्रार्थे वर्तमानः क्वचिद्दृष्ट इत्याह—सामर्थ्यादिति । अयमर्थः—केवलो न वर्तते बहुव्रीहौ तु स्वार्थोपसर्जनतयाऽर्थान्तरं प्रतिपादयत्येव, कथोऽयवाद इति, अनन्तरानन्तरिभावे षष्ठीव्याख्यया, तेन कथा व्यवधानेन स्यात्, सम्भावित उत्कर्षो यस्याः सकाशात्, तत्पुत्र इति व्यपदेशः कथन तस्य योग्य, अरे गार्गीमातृकेति—महागपितृकत्वेनाऽनेकपितृकत्वेन च निन्दया मात्रा विगुणः पुत्रो निन्द्यत इति ।

' ह्रस्वस्य गुणः ' । १ । ४ । ४१ ॥ अधिकृतस्य नाम्नो विशेषणाद्विशेषणेन च तदन्तविधिसम्भवादाह—ह्रस्वान्तस्येति श्रुतत्वादिति, श्रुतो ह्रस्वो ह्रस्वान्तस्त्वनुमितं, ' श्रुतानुमितयोश्च श्रौतो विधिर्बलीयान् ' इति न्यायः, ह्रस्वविधानेति—' उभयोः स्थाने च ' इति न्यायेन यदा सिव्यपदेशस्तदा सिर्ह्रस्वश्चाऽस्ति, अतो विधानसामर्थ्यात्, यदा तु ह्रस्वव्यपदेशस्तदा सेरभावाच्च भवति ।

' एदापः ' । १ । ४ । ४२ ॥ आपाऽऽदापूर्वान्त्याकारप्रश्लेषात्, हे प्रियखट्वेत्यत्र " गोश्चान्ते० " इति ह्रस्वत्वे ' एकदेशविकृते'ति न्यायात्प्राप्तोऽप्येकारादेशो न भवति ।

' नित्यदिद्द्विस्वराम्बार्थस्य ह्रस्वः ' । १ । ४ । ४३ ॥ शॄं गृणाति शृङ्गः धनुविस्तस्याऽपत्यं शार्ङ्गरवी । हे अक्केति—अक्क कुटिलायां गतावित्यस्य निष्कुलक्क " इत्यादिना निपातनात्कप्रत्यये । अतते: पुँवपित्त " इति त निपातनादत्ता, अली भूषणादौभस्य " भिलाक्षभिक्ष० " इत्यादिनिपातनाल्लेऽल्ला । हे हूहू ?—अह्वतेः पूर्वो ददादित्वाद्प्रत्यये द्विर्वचनादौ । हे वातप्रमीः ? नायमीकारान्तो नित्यदित् किन्तु पुंलिङ्गोऽपि, हु सुश्रियति—" केवयु० " इति निपातनाद्भ्राम्यतेर्भ्रु । शोभन भ्रु भ्रमर्णं यस्याः सुभ्रुशब्दाद्स्त्रीत्वमनम जातित्वादूङ्, परस्य विकल्पन वित्वात् हे सुभ्रूः, ! हे भीरो ! प्राप्तमित्यभिप्रायः ।

' अवेतःस्पमोल्लुक् ' । १ । ४ । ४४ ॥ आमन्त्र्य इति वर्तते । तत्र च स्यादेश एवाम्सम्भवतीत्याह—स्यादेशति । हे कतरदिति—ननुअमप्रहणस्याऽन्यत्रपि फलं कस्मान्न भवति, यथा कुम्भस्य समीपानि ह उपकुम्भमित्यत्र लुगर्थ ? नैवं, सिसाहचर्यादेकवचनादेशस्याऽमो ग्रहणं, न बहुवचनस्थानस्य ।

---

१ १-४-९६ । २ उणा ९९ । ३ उणा २४ । ४ उणा ४१४ । ५ उणा ७४६ ।

'दीर्घङ्याब्व्यञ्जनात्सेः'। १। ४। ४५॥ कुमारी ब्राह्मण इत्यत्र नैतत् किमादीनां डीस्योर्व्यवधायकत्वे, स्थानित्वम्। यतः स्थान्याश्रये इत्वादिके कार्ये कर्तव्ये स्थानित्वं, न तु व्यवधायकत्वे, नहि व्यवधायकत्वं कार्यं नाम अपि तु इत्वा-दीनि कार्याणीति; एवमप्योदुमिरपादिषु सिचो लोपस्य हसे कर्तव्ये न स्थानित्वम्।

'समानादमोऽतः'। १। ४। ४६॥ अचिनवमिति, न च वाच्यं परत्वादि-त्यवाच गुणेन भाव्यमिति, प्राप्तौ हि सत्यां हि परत्व नित्यत्व च चिन्त्यत इति।

'दीर्घो नाम्यतिसृचतसृषः'। १। ४। ४७॥ आमादेश इति, स्याद्य-भिकारादामादेश गृह्यतेऽत इदमुक्तं अपू इति, ननु षकाररेफाभ्यां व्यवधानादेव न भविष्यति दीर्घः, किं पूर्वग्रहणेनेत्याह—नकारेणेति, अन्यव्यञ्जनेन तु असम्भव इति।

'शसोऽता सश्च नः पुंसि'। १। ४। ४९॥ ममानस्येति, अत्र यद्यपि ममानस्य शसोऽकारस्य च स्थानित्वं, तथापि 'प्रधानानुयायिनो व्यवहारा भवन्तीति' प्रधानस्यान्यासन्न एव दीर्घो भवति, प्रधानस्य च षष्ठीति निर्दिष्टस्य समानस्यैवेति 'प्रधानस्यान्यासन्न' इति वचनात् मुनीनित्यादौ शसोऽकारस्याश्रयपदविसर्गस्यासन्नत्वे-ऽप्याकारो न भवति।

'संख्यासायवेरह्नस्याहन् ङौ वा'। १। ४। ५०॥ अभिधये इति, द्वयोरह्नोर्भवो द्विगविकमिति तद्धितविषये सेऽभिधयेऽपि अह्नादेशः, शाकटा-यनस्तु चेषाकवेम्य इवभिधयेऽट्प्रत्ययमिच्छति, स्वमते तु न, द्व्यह्न इत्यस्या-प्यसमापित्वात्। यावदह्न इत्यादिषु दुसंज्ञकस्य दोरीयविषयेऽपि तत ईयस्तस्य च। द्विगोरनपत्य० इति लुक्, द्व्यह्ने इति, "द्विगोरह्नोऽट्०" इत्यत्राह्न-ग्रहणमपायमवत् सर्वोऽस इति परमप्यटं बाधित्वा द्विगोरह्नोऽट्" इत्यट् ततोऽह्नामावः।

'निय आम्'। १। ४। ५१॥ अस्माम, "आमो नाम्वा" इति नामादेशो न भवति, तत्र निरपत्त्रीस्तोऽभिकृतत्वात्, नन्वेकस्वरत्वविकृतवति ग्रीवऽपि प्राप्ति-रस्ति, न, निय ईनी इति, ईकारप्रश्लेषात्, निनिग्रामणिनि इत्येव भवति, सोऽयन तु भूतपूर्वन्यायेन नपुंसके नियामित्युक्तम्।

'वाऽष्टन आः स्यादौ'। १। ४। ५२॥ पूर्वसूत्राद् भेनुवर्तिष्यति भूरिति स्यादिग्रहणं, अथ—

---

१ १-१ ८ । २ १-१-१४ । ३ ७-३-११ । ४ ७-१-११८ । ५ १- -११ ।

'अष्ट औ अंस्शसोः' । १ । ४ । ५३ ॥ इत्यत्र अष्ट इति ज्ञापकात् केचित्तु धुर्ति भविष्यतीत्यर्हि मतान्तरसंग्रहार्थम् ।

'अतिष्णः सख्याया लुप्' । १ । ४ । ५४ ॥ सन्निपातलक्षणत्वादिति, सन्निपतति कार्यमस्मिन् सन्निपातो निमित्त शिलक्षण स लक्षण चिह्न यस्य तस्य ।

'नपुंसकस्य शिः' । १ । ४ । ५५ ॥ स्त्री च पुमांश्च स्त्रीपुंसौ "स्त्रियाः पुंसो०" इति समासान्तः, न स्त्रीपुंसौ नस्तादित्वाभावाऽद्भावः, पृषोदरादित्वात्स्त्रीपुंसशब्दस्य पुंसक आदेशः ।

'औरीः' । १ । ४ । ५६ ॥ कार्यकार्यिणोरभेदनिर्देशः सर्वादेशार्थः, अन्यथा "षष्ठ्याऽन्त्यस्य" इति न्यायाद्विशिष्टावयवस्यौकारस्य स्यात्, यतो म औ इति प्रकृतौ "ऐदौत्सन्ध्यक्षरे" इत्यनेनौकारो निष्पादितः ।

'अतः स्यमोऽम्' । १ । ४ । ५७ ॥ नन्वत्र अद्ग्रहणं किमर्थं, न च वाच्य मद्ग्रहणाभावे दधीत्यत्राऽप्यमादेशः स्यात्तोऽनतो लुगिति सूत्रं बाधक विद्यते इति ? ननु अनत इत्यत्र प्रसज्यप्रतिषेधः पर्युदासो वा नञ् गृह्यत इति सन्देहः, न च वाच्यं पर्युदासाश्रयणे हि नामिनो लुगिति सूत्र कुर्यात् तस्मात्प्रसज्य एव, इदमपि न वाच्य, इत्थं कामपरं प्रकर्षमध्यापक इत्यत्र क्रियाविशेषणत्वे आकारादप्यमो लुगापत्, अतोऽनत इति कर्तव्यमेव, अतः सन्देहस्तदवस्थ एवाऽतोऽग्रो ग्रहणेन ज्ञाप्यते प्रसज्य एव गृह्यते, तथा च पय इत्यादौ लुप् सिद्धा न स्यमादेशः । अदिति नपुंसकस्य विशेषणमन्तस्तदन्तप्रतिपत्तिर्भवतीत्याह अकारान्तस्येति, अम्ग्रहणमुत्तरार्थं, तेनाऽन्यस्यस्येति ।

'पञ्चतोऽन्यादेरनेकतरस्यदः' । १ । ४ । ५८ ॥ पञ्चसंख्या परिमाणम स्य "पञ्चदशद्वर्गे वा" समासान्तः ।

'अनतो लुप्' । १ । ४ । ५९ ॥ नन्वनत इति किमर्थं, न च वाच्य कुण्डमित्यत्राऽपि स्यात्, "अतः स्यमोऽम्" इति बाधकात् ? अत्रोच्यते, अनत इत्यभावे पञ्चतोऽन्यादे"रित्यतोऽन्यादेरित्यागच्छेत्, न च वाच्यमन्यादेरनपेक्षमेव योगं कुर्यात्, पूर्वमेकतरवर्जितस्याऽन्यादेर्ग्रहणमिति पृथग्योगस्य साफल्यात् । हे कर्तृ ! इत्यादौ निरवकाशत्वात्प्रथम सिलोप प्रत्ययलोपलक्षणन्यायेन ह्रस्वस्यति गुणः कस्मान्न भवतीत्याह—लुक्मत्वेति ।

---

१ ७-१-३६। २ ७-४-१६। ३ १-२-१२। ४ ६-४-१७५। ५ १-४-५७।

'नामिनो लुग्वा' । १ । ४ । ५१ ॥ प्रियतिसृ कुलमिति, "[1]चतुरनस्" इत्यत्र धुटः सेत्रदभावद्य स्त्रीवत्त्वेन धुटस्याभावे सेः स्थानिवत्त्वमपि न चाः ।

'वाऽन्यतः पुमांष्टादौ स्वरे' । १ । ४ । ५२ ॥ पुवद्भेति-परार्थे प्रयुज्यमानः शब्दो यतिमन्तरमाऽपि यस्यार्थे गमयति, अत्राऽपि परार्थो नपुंसकस्तत्र हि प्रयुक्तः पुमानति । ग्रामण्या ग्रामणिनति, ननु पूर्व त्रिस्त्र्यचेरित्यादिना यत्वं कस्मान्न भवति ? सत्यं, इदुतोऽस्त्रेरित्यत्र स्त्रिवर्जनेन परमपीयुन् यत्वादि, इदुदाश्रितत्वेन बाध्यते इति भवनात् । '[2]आदन्तादागम' इति न्यायाद्यत्वं बाधित्वा नोऽन्तः । ग्रामण्येति ग्रामणीशब्दस्याऽनेन पुंवत्त्वे ह्रस्वनागमाभावः । कर्तृणामिति द्वयोरपि '[3]ह्रस्वा पश्च" इति नाम्, न तु पुंस्त्वपक्षेऽनाम्स्वर इत्यनेन नाऽन्तस्तत्राऽऽमो वर्जितत्वाद्धि तीयप्रयोगा रूपनिर्णयार्थौ दर्शितः । न तु तस्य किञ्चित्र फलं कुमार्येति, अत्र यद्यपि कुमारीशब्दः पुंवत्तयापि नित्यस्त्रीविषयत्वादीकारस्य "[4]ईदूतः" इति ऐ । कन्याभ्ये इति श्रोत्रादित्वात् ङीः ।

'दध्यस्थिसक्थ्यक्ष्णोऽन्तस्यान्' । १ । ४ । ५३ ॥ अन् न भवति, '[5]दध्युरः सर्पि०" इत्यनेन प्राप्तः, अक्ष्णोऽप्राण्यङ्गे" इत्यप्यनित्यत्वात्, अतिद ध्न्या स्त्रियति, यदाऽत्र "[6]श्वोऽन्नमर्थात् इत्यनेन टीस्तदा तदुभयप्रधानादनेनाऽऽ देशाभावप्रतिदध्यत्वव भवति, यदा तु दध्यतिक्रान्त यमति मतुश्रीहिस्तदा "दध्युरः सर्पि०"इत्यनेन कथा भाव्यं, तस्माद्दध्यतिक्रान्तयेति तत्पुरुष एव न्याय्यः ।

'अनाम्स्वर नोऽन्तः' । १ । ४ । ५४ ॥ अनाम् चाऽसौ स्वरश्च अनाम्स्वरस्तस्मिन् स्वरे लब्धे स्वरग्रहणं टादावित्यधिकारनिवृत्त्यर्थं, अन्तग्रहणं विना नस्य प्रत्ययत्वं स्यात्तथा च निमित्ताभावेति विसादयो निवर्तेत, तथा 'प्रत्ययाप्रत्ययोरिति' न्यायेनाऽस्य नकारस्य प्रत्ययस्याऽपि सम्भवे धनानीत्यादावेव दीर्घः स्यात् न तु राजानमित्यादौ । प्रिय तिसृण इति यदि पूर्वं नागमः स्यात्तदानीं किं विनश्येत्, यतः स्याज्जमयम्यबाधकमिति कृत्वा कृतेऽपि नागमे तिसादयो भविष्यति '[illegible]' तत्कथं परत्वादित्युक्तं ? अत्रोच्यते, यस्माच्छब्दाद्यागमः समानीतस्तस्य यदि किमपि प्राप्नोति तदानीमयं न्याय उपतिष्ठते, अत्र तु प्रियत्रिन् इत्येतस्य न किमपि प्राप्नोति, अपि तु त्रिअवयवस्य तिसादयः, तदवयवस्याऽवयवेन व्यवधान न तु अवयवेनाऽवयविनः, यथा देवदत्तस्य श्मश्रु न दृष्टं हस्तेन व्यवहितत्वात्, नहि कोऽपीत्थं वदति यदुत देवदत्तो न दृष्टो हस्तेन व्यवहितत्वात्, तौम्बुरवं चूर्णं तुम्बुरुणा विकारः

१ १-४-६४ । २ १-४-१२ । ३ १-४-११ । ४ ७-१-७ १ । ५ ७-३-६५ । ६ २-४-१२ ।

फलं "प्राण्यौषधि०" इत्यादिनाऽण् तस्य लुप्तस्य विकारो "विकारे" पुनरण्, तुम्बुरुणो वृक्षस्य विकारभूतमेकस्मिन्नपि वा नाम्नि इत्येवति, क्लीबे नाम्यन्तस्य स्यादौ विधानात् फलयोरित्यत्रैत्वे कृते न नागमः । द्वयोरित्यत्राऽपि आदशादागम इति नोऽन्तः प्राप्तो न परत्वात् अन्तरङ्गत्वाच्च वर्णेन येन "त्यादेर" इत्यस्य, पश्चादेत्वे कृते सकृद्गताविति न्यायः । "स्वराच्छौ" अत इत्येवेति । नन्विवर्णादेः "अनाम्स्वरे नोऽन्त" इति द्वयो नागमः सिद्ध एव, आकारान्तस्य तु अन्त्यस्य नपुंसके ह्रस्वविधानात् स्थितिरेव नाऽस्तीति, अत इत्यपि युज्यते किं स्वरग्रहणेन ? अत आह उत्तरार्थमिति ।

'घुटां प्राक्' । १ । ४ । ६६ ॥ प्रागित्यनेन सह सम्बन्धाभावात् घुटामित्यत्र "मर्यसम्पार्थे" इति न पञ्चमी । गोमन्ति, "ऋदुदित" इत्यनेन परत्वान्नो-ऽन्तेऽनेन नोऽन्तो न भवति ।

'घुटि' । १ । ४ । ६८ ॥ अधिकारोऽयमिति । नपुंसकस्य परतो नोऽन्तो न भवतीति विधिरेव कस्मान्न भवति ? उच्यते—नपुंसके शिमन्तरेणाऽन्यस्य घुट्त्वा-भावात्तत्र स्वराच्छावित्यादिभिर्नागमस्य विहितत्वात् पारिशेष्यादधिकारोऽयमिति ।

'ऋदुदितः' । १ । ४ । ७० ॥ पृथग्योगो ध्वादिभ्युदासार्थ इति अयमभिप्रायः । "उदितः स्वरान्नोऽन्त" इत्यत्र धातोरधिकाराद् ध्वादेरुदित उदितः स्वरादित्यनेनैव सिद्धत्वादत्र "ऋदितः" पृथगारम्भादुदितोऽध्वादेरेव, तस्माद्दधपादितोऽप्यध्वादेरेवेति नियमात्, सम्राडित्यादौ न भवति ।

'युजोऽसमासे' । १ । ४ । ७१ ॥ असमासे इति–स्याद्याधिक्यस्य नाम्नो युज इति विशेषणात्तत्र च तदन्तविधेर्भावात्समासेऽपि प्राप्तिरिति असमासग्रहणम्, इदमेव च ज्ञापयति अत्र प्रकरणे तदन्तविधिरस्तीति ।

'अनडुहः सौ' । १ । ४ । ७२ ॥ सत्यपि नामग्रहणे इति न्यायेऽनडुहीत्यादौ डुहन्तत्वाभावान्न भवतीति । ननु अनड्वानित्यत्र "संयोगस्यान्तस्य०" इति दकारः कथं न भवति ? सत्यम्, प्राप्नोति परं विधानसामर्थ्यान्न भवति ।

'पुंसोः पुमन्स्' । १ । ४ । ७३ ॥ पुंसो रुविरस्तादिति । ननु "पातेर्डुम्सु" इत्युदनुबन्धः कृतोऽस्ति तेनाऽपि प्रियपुंसीतरा इत्यादि रूपत्रयं संस्स्यति किमत्रोदनुबन्धेन ? उच्यते—यदाऽव्युत्पत्तिपक्षाश्रयणं तदाऽस्य पक्षे कृतस्योकारस्य फलम्, व्युत्पत्तौ तु

---

१ ६-२-३१ । २ ६-२-३० । ३ २-१-४१ । ४ १-४-६५ । ५ १-४-६४ । ६ २-१-७५ । ७ १-४-७० । ८ ४-४-९८ । ९ २-१-८८ । १० उणा १ । २ ।

फलमौपादिकस्य । यथा मघतुश्रम्हो मावेकवतुः " इति व्युत्पादिताऽपि मघोशौ । प्रिपपुमानिति बहुत्स चास्यं, एकस्य तु ' पुमेनद्धमो० " इति रूप् स्यात् । क्षीरस्वपुंच द्विकल्पति कीः, ह्रस्वपुंपचोक्ष विकल्पः ।

' ओत औः ' । १ । ४ । ७४ ॥ चित्रगुरित्यत्र परत्वात्पूर्वं ह्रस्वत्वे कृते पश्चात् घुटि ओकारामावादोत इति वचनादौकारो न भवति, वचनविधित्वाच स्थानिवद्भावो नाऽस्ति । मथ हे चित्रगो ! इत्यत्रौकारस्य विद्यमानत्वादुभयोः स्थानिनोः स्थाने इति न्यायेन आ व्यपदेश इति प्राप्नोति कस्मान्न भवति ? उच्यते–परौकारव्यपदेशस्तदा लाक्षणिकत्वान्न भवति ।

'आ अम् शसोऽता' । १ । ४ । ७५ ॥ नन्वत्राऽताति किमर्थं ? यत एतद्विनाऽपि गा इत्यादि प्रयोगजातं "समानानामिति" दीर्घे सिध्यतीति ? उच्यते–अतति पद विना पुलिङ्गे "शसोऽता०" इति स्त्रीलिङ्गे ' सेगाव " इति प्रवर्तेयातां, ततश्च गान् गाः इत्यनिष्टं स्यात्, स्थित तु ' शसोऽता " इत्यननेव दीर्घस्य सन्नियोगेऽकारोऽमापि ।

' पथिन्मथिन्नृभुक्षः सौ ' । १ । ४ । ७६ ॥ अत्र घुटीति सम्बन्धात्स्यादिति शिष्टनिर्देशेन सुप्न गृह्यते । पन्थाः इत्यत्र मानुनासिकस्याऽप्याकारो भवन् " र्भ्रिंङ्गो " इत्यत्र द्विवचनेन ज्ञापितत्वादननुनासिक एव भवति । पथीरिति, पन्था नमिच्छति क्यनि नलोपः म च दीर्घश्चि " इति पर कार्येऽस्मच भवति, यतो 'राजा' इत्यतः प्रागव यस्मात्तदन्ताऽसत्वमस्ति, इद तु ' राज " इत्यतः परमिति नाऽस्मत्, ततः पथीयतीति क्विपि अलोप यलोप पर्द रूपम् । नन्वनेनाऽऽत्वरूप स्यादिविधौ विधातव्ये नलोपस्याऽसिद्धत्वाभाऽन्तत्वमिति । न च वाच्य, अत इत्युक्तः स्वरस्य परेऽनेन स्थानिवद्भावेन नान्तत्वानुपपत्तिरिति । यतः प्रत्ययलोपेऽपि निमित्तो लुम्विधिरपि यदि तद्विधिो भवतीति व्याख्यानात् । अत्र स्वस्य लुक् क्विपि भावत तु सौ प्रत्यये प्राप्नोतीति कृत्वाऽत्र नान्तत्वमस्त्यवति प्राप्नोत्यात्वं, सत्यम्, नान्तविध्या इत्यवलादेव न भवति; अन्यथा यत्र कुत्राऽपि नलोपस्तत्र सर्वत्राऽप्यमीषां पथ्यादीनां ध्वनीनामनेनाऽऽत्वलक्षण स्यादिविधौ कर्तव्ये नपर्मसत्परे " इति न्यायेन नलोपस्याऽसिद्धत्वेनान्तत्वसद्भावाचास्य भवद्वेत्यत्र सूत्रे नान्तनिर्देशोऽनर्थकः स्यात् । तस्माद्यत्र साक्षान्नान्तत्वममीषां भवति तत्रैव प्रवर्ततेऽन्यत्र तु न्याय्यविरिति सर्वं समीचीन, तर्हि दीर्घङ्गाण इति प्रयोग सेत्स्यत्यस्मात्र भवति ? यतोऽयमपि स्यादिविधिः, स्यादिविधौ च नलोपोऽसद्भवतीति; सत्यम्, "दीर्घङ्याप्"स्यत्र मावचारणं

१ क्वप १ । २ ७-१-१ ३ । ३ ५-१-१ । ४ १-३-१५ । ५ ४-१-१ ६ । ६ २-१-१ । ७ २-१-६ । ८ १-४-७५ ।

व्यास्नेयं व्यञ्जनान्तादेव यदि सिर्भवतीति, विहितविशेषणाद्वा यत्र यस्मात् परः सिर्विहितो भवति तत्र लुग्भवति; अत्र स्त्रीकारान्ताद्विहितो न व्यञ्जनान्तादिति। तर्हि या मा इत्येवमादिषु सर्लुग् न प्राप्नोति ? सत्यम्, यत्रैतेषां मध्यादेकस्मादपि विहितो भवति, कार्यान्तरेषु च कृतेषु पश्चादेतेषामेव मध्येऽन्यतमस्मात्परो भवति तत्राऽपि भवति; तेनाऽनयोः प्रयोगयोर्व्यञ्जनान्तात्परो विहितः कार्यान्तरेषु सत्सु विघटे आबन्तादिति सेर्लुग्भवत्येव । यः स इत्यनयोस्तु व्यञ्जनान्ताद्विहितो ऽस्ति, पर "त्यादेरः" इत्यादिकार्येषु कृतेषु सत्सु पश्चादमीषां मध्यादेकस्मादपि परो नाऽस्तीति न सेर्लुप्। बहुश्रमुषा इति "क्वसति ह्रस्वो वा" इति ह्रस्व, स्त्रीत्वाभावादिनः कप् न भवति; हे सुपथिन् ! ह सुपथीति "डीप वा" इत्यनेन वा नस्य लोपः।

'पः'। १ । ४ । ७७ ॥ पथ्यादीनामकारस्याऽसम्भवात्, परिति इकारत् षष्ठीस्याद ।

'थोन्थ्'। १ । ४ । ७८ ॥ अनेकवर्णत्वात् सर्वस्य प्राप्तौ थ इति स्थानिविशेषार्थमनुवृत्तिभिरित्यर्थं च ।

'इन् डी स्वरे लुक्'। १ । ४ । ७९ ॥ अघुट्स्वरादाविति। डीसाहचर्यादघुटीति विज्ञेयं ज्ञेयं, तर्हि स्यादिमन्तरेणाऽपि प्राप्नोतीति न वाच्यं स्याद्यधिकाराभयात् डीग्रहणस्य वैयर्थ्यप्रसङ्गाच । सुपथी स्त्री कुल यति व्युत्पत्तिपक्षे सुम्नादित्वात् उणादीनामव्युत्पन्नानि नामानीति पक्षाश्रयणादिनन्तत्वादिन कच् न भवति, समासान्तविधिरनित्यत्वात्। "ऋन्नेभ्यः" इत्यपि न, नान्तत्वात् 'स्त्रियां नृत०" इति डी।

'वोशनसो नश्चामन्त्र्ये सौ'। १ । ४ । ८० ॥ यदा 'भवनिमित्तो लोप' इति न्याय आश्रीयते तदा सेः स्थानिवद्भावेन कार्यम्।

'उतोऽनडुच्चतुरो वः'। १ । ४ । ८१ ॥ उपरत्र ऊपग्रहणादाम व्यसिर याऽनुवर्तते। पामास्यसूत्रे साविति सामान्यभणनेऽपि सत्यपि नामग्रहणे लिङ्गविशिष्टस्येति हे मनडुहीत्यत्र गौरादिनिपातनाद्ध्रस्वाभावः, एवमग्रे चत्राऽपि। चतुःशब्दस्याऽर्थप्राधान्यनैकामन्त्र्यासम्भवे समासे उपसर्जनीभूत एवोदाहियते।

'वाः शेषे'। १ । ४ । ८२ ॥ अत्र सूत्रे ऊपस्य घुट आमन्त्रत्वात्तत्सूत्रमुक्तः प्राक्तनसूत्रविषय इति भावः।

---

१ २-१-४१ । २ १-१-२ । ३ २-१-६१ । ४ ७-१-७६ । ५ १-४-१ ।

'सख्युरितोऽशावैत्'। १।४।८३॥ ननु प्रक्रियालाघवार्थं सख्युरितोऽशावापीति क्रियतां किमैत्करणेन? न, अनकवर्मेति सकलस्यापि स्यात्। न च निर्दिश्यमानानामिति इव एवाऽयिति वाच्य, यतो विभक्तिसामान्येन सखिशब्दस्य विशेष्यत्वेनकारस्य विशेषणत्वेन च निर्दिश्यमानस्याभावात्। अथापीति–अत्र शौ सस्यादेशादागम इति न्यायादैत्स्यात् प्रथममेव नागमेन भाव्य, ततस्तेन व्यवधानादैकारो न भविष्यति, न च द्वयोरप्यन्यत्र सावकाशत्वादैकारः स्यादिति वाच्यम्। कृतेऽप्यैकारे क्लीब इति ह्रस्वत्वे ततो नागमे दीर्घत्वे च न कश्चिद्दोषः, नैवम्; 'असिद्धं बहिरङ्गमि'ति घुट्निमित्तस्यैकारस्य बहिरङ्गत्वात् ह्रस्वत्वे कर्तव्येऽसिद्धत्वात्। ननु भवत्वेवं तथापि कृताकृतप्रसङ्गित्वेन नित्यत्वात्पूर्वं नागम एव घुट्व्यवधायको भविष्यतीति? नैवम्, कृतेऽपि नागमे प्रकृतिभक्तत्वेनाऽव्यवधायकत्वादैकारोऽपि नित्य इति द्वयोर्नित्ययोः परत्वादैकार एव स्यादिति शिष्टप्रतिपत्तिः। अतिसखीनि-पूजितः सखा येषु कुलेषु सखिशब्दो नपुंसकोऽपि तस्यैषु रूपम्।

'ऋदुशनस्पुरुदंशोऽनेहसश्च सेर्डाः'। १।४।८४॥ ऋकारान्तस्य "डर्मौ च" इत्यादि, अपायां तु "अभ्वादे"रिति दीर्घत्वे "सोर्ध" इति रुत्वे च, सखिशब्दस्य सौत्वे प्राप्ते आरम्भः। हे अनह इत्यत्र न सन्धिरिति सन्धिनिषेधः।

'नि दीर्घः'। १।४।८५॥ राजसि–स्यादिविधौ कृतस्य नलोपस्याऽसत्त्वात् प्रथमं लुग् न। सुभ्रपतेः क्विपि न सुभ्रो हन्ति "अचिचि टस्" अधिकरण तु "स्थादिभ्यः कः" गमहन इत्युपलुग्, हनो ह्नो घ्न" दीर्घविधित्वात् नेः स्था निषेधो न भवति।

'न्स्महतोः'। १।४।८६॥ मन्त्रौमादिको हुँदिशदि इत्यनेन क्व प्रत्ययान्तो व्युत्पन्नोऽव्युत्पन्नो वा महच्छब्दो ग्राह्यः। यस्तु शत्रन्तस्तस्य महान्तिस्य नत्वनेन दीर्घः, 'लक्षणप्रतिपदोक्तयो'रिति न्यायात्। यतः शतृप्रत्ययान्त महदिति रूपं लाक्षणिकं क्वप्रत्ययान्तं तु प्रतिपदोक्तम्। एतच्च वत्सन्नपमाहुच्चतुः। सर्पीषीति-अत्र 'न्स्महतोः' इत्यनेन दीर्घलक्षणे स्यादिविधौ विधातव्ये प्रथमसत्यपरे इत्यनेन पत्वमसत्। महत्सारुपर्यादिति–महदिति शुद्धो धातुः क्विबन्तो न सम्भवति तस्मात् पर्यादन्यस्यापि शुद्धधातोः क्विबन्तस्य न भवति, नामधातुस्तु महदपि क्विबन्तः सम्भवति; मतोऽन्यस्यापि नामधातोः क्विबन्तस्य भवति। महच्छब्दस्वापभामत्वं न व्यभिचरति तत्सम्भियोगनिर्दिष्टस्य न्सन्तस्यापि नामत्वाव्यभिचारित्व एव ग्रहणम्।

---

१ १-४-३१। २ १-३-७१। ३ ५-३-८३। ४ ५-१-८२। ५ ४-४-८३।
६ २-१-११२। ७ रत्ना ८८४।

महती कुले इति, श्रेयसः पश्य, श्रेयसी कुले इति तु न दर्श्यते न्वन्तत्वाभावेन प्रकृतविफलत्वात् ।

' इन्हन्पूषार्यम्णः शिस्योः ' । १ । ४ । ८७ ॥ भ्रूणहानीति–हन्तेः क्वप् ठस क्विप् न दृश्यत इति तदन्तमुदाहरति–बहुपूषाणीति–पूषार्यम्णोः स्वप्रधानायां वृत्तौ शेरसम्भवाद्वौ समास उपसर्जनभूतावुदाहरति । एषां शिस्योरवेति–एषामेव शिस्योरिति तु विपरीतनियमो भवति, ' वर्ष्यम्याम० " इत्यत्र पुंसेति " पदाम्बिकान० " इत्येवं पदाम्बीति निर्देशात् । वृत्रहणाविति शिसप्तमीस्थायां, ' पूर्वपदस्था० " इत्यनेन, अस्त्रियां तु " कवर्गैकस्वरवति " इति णत्वम् । तदन्तविधिमिति–ननु ' अभिनस्यम० " इत्यत्राऽन्तोरनिर्देशादनर्थकेन तदन्तविधेरप्रयोगादथवाऽग्रहमन्यायात् क्रियानित्यत्वेन दीपः प्राप्नोति न सोमानित्यादौ ? सत्यम्, अतुरनर्थकोऽपि तदन्तविधिं प्रतिपद्यतेति मत्वादीनामुकारानुबन्धकरणात्; अन्यथा तपामपि भवदवत् ऋकारमेवाऽनुबन्धं कुर्यात् ।

' अभ्वादेरत्वसः सौ ' । १ । ४ । ९० ॥ भवानिति–नोऽन्ते सत्यपि " नागमोऽनुपघातेन " इति न्यायान्नकारस्य दीर्घः ।

' क्रुशस्तुनस्तृच् पुंसि ' । १ । ४ । ९१ ॥ पुंलिङ्गविषय इति समासेऽपि यदि पुंलिङ्गविषय एव । तेन प्रियः क्रोष्टा यस्याः यस्य वा कुलस्याऽत्र न भवत्येव भावेऽसा । अत एव स्यादयः स्त्रीपविषये दर्शिता । क्रोष्टोरिति–क्रोष्टोः क्रोष्टु इति रूपम् ।

' टादौ स्वरे वा ' । १ । ४ । ९२ ॥ नित्यत्वादिविकल्पाकृतप्रसङ्गन्यायेनेति । मृगयाचीति–मृगशब्दस्याऽप्यपाचित्वेऽपि मृगाद एवाऽर्थेऽत्र वृत्तिर्दृश्यते । तथापी-तिनुमन्त्वो मृगयाम्येव तृच्प्रत्ययान्तस्तु कस्मिन्विषये मृगयाचीति न ज्ञायते । तुन स्थानप्रवृत्तेन तु तृजादेशेन प्राप्यते यत्र पुंसि टादौ स्वरादौ च तृच् तत्रैव मृगयाचित्वम्, तेन मृग वाच्ये क्रोष्टुभ्यामित्यादि न भवतीति नियमसिद्धिः ।

' स्त्रियाम् ' । १ । ४ । ९३ ॥ स्त्रियां यदि भिन्नयाप्यतर्थतत्कृतं यत् स्त्रिया मित्युत्तरपक्षे याति, अन्यथा पुंस्त्रियोरित्येव कुर्यात् । निर्निमित्त एवेति–ननु निमित्त स्याभवत् ऋकारान्तस्याभावात् क्रोष्टुशब्दस्य कथं ङीः स्यात् ? न क्रोष्टुशब्दस्य गौरादौ पाठात् ङीः स्यादिति ङीसिद्धिः ।

प्रथमाध्यायः समाप्तः ॥

---

१ ६-१-१ । २ १-१-२ । ३ ३-२-६४ । ४ १-१-७६ । ५ भ्योभयति इति प्रत्यन्तरे ।

' त्रिचतुरस्तिसृचतसृ स्यादौ ' । २ । १ । १ ॥ स्त्रियामित्यनुवर्तते । पूर्वस्मादिति शेषः । तत्र भुवस्त्रिचतुर इत्येतस्यैव विशेषणम् । परत्वादिति–ननु कृताकृतप्रसङ्गित्वेन नित्यत्वात् "आदेशादागमः" इति न्यायात् पूर्वं नागम एव प्राप्नोति, नैवम्; शब्दान्तरप्राप्त्या नागमोऽप्यनित्यः । यद्वा परत्वादिति कोऽर्थः ? प्रकृष्टत्वादित्यर्थः, प्रकृष्टत्वं च "आगमात् सर्वादेशः" इति न्यायात्, किञ्च ' ऋतो रः स्वरेऽनि " इत्यत्राऽनीति वचनमनर्थकं स्यात् । स्वरादौ पूर्वं नकारे तिसृचत्रादेशाभावात् रत्वप्रसङ्ग एव नाऽस्तीति अनीति वचनात्पूर्वं नागमादेस्तिसृचतस्रादेश इति । प्रियत्रिस्रु कुलमिति " नोऽयिनो कृन्मा " इत्यत्र चतुःशब्दस्याऽपि तुमिकल्पमिच्छन्त्येके, तन्मते प्रियचतसृ कुलं प्रियचतुर्वा कुलमिति । प्रियत्रीत्यादि–स्त्रीलिङ्गविषयाणामपि समासात् सीप्रत्यये प्रियाचेव, ' प्रेष्ठाद्य " इति कथं प्रियत्रिकैषाऽऽदेशो न भवति; प्रथम सीप्रत्यये पश्चाद्बहुव्रीहि ' चर्मिमतिदः " इति कश्चेव । यदा तु केवलात्रिशब्दात् सीस्तदेकदेशविकृतत्वेनाऽऽदेशो भवति । कथं तिसृकानामेति ? त्रिशब्दात् संज्ञायां के आपि बहुवचनेन स्याद्यर्थवचनाभावात् कथं तिसृभाव इति प्रश्नाशयः, समाधत्ते–स्त्रीलिङ्गे बहुवचनविषयः संज्ञाशब्दोऽयमिति । तस्मिन्ति परपक्षान्याश्च ' निष्कौषुरुष्क " इति निपात्यते ।

' ऋतो रः स्वरेऽनि ' । २ । १ । २ ॥ अनीति नकारः प्रत्ययरूप आगमरूपो वा । समानदीर्घत्वेति– 'ससोऽत्रा " इति, "अर्भौ च"इति, 'ऋतो डुर्' इति प्राप्तानाम् । तदपवाद इति–व्यञ्जनादौ स्यादौ पूर्वयोगः सावकाशः स्वरादौ तु अयमेव स्यात् ।

' जराया जरस् वा ' । २ । १ । ३ ॥ स्त्रियां त्विति–अतिजरवेत्यत्र अतिजरशब्दात् प्रकृत्येनाऽऽप्प्रत्ययेन जराशब्दो व्यवधीयते । जारः, जारेय' जराया अव तस्येदम् इत्यण्, जराया अपत्यं द्विस्वरवचनाः एयण् ।

' अपोऽद्भे ' । २ । १ । ४ ॥ स्वङ्कृता, शोभना अतिशयिता वा आपो यपोरिति विग्रहः "पूर्वास्वतेः माङ्कृतात्" इति समासान्तप्रतिषेधे व्याप्ति सत्यपि तदन्तग्रहणे "निर्दिश्यमानस्याऽऽदेशा भवन्ती"त्यप एवाऽऽदेशः । अब्भक्ष इति ' सीक्षिकामि " इति वः ।

' आ रायो व्यञ्जने ' । २ । १ । ५ ॥ माध्यस्यैकवचनत्वात् " पर्वकाम्वत्त " इति, रैशब्दस्यैव भवति । स्मीत्येव सिद्ध इति–आमि तु रायमतिक्रान्तानि यानि तेषां ' 'दीर्घे इत्यनेन ह्रस्वत्वे सति "सन्निपात लक्षण" न्यायाविकाररूपं ह्रस्वमाश्रित्य समुत्पन्नो नाम् तद्विघाताय नोत्सहते । तर्हि दीर्घो नामि इत्यपि न प्राप्नोति ?

१ ९-१-२ । २ १-४-६१ । ३ ७-१-१७१ । ४ ७-१-१ १ । ५ तथा ११ । ६ ६-१-११ । ७ ६-१- १ । ८ ७-१- २ । ९ ७-१- ३ । १० ७-४-१ ६ । ११ २-४-५ ।

सत्यम्, तदाऽनित्यत्वादस्य न्यायस्य भवत्येव दीर्घः, "न्याया हि स्थविरयष्टिन्यायेन प्रवर्तन्ते"। उत्तरार्थमिति–यद्येव तत्रैव क्रियतां किमत्राऽनेन सन्देहास्पदेन ? नैवम्, कश्चित् सन्निपातन्यायमनित्यमाश्रित्याऽतिवरामामित्यत्राऽऽकारमपीच्छन्ति, तन्मतसंग्रहार्थं व्यञ्जनग्रहणमिहाऽर्थमपि तेन स्वमतेऽपि सम्मतम् ।

'युष्मदस्मदोः' । २ । १ । ६ ॥ अत्राऽधिकाधिकार्थयोर्युष्मदस्मदोरत्वाद्यनु करणे इति त्वदादिकार्यमकरणेपा, 'टाङ्योसि॰" इत्यनेन युष्मदस्मदादिकार्यं च यत्वादि न प्रवर्तते । अतित्वामिति–नामाधिकाराद्यदन्तप्रतिपत्तौ तदन्तमुदाहरति, युष्मयतेरिति–युवां युष्मान्वेति विधेयं न तु त्वामिति, णिचि सति त्वमौ स्याताम् । अमौम्यास्विति–अयमर्थः–द्वयोरन्यत्र सावकाशत्वात् शब्दान्तरप्राप्त्या चाऽनित्यत्वा त्परत्वात् पूर्वं त्वमाद्यादेश इति । प्रथममात्वे तु सति मन्तस्याभावात्त्वमादयो न स्युः । णिच्प्रत्ययस्याप्यां यद्युष्मन सतिकान्तौ गौम यद्यूयेति त्वमौ भवतः । व्यञ्जन इत्येवेति–ननु व्यञ्जनग्रहणं विनाऽपि युष्मभ्यमस्मभ्यमित्यादयः प्रयोगा अनेनाऽऽत्वे कृते 'लुगातोऽनापः" इत्याकारलोपे सिध्यन्ति, किं व्यञ्जनाधिकारेण ? सत्यम्, एतस्य व्यक्त्या प्रवर्तनादात्वे कृते लुगादिक न प्रवर्तत इति व्यञ्जनग्रहणम् । तथा व्यञ्जनाभावे युष्माकं युवाकमित्यादौ अनेन स्थलेऽऽकार एव स्यात्, न तु 'मोर्वा" इति मकारलोपः । युष्मभ्यमिति–ननु लुमस्यस्यलोपे मोवा कथं न ? उच्यते–स्वरस्य स्थानित्वात् । तर्हि युष्मदस्मदाद् भ्यसोऽभ्यमादेशे लुग् न प्राप्नोति ? नैवम्, प्रत्यासत्त्या यस्मिन् प्रत्यये लुग्भवति, तस्मिन्नेव प्रत्यये पूर्वस्य यदि कार्यं भवति तदा स्थानित्वमत्र तु प्रत्ययान्तर लुग् अतः स्थानित्वाभावः । मोर्वेति एत्र स्याऽनवकाशत्वाद्वा स्थानित्वाभावः ।

'टाङ्योसि यः' । २ । १ । ७ ॥ ओम ओम ओसौ "स्यादोवसंख्येयः' इत्येकशेषः, ततष्टाम ङिम ओसौ चेति कार्यं, तन षष्ठीसप्तम्योरपि ग्रहः, अन्यथा हि ना साहचर्यात् सप्तम्या एव ओसो ग्रहणं स्यात् । अत्र ओस्ग्रहणाभावेऽपि "शेषे लुग्" इति दलोपे "एद्वहुस्भोसि" इत्यनेन एत्वे, "एद्वेतोऽयाप्" इत्ययादेशे याऽति युवयोरित्यादि सिध्यति, सत्यम्; णिचि अन्त्यस्वरादिलोपे युवावादशे "शेषे लुग्" इत्यकारलोपेऽकारस्याऽभावात्, युष्मोरित्यादौ यत्व न सिध्यतीति ओस्ग्रहणम् ।

'शेषे लुक्' । २ । १ । ८ ॥ शेषग्रहणाभावे टाङ्योसीत्यधिकार आगच्छेत् । न च वाच्यं टाङ्योसीत्यधिकारो यत्राऽभिप्रेतः स्यात्तदा टाङ्योसि यलुकावित्ये

१ १-१-१७ । २ २-१-९ । ३ १-१-११६ । ४ २-१-८ । ५ १-४-४ । ६ १-१-२२ ।

क्त्वेव कुर्यात् । यथा तुभिस्युष्मदर्थे पृथक्करणं कर्तव्यमेव, अन्यथा टाङ्योसि यत्वादित्यधिकारोऽप्रेतनऽपि तत्र गच्छतु इत्यामुष्मार्थां शेषग्रहणम् । त्रियामाद् न भवतीति–कथमनयोर्युष्मदस्मदोरनन्त्या संख्येति लक्षणेनाऽऽशिङ्गत्वमभवनात् । अथ बहुव्रीहौ तत्पुरुषे चाऽन्यपदार्थादिप्रधानत्वेन युष्मदन्तस्य स्त्रीत्वे आप् कथं न भवति ? उच्यते–मभिपातलक्षणन्यायादल्लोपोऽस्यमः मभिधानव्यवधानं न निमित्तम् । तर्हि युष्माभिस्यादिषु कतलेष्वप्यत एव न्यायादाप् न भविष्यति । किं लिङ्गानुशासनेऽन्वयोर्वर्जनेन ? सत्यम्, "न्यायानां स्थविरयष्टिन्यायेन प्रवृत्ते" रित्याशयः कर्तुमशक्यः ।

'मोर्वा' । २ । १ । ९ ॥ ननु युवामाचरे इति वाक्ये णिचि, क्विपि स्यादौ युवादेशः कथं न भवति ? सत्यम्, यदा युष्मदस्मदी द्वित्वे तदा स्यादिर्न, यदा तु स्यादिस्तदा न द्वित्वं इति न युवादेशः । प्राग्दान्तरेति–प्राङ् मकारस्य पश्चात् अकारस्य पप्राप्तिः । अथवा पूर्वे युष्मिति प्रकृतेः पश्चात्त्वेति प्रकृतः । अत्राऽसर्वादित्वसम्बन्धिता दिति–युष्मदस्मदी त्वमहंवाचक मर्यादिगणमध्यं दृश्यते । अत्र तु त्वां मां वक्ति यस्तद्वाचक इति न सर्वादिनी । अथ क्विबर्थमिति–क्विबन्तस्य युष्मच्छब्दस्य योऽर्थस्तदर्थं क्विप्सहिता युष्मदस्मद्रूपा प्रकृतिरेवाऽऽह–न हि प्रकृतिं विना क्विम्भवति । स्मिन्यादेश इति तत्र त्वस्मिन् मस्मिन् सन्निपातन्यायस्याऽनित्यत्वे त्वास्मिन् मास्मिन्नित्यपि । सिद्धमिति–एतेन प्रक्रियागौरवं निरस्तं भवति, अन्यथाऽनेन मकारलोपेऽपि सिप्रत्ययादिना सह त्वमहमादयश्च सर्वेऽपि प्रयोगाः सिध्यन्ति ।

'मन्तस्य युवावौ द्वयोः' । २ । १ । १० ॥ द्वित्व इति द्वयोरिति, द्रव्यप्रधानत्वात् सामान्यवाचिनाऽपि युष्मदस्मदर्थ एव द्वित्वविशिष्टो निर्दिश्यते, अर्थान्तरे तयोर्द्रव्यभावात्तयोरेव विशेषणम् । स्यादिविशेषणस्य तु गुणाभिधायित्वात् स्यादर्गुणप्रधानतया द्वित्वे इति भावप्रत्ययान्तेन निर्दिश्यत । यथा "द्वित्वे वाम्नौ" इति युवावादेशयोः मकारस्य णिगि क्विपि तल्लोप च युष्मोराम्योरित्यादिषु फलं द्रष्टव्य । एवमुत्तरसूत्रे त्विम्य म्यि, परत्वात्त्वमहमादय इति । यदि परत्वेन त्वमहमादयः करिष्यन्ते, तर्हि "परान्नित्यं बलीय" इति न्यायात् युवावादय एवाऽऽदेशाः प्राप्स्यन्ति, न त्वमहमादयः, सत्यम्; परत्वाद्विशेषविहितत्वेन प्रकृष्टत्वादित्याशयः ।

'त्वमौ प्रत्ययोत्तरपदे चैकस्मिन्' । २ । १ । ११ ॥ त्वद्यतीति, अत्र नित्यत्वादन्त्यस्वरादिलोपात् प्रागेव त्वमादेशौ पश्चादपि अन्त्यस्वरादिलोपो न लोपात् स्वरादेश इति न्यायात् लुमस्तेनैव प्रवर्तते । तस्मिन्नपि कृते न, "नैकस्व"

१ २-१-२१ । २ ७-४-४४ ।

इति निषेधात्, " ञ्णिति " इत्यनेन वृद्धिरपि न अधातुत्वात् । कथमित्विति–शब्दान्तरप्रवृत्त्या द्वयोरनित्यत्वादन्यत्र सावकाशत्वात् परत्वादन्त्यस्वरादिलोप इत्यर्थः । अकारस्य वृद्धाविति–अतो " ञ्णिति " इत्यनेन सूत्रेण । ननु प्रत्ययोत्तरपदग्रहणं किमर्थं स्यादावित्येव सिद्धत्वात् । न च परत्वात् " ऐकार्थ्ये " इति स्यादेर्लुपि प्रत्ययलोप इति न्यायस्य प्रतिषेधात् स्यादेरभाव इति वाच्यम्, यत ऐकार्थ्ये लुब् उच्यते–ऐकार्थ्यं च प्रकृतिप्रत्ययौ पूर्वोत्तरपदे चाऽऽश्रित्य भवतीति तस्य बहिरङ्गत्वात्तदाश्रया लुबपि बहिरङ्गा । विभक्तिमात्रमाश्रित्य विधानात् त्वमादेशयोरन्तरङ्गत्वं, ततो '<u>असिद्धं बहिरङ्गमन्तरङ्गे</u>' इति न्यायाश्रित्वादप्यन्तरङ्गस्य बलीयस्त्वात् त्वमादेशयोः कर्तव्ययोर्लुपोऽसिद्धत्वाचाभ्यामेव पूर्वं प्रवर्तितव्यं ततो लुबिति न किञ्चिदनिष्टमित्याह–अन्तरङ्गत्वादिति । ननु यदा स्यादिग्रहणमेव क्रियते न प्रत्ययोत्तरपदग्रहणं तदा त्वदीयो मदीयस्त्वत्पुत्रो मत्पुत्र इत्यादौ प्रागेव परत्वात् ङसा सह तव ममादेशौ प्राप्नुवतस्तच्चान्तरङ्गत्वात्स्यादिद्वारेणैव सिध्यतीति, सत्यम्; यौ त्वमौ भवतस्तावत्प्रत्ययाश्रितौ यतः प्रकृतिमेवाऽऽश्रयतः यौ तु तवममौ तौ प्रकृतेः प्रत्ययस्य च स्थाने भवत इति प्रत्ययाश्रितावित्यन्तरङ्गत्वात्त्वमौ प्रत्यये प्राप्नुत इति स्यादिद्वारेणैव सिध्यतीति । तवममादेशे तु कर्तव्ये एकस्थानित्वेनाऽन्तरङ्गत्वात् परत्वाच्च ङसो लुब्नेति ।

'त्वमहं सिना प्राक् चाकः' । २ । १ । १२ ॥ सिनेति किमिति–ननु साविति कृते ' "दीर्घङ्याब्०" इति सेर्लुकि च सर्वे प्रयोगा निष्पद्यन्त इति, न युष्मदस्मदोरित्यात्वं स्यात् । आदेशविधानसामर्थ्याच्च भविष्यतीति चेत् ? सत्यम्, तदाऽऽत्वाभावऽन्त्याऽपि सेः श्रवणं स्यात्; तथा च–' मोर्वा " इति वा लोपः स्यात् पक्षे च चरितार्थता सूत्रस्य स्यादिति । त्वकम् अहकमिति 'युष्मदस्मदोऽसोभादि०" इति अक्, पूर्वमक्षीति निरपेक्षत्वेनाऽन्तरङ्गत्वात् । त्वामादेश प्रवृत्ताविति–त्वादयतीति वाक्ये कृते क्विप्, त्वाहादेशविधानादिति त्वाहादेशौ न भवत इति शेषः । धातोरेव वृद्धिरिति भवेत्तु त्वदयतीति वाक्यं, ननु तन्मते–त्वं, अहं, यूयं, वयमित्यादयः कथं सिध्यन्तीत्याह–ते हीति । प्रकृतिमात्रस्येति–विभक्तिरहितस्येत्यर्थः । आदेशानिति–तुभ्यमह्यौ ङयि, यूयवयौ जसि, त्वाहौ साविति तुभ्यादीनादेशान् ङेजस्सीनां के प्रथमयोरमित्यमादेशं, जसस्तु युष्मदस्मद्भ्यां ङसोऽसित्यकारं चेच्छन्तीत्यर्थः । त्वमहं तु त्वमहमित्येव भवति ।

'यूयं वयं जसा'। २ । १ । १३ ॥ प्रियस्त्वं प्रियौ युवामिति वाक्यम् । एकत्वद्वित्वयोर्युष्मदस्मदोर्वर्तमानत्वात् । " त्वमौ प्रत्ययोत्तरपदे च० " इति " मन्तस्य

१४-१-५ ।२१-२-८।३१-४-५।४२-१-९।५०-१-२ ।६१-१-११।७१-१-१ ।

युवावौ० ” इति च समायादेशाननन्यत्र श्रावकश्रावान् मामिस्ता यूयं वयमित्यत्र ताव काश्री यूय वयमादेशौ परत्वादुभयप्राप्तौ तस्मां तावेव भवतः । यूयकमित्यादौ त्वस्ति तावर्थे “ युष्मदस्मदोऽसोभादि० ” इत्यक्, एवमुत्तरत्राऽपि ।

‘ तव मम ङसा ’ । २ । १ । १५ ॥ कथं तवता ममता ? सत्यम्, स्वायन्त- प्रतिरूपकाण्यव्ययान्येतानीति शब्दान्तरत्वात् सिद्धम् ।

‘ अमौ म ’ । २ । १ । १६ ॥ औम औम आवौ ‘ स्योरावसंयोगे ” इत्येकशेषः, ततोऽम् च आवौ च अमौ तस्य अमौ; लुप्तषष्ठ्येकवचनान्त पदम् । एकशेषाभावे तु अमा साहचर्याद्द्वितीयासस्कस्यैव ग्रहण स्यात् । ननु अम् ग्रहण किमर्थं यावता त्वामिति निष्पाद्यम् । तत्र युष्मदोऽमि निमित्ते त्वादेशे “ शस ङस्” इति तस्य लुकि “ समानादमोऽतः ” इत्यमोऽस्य लुकि “ युष्मदस्मदोः ” इत्य न्तस्याऽऽत्वे च सिद्धं ? नैवम्, अन्तरङ्गेऽन्तस्याऽऽत्वे कार्ये बहिरङ्गोऽमोऽकारस्य लुगसिद्ध इति ।

‘ शसो नः ’ । २ । १ । १७ ॥ ननु युष्मानित्यादौ इय प्राप्नोति । “ शेषे० ” इत्यन्तलोपोऽनेन नकारश्च तत्र कृताकृतप्रसङ्गित्वेन नकारस्य नित्यत्वाल्लोपस्य च कृते नकारे तत्प्रसङ्गाभावादप्रसङ्गित्वनाऽनित्यत्वात् पूर्वं नकार एव भवतीति । यद्येवं किमनेन “ शसोऽता ” इत्यनेनैव सिद्धत्वात्, नैवम्; अलिङ्गे युष्मदस्मदी इति पुंस्त्वा- भावाभकारो न सिध्यतीति वचनम् । बहुव्रीह्यादावभ्युपगमे वा लिङ्गस्य स्त्रीनपुंसकार्थे प्रियपुष्मान् ब्राह्मणीः, प्रियपुष्मान् कुलानीत्यादि ।

‘ अभ्यम् भ्यसः ’ । २ । १ । १८ ॥ कार्यिणः प्रथम निर्देशे प्राप्ते कार्यस्य प्रथममुपादान प्रत्यासत्तिसूचनार्थम् । पाठापेक्षया चतुर्थ्येव प्रत्यासन्नेति तस्या एवा ऽऽदेशः । यद्वा ‘ ङसेश्चात् ’ इत्यत्र चकारो भ्यसोऽनुकर्षणार्थः । स च पञ्चमी साहचर्यात् पञ्चमीसम्बन्ध्येव गृह्यत इति पारिशेष्यादिह चतुर्थीभ्यसो ग्रहणमित्याह- चतुर्थीबहुवचनस्येति ।

‘ ङसेश्चाद् ’ । २ । १ । १९ ॥ चकारेण भ्यसोऽनुकर्षणेऽपि भ्यसो ङसेर्येकवचना न्तनिर्देशेन विभक्त्यन्तनिर्दिष्टाभ्यां युष्मदस्मद्भ्यां सह वैषम्यादयथासंख्यमेव इति ।

‘ आम आकम् ’ । २ । १ । २० ॥ आमः कमिति कृते “ युष्मदस्मदो ” इत्यात्वे कृते युष्माकमित्यादि सिध्यति किमाकारकरणेनेत्याह—माकमित्यादि ।

---

१ ५-१-१ । २ १-१-११९ । ३ २-१-८ । ४ १-४-४६ । ५ २-१-६ । ६ १-४-४१ । ७ ४-१-११ ।

'पदात्युग्विभक्त्यैकवाक्ये वस्नसौ बहुत्वे' । २ । १ । २१ ॥ पद्यते-गम्यते कर्तृकर्मविशिष्टोऽर्थोऽनेनेति पदम्, विभक्त्या सह सामानाधिकरण्यार्थम् । युग इतीति युज इति, कर्तरि क्विप्, यद्वा योजनं युक् समविषम संख्याख्यानम्; युग्ममिति यत् संख्यायते तेन परिच्छिन्न वस्त्वपि युग्मिस्युच्यत । ततः समसंख्या द्वितीयाचतुर्थीषष्ठीरूपा विभक्तयो युग्मस्मदोरुच्यन्त इति । धर्मो वो रक्षत्विति-अत्र पदादेशः पदमितिति वस् इत्यस्य पदत्वे " सोरुः " रुत्वं बभूव । तथा " शसो नः " " शपे लुग् " इत्यादीनि बाधित्वा नित्यत्वादिरवकाशत्वाच्च वस्नसावेव भवत इति । एकवाक्य इति-एक च तद्वाक्य चेति " पूर्वकाले० " इत्यनेन समास एकस्य पूर्वनिपात ततो विशेषणस्य व्यवच्छेदकत्वात् 'सर्व वाक्य सावधारणं भवतीति' न्यायाच्च एकस्मिन् वाक्य एव भवति, न तु पद इति । अविगुष्मान् पश्यतीत्यादौ तु यथैकस्मिन् वाक्ये तथा वाक्यविभक्त्यपेक्षया एकस्मिन् पदेऽपि युष्मदस्मदी स्त इति । तथैकस्मिन्नेव वाक्य इत्यवधारणार्थम् पद युष्मद स्मदी चैकस्मिन्नेव वाक्ये भवतो, न तु वाक्यान्तरे; तदा सामर्थ्याभावादेवेति परस्परव्यपेक्षालक्षणसम्बन्धाभावादेवेत्यर्थः । किमेकवाक्यग्रहणेनति-किं सति क्षेपणन वाक्यग्रहणेन वाक्यग्रहणमेव पदव्यवच्छेदाय कर्तुं युक्तं किमेकग्रहणेन त्यर्थः । युक्तयुक्तादिति-युक्तेन युष्मदस्मत्सम्बन्धेन पित्रादिना पदयुक्तमिति स्मेत्यादि तस्मादित्यर्थः । इति स्मेत्यादि-अत्रतिस्मेत्यादिपद साक्षाद्युष्मदादिक नाऽपेक्षते, किं तर्हि पित्रादिकमिति ? एकवाक्यग्रहणात् सामर्थ्याभावेऽप्येकवाक्ये पदात परस्य युष्मदादेरादेशः सिद्ध । तथा युग्मदुत्व इति, अप्युक्ते द्वितीयाचतुर्थी षष्ठीबहुवचनानि लभ्यानि । विभक्तिग्रहण उत्तरार्थं इह च क्लिष्टतापरिहारार्थमिति ।

'द्वित्वे वाम्नौ' २ । १ । २२ ॥ द्वित्व इति भावप्रत्ययान्तेन तस्या निर्दिश्यते । तस्यार्था च विभक्तिर्वर्तते न युष्मदस्मदी द्रव्यवृत्तित्वात् तयोरिति, द्वित्व इति विभक्तेरेव विशेषणमित्याह-द्वित्वविषयेति ।

'ङस्ना तेमे' २ । १ । २३ ॥ दृष्टपूर्वेति-पूर्वं दृष्टः " नामनाम्ना० " इति सः स्त्री चेत् ।

'असदिवामन्त्र्य पूर्वम्' २ । १ । २५ ॥ योऽर्थः स्वेन धर्मेण प्रसिद्धो धर्मान्तरसम्बन्ध प्रत्यभिमुखीक्रियते स आमन्त्र्यः । यथा देवदत्तो देवदत्तत्वेन प्रसिद्धो धर्मान्तरऽभिमुखीक्रियते यथा पच पठत्यादि, तत्राऽर्थे कार्यासम्भवादुपचा

१ १-१ ७१ । २ १-१-१७ । ३ १-१-८ । ४ १-१-५४ । ५ १-१-१८ ।

तदामन्त्र्याभिधायि पदमामन्त्र्यं विज्ञायत इति । तयोश्चात्र नित्यप्राप्तावस्मिन् पक्षे कथं विकल्पो न लभ्यत इति ? उच्यते—नित्यं विधास्यमानत्वादिति मन्यनात्, यत्रैव वस्नसादयो विधीयन्ते तत्रैव विकल्प उपतिष्ठते न वस्नसादीनां निषेध इति । अथवा यद्यत्राऽपि पक्षे विकल्पः स्यात्तदा किमेतत्सूत्रकरणेन ? यतोऽसदिवाऽऽमन्त्र्य पूर्वमिति कृतेऽपि वस्नसादयो विकल्प्यन्ते ते च "पदात्पूर्वमन्त्रे" इत्यनेनैव विकल्पेन भविष्यन्ति । अथ यथा स्यादिति—अन्यथा लोपः स्यात्, "ते लुम्पा" इत्यनेनैव । पादादित्वम इति—मुनिपुङ्गवा इत्यस्य पदस्याऽसत्त्वे पादस्याऽभावादि त्यथः । मुनिपुङ्गवा इति सिंहादित्वात् समासः कर्मधारयो वा, व्यवहितेऽपीति यथा मथुरायाः पूर्वं पाटलीपुत्रमिति । पूर्वशब्दो वर्तत इति—अयमर्थो यद्यव्यवहित स्यैव पूर्वस्याऽनेनाऽसद्भावो विधीयेत न व्यवहितस्य तदा पूर्वग्रहणमपनीय असदि वाऽऽमन्त्र्यादित्येव क्रियेत यतः पूर्वस्याऽविद्यमानवद्भावे वस्नसाद्यभावः प्रयोजनं, तदे त्यमपि कृते सिध्यति । तयोश्चात्रपक्षेऽप्येतदानुपूर्व्येण समासेऽव्यवहितस्यैव विधीयेतेति ।

'जसिवचोऽप्य वाऽऽमन्त्रये' । २ । १ । २६ ॥ तदवद्विषयमिति—शब्दप्रधा नत्वात् स्याद्वादाभयपन शब्दार्थयोरैक्याद्वाऽर्थाभावे स्यवादित्वाभावात् तच्छब्दा भयनयोगात् समुदायोऽपि तद् इत्यादि कृत्वा कर्मधारयकरणात् वाकुलकाद्या नैकदेशः । तव मतव स्वतवी इति द्वन्द्वे "श्रोत्रेर" इति न, "मे सर्वोति" इति निषेधात् । सामर्थ्याद्विशेषणभूत इति—विशेष्यस्य विशेषणमात्रेणैव एकवाक्योपादानत्वेन साम र्थ्यात् सन्निहितत्वाद्विशेष्यत्वनिमित्तमामन्त्र्य इत्येतदेव विशेषण विज्ञायत इति । भिनाः शरण्या—इत्यत्र शरणमिति सामान्यकर्म युष्मानिति विशेषकर्म । भिन्नाः शरण्या युष्मानयो शरणं प्रपद्ये इत्यादौ "नित्यमन्वादेशे" इति वस्नसौ प्राप्तावनेन निषिध्येते, असिति किं साधो ! सुपिविशेषेति—अत्र द्वयोरपि पदयोः "अवंविधा" इत्यसत्त्वे प्राप्ते 'नाऽन्यत्' इत्यनेन साधो ! इत्यस्याऽसत्त्वाभावः । "नित्यमन्वादेशे" इत्यनेन च वस्नसौ । शरण्याः साधवो युष्मानिति—अत्र द्वयोरपि "अवंविधा" इत्य सद्भावः । आचार्या युष्मान् शरण्या इति—अत्राऽऽमन्त्र्यस्य विशेष्यस्य व्यवहितत्वेन यत्रोपश्लेषाभावाम भवति । आचार्या उपाध्याया इति—अत्र विभाविकरणयोर्न पूर्वं विशेष्य न परं विशेषणमिति सामर्थ्याद्विशेषणभूत इति भयनाम भवति ।

'माऽन्यत्' । २ । १ । २७ ॥ असिविशेष्यमित्यस्य प्रधानतयाऽन्यदिति सम्बन्धेनेत्याह—असिति ।

---

१ ८-१-१९। २ ८-१-१ ८। ३ ८-१-४१। ४ १-४-११। ५ ८-१-२५। ६ ८-१-२४।

'पादार्धयोः' । २ । १ । २८ ॥ मात्राश्च अक्षराणि च मात्राक्षराणि, नियत परिमाणानि च तानि मात्राक्षराणि च तेषां पिण्डः यद्वा मात्राक्षराणां पिण्डः, नियत परिमाणश्चासौ मात्राक्षरपिण्डश्चेति । दर्शनात्मक इति–दर्शन देशस्तं करोति "णिच्बहुलं णा०" देश्यत इति "णि वेस्यास०" इत्यनः ।

'चाऽऽहहवैवयोगे' । २ । १ । २९ ॥ योग इति–चादियोत्यसमुच्चयाद्यर्थस्य साक्षाद्युष्मदस्मदर्थसम्बन्धे इत्यर्थः । ज्ञानं च शीलं चेत्यत्र चशब्देन ज्ञानशीलयोः सद्वितीयता द्योत्यते, न तु युष्मदस्मदर्थयोरिति योगग्रहणमिति । अयमर्थः–योगग्रहणं विना अर्थात् प्रकरणाद्वा चादिषु गम्यमानेष्वपि स्यादिति ।

'दृश्यर्थैश्चिन्तायाम्' । २ । १ । ३० ॥ अत्राऽर्थे स्वरूप वा किः । तत्र यदाऽर्थे तदा दृशिरर्थो येषाम्, स्वरूपे तु दृशेरर्थो दर्शनमालोचनं येषां धातूनाम् । चनो यो मन्यत इति नाऽयं दृश्यो, दर्शनार्थो नाम सः यथाक्षिमात्रेण विज्ञानं भवतेऽतो न निषेध इति ।

'नित्यमन्वादेशे' । २ । १ । ३१ ॥ नन्वत्र निषेधाधिकारे कथमिदं विधाय कमभूत् ? सत्यम्, नित्य निषेधाधिकारे यन्नित्यग्रहणं तदनं बोधयति विधानमत्रमि तमिति । न चेद वाच्यमत्र नित्यग्रहणाभावे "पैदाद०" इति सूत्रे कथ विकल्प इति । तदा हि तत्रैव नवेति कुर्यादिति । कस्यचिद्द्रव्यस्य कामपिरिक्रियां जातिं गुणं द्रव्यं वा प्रतिपादयितुं कथितस्य तेन तदितरेण वा शब्देन पौनरुक्त्य मा भूदिति विशेषान्तरं प्रतिपादयितु पुनः कथनमन्वादेश इति यावत्, तेनाऽन्येन यति–युष्मदस्मच्छब्दा भ्यां कृत्वा विनीतत्वादिकं विधाय पुनर्युष्मदस्मद्भ्यां गुरुमाननादिकं विधीयते । यत्र यत्र तनैव शब्देन कथनमस्ति, अन्येन तु कथनमुत्तरत्रैव ज्ञेयम् । पुनरन्यद्विधातुमिति–पुनः शब्दोपादानात्तस्यैव कथनं यदि भवति तदैवाऽन्वादेशः । नत्वन्यस्य कथन पुनः शब्दार्थो घटते, तन यत्राऽन्यस्य कथनं तत्र नाऽन्वादेशः । ततश्च जिनदत्त मध्यापय एत च गुरुदत्तमित्यत्र तस्यैव जिनदत्तस्य पुनः कथनाभावादन्वादेशाभाव 'त्यदामेन०" इत्यनेनैनदादेशो न भवति । यूयं विनीता इति–अन्वादेशप्रदर्शनार्थं वाक्या न्तरमिदमुपदर्शितम्, न तूत्तरपदसम्बन्धो बोद्धव्यम्, तेन तदित्यस्य पदस्य सपूर्वत्वा भावादुत्तरेण न विकल्पः । तदित्यव्ययं तस्मादित्यर्थे । विनीततामात्रमत्राऽनूद्यत त्वाऽपूर्वं किञ्चिद्विधीयते । यूय विनीता इति प्रथमादेश , उत्तरस्याऽन्वादेशस्यापनायम् । विनीता इति विनीतत्वं प्रतिपादयितु यूयमित्युक्तम् । तदो गुरवो मानयन्ति इति–

१ १-४-४२ । २ ५-३-१११ । ३ २-१-३१ । ४ २-१-३६ ।

मन्वादेशः । यूयमिति यस्मयमप्युक्तं तस्यैव च गुरवो मानयन्तीति प्रतिपादयितुं द्वितीय कथन तत्र नवादेशः । एवं सर्वत्र ।

'सपूर्वात् प्रथमान्ताद्वा' । २ । १ । ३२ ॥ सहशब्दो विद्यमानवचनः । पूर्वशब्दो व्यवस्थायः । सह विद्यमानं पूर्वपदं यस्मात् "पंकार्थे चा०" इति समासः । प्रथमान्ताद्वेति–प्रथमायाः प्रत्ययत्वात् प्रत्ययः प्रकृत्यादेरित्यादिनाऽन्तस्य लब्धत्वा दन्तग्रहणं न्यायानुसारार्थमिति । धनवानसीत्यादि–अत्राऽन्येन कथनमन्वादेशः । यतो धनवानसीत्यस्मिन्नन्वादेशवर्जिते वाक्यान्तर प्रथममसीत्युक्तम् । अतो ग्रामे कम्बलस्ते स्वामित्यत्र तु तं इत्युक्तम् । गम्येऽप्यन्वादेश भवतीति–यूयं धनवन्त इत्या दिपदोपादाने हि साक्षादन्वादेशो भवति । अतो इत्यादेस्तु धोतकमात्रस्योपादान गम्य एव । माणवक ! जटिलक ! ते स्वमतो इत्यादौ तु विशेषणपदस्य जटिलक इत्यस्य अर्थविधा" इत्यसत्त्वं, माणवक इत्यस्य तु विशेष्यपदस्य 'अवधिकाऽऽमन्त्र्यं" इति नाऽसत्त्वं 'नाऽन्यत्" इति निषेधात् ।

'त्यदामेनदेतदो द्वितीयाटौस्यवृत्त्यन्ते' । २ । १ । ३३ ॥ त्यच त्यदच त्यदः । "त्यदादिः" इत्येकशेषः । "कौबेर" इति तु न भवति, सन्नत्वात् । शब्दार्थयोर्भेद विवक्षायां निरर्थकत्वेन त्यदादित्वाभावाद्वा । एताभ्यां रात्रिरधीतेति–अत्राऽधिपूर्वक कर्मण इङ्धातोर्योगे रात्रिलक्षणस्याऽऽधारस्य "कालाध्वभावदेशं" इति कालस्य कर्मत्वे तप्रत्ययाऽधीतेत्यत्र कर्मणि क्ते सति कर्मण उक्तत्वात् रात्रिशब्दात्प्रथमा । यदि वा रात्रिसहचरितमध्ययनमपि उपचारात् रात्रिशब्देनोच्यते । ततः साऽधीतेति । अर्थान्तरकरणाद्वेति–प्रथमाद्वसापवस्यादन्वादेशस्य । सत्राऽसामर्थ्यात् शब्दस्य राज्ञः पुरुष इत्यादिवत्समासाभावः । सामर्थ्यात् समासमेत्पूर्वकथनसापेक्षस्याऽन्वादेश स्याऽभाव इति परस्परविरोधादुभयाभावादन्वादेशाभाव इत्याह–अर्थादित्यादि । अर्थो वा सादृशो भवति प्रकरणं वा यत्र ताभ्यामवाऽपेक्ष्यस्य प्रथमादेशस्य निश्चितत्वा दुपायवाऽन्वर्थाभिरपेक्षस्यास्तमासो भवति । यथा देवदत्तस्य गुरुकुलम्, यत्र मात्रनिर्देश क्रियते–अनुवादमात्र क्रियेत्यर्थः । तत्राऽपि न भवति–यथा एतमातं क्रितमित्यत्र ।

'इदमः' २ । १ । ३४ ॥ तौत्स्वनः इति, "तोमः" इति च प्रासेऽपवादः । मपुत्रकाविति–कृत्रिमौ मत्पुत्रौ न तु पुत्राविति कः । अनुकम्प्यौ वा

१ ३-१-११ । २ ३-१-१५ । ३ ३ १-२७ । ४ ३-१-११ । ५ ३-१-२१ ।
६ ३-२-३१ । ७ ३-१ १७ । ८ ३-१-३१ ।

मस्तुत्रौ " अनुकम्पा० " इतिकम्(कप्), स्त्रीलवन्तानिमकौ सिद्धत इति । अत्राऽपि पूर्ववद् व्यपमानोऽन्वादेशः । अयो इत्यादि तु द्योतकत्वात् क्वाऽपि प्रयुज्यते क्वाऽपि न । अथ दण्डो हराऽनेनेति-अत्र अनुवादमात्रमेव न तु निमाण्यतामित्यादि विधीयते । अयो एन परिवर्तयेत्येव भवतीति-न तु कुण्डशब्दस्य नपुंसकस्य विशेषणस्य एनदिति ।

' अद्व्यञ्जने ' । २ । १ । ३५ ॥ तकार उच्चारणार्थः, अन्यथा सौ " सोऽतः " इत्यादिकृत ओ इत्यनिष्ट स्यात् । प्रथमान्ततयेह विपरिणम्यत इति-अत एव कार्यी निमित्तं कार्यमिति निर्देशक्रमे प्राप्ते निमित्तात्पूर्वं कार्यनिर्देशः । उपरत्राऽनगिति प्रथमान्तविशेषणोपादानाद्वा । शेषकाभ्यामिति-शिष्यते इति शिष्यकौ, ततः स्वार्थे प्रज्ञाद्यण् । शिष्यम् शिक्षा ' स्थितो० " इत्यप्रत्यय। शिक्षां शिरोऽधीयाते वा "परोक्षमाश्रिमा०" इत्यकः । ततः शिष्यकावेव प्रज्ञाद्यण् । अथवा शिक्षायां भवौ " शिक्षादेश्चाऽण् " ततो यावादित्वात्कः । अथ सावपि व्यञ्जनत्वात्कथ नाऽयमादेश इत्याह-सौ तु परत्वादिति । साक एव विधिरिति-विभान्वादावन्वादेशे साक्के निरकस्याऽन्वादेशविधानादिदेवं व्याख्या । साक्के यथादेशस्तदाऽन्वादेश एवेति । तेन निरकेऽन्वादेशेऽनन्वादेशे चोभयत्राऽदादेशः सिद्धः ।

' अनक् ' । २ । १ । ३६ ॥ पृथग्योगादिति-पृथग्योगारम्भादिति भावः, अन्यथा साकेऽप्यनकोऽप्यन्वादेशे पूर्वसूत्रेणैव सामान्यविधानेन सिद्धत्वात् एतदारम्भ वैयर्थ्यमिति । अन्वादेशनिवृत्तौ तत्सम्भवमप्यस्यन्त इति च निरूपम् । अत्र पूर्वोत्तरयोरिति, ननु परमाभ्यामित्यादौ पराद्व्यपदेशात्समासे सति स्याद्युत्पत्तिसापेक्षत्वेन बहिरङ्गत्वन्तरङ्गेऽसिद्धत्वेऽस्मिन् कृत इदरूपाभावाददादेशाभावः प्राप्नोतीत्याह-अत्रेति । किञ्च परमपदसम्बन्धिनाऽकारेण सह एत्वलक्षणः सन्धिः प्रथममेव क्रियत तदोभयोः स्थाने यः समुत्पद्यते स लभते, अन्यतरव्यपदेशमिति न्यायाद्यदा एकारस्य इदम्शब्दसम्बन्धिता तदा एकारेण सह इदमोऽर्थं स्यात्ततः पूर्वस्य व्यञ्जनान्ततायामनिष्टरूपापत्तिः । यदा तु एत्वस्य इद सम्बन्धिता न भवति तदेकारस्य स्थितिः स्यादित्युभयथाऽप्यनिष्टापत्तिः । एतच्चेति-कथ आग्नेन्द्रमित्यत्र प्रयोग आकारादिन्द्रशब्दस्य स्वरस्य वृद्धिर्न भवतीत्युक्त, ततश्च यदि पूर्वमेव सन्धिकार्यं स्यात्तदा निषेधोऽनर्थक एवेत्यर्थः ।

' अयमियं पुंस्त्रियोः सौ ' । २ । १ । ३८ ॥ पूर्ववल्लौकिको निर्देशः । लुप्तप्रथमाद्विवचनान्त पदम् । पुंस्त्रियोरिति किं ? पुंसि इय स्त्रियां अय मा भूत् । ननु कथमिदमुक्त यावता नपुंसकेऽयमियमादेशानिवृत्त्यर्थ पुंस्त्रियोरिति वचन स्यात् तत्राऽऽह-नपुंसक तु नित्यस्वादित्यादि ।

१ ७-१-३४ । २ ३-१-७१ । ३ महाविभ्योऽण् ७-२-११५ । ४ ५-१-१ ६ । ५ ६-२-१२६ । ६ ६-२-१४८ ।

' किमः कस्तसादौ च ' । २ । १ । ४० ॥ नन्वत्र तसादाविति किमर्थं तसि तावत् "कुतोऽत्रः कुत्र" इति निपातनं कस्यते ? सत्यम्, उत्तरार्थमिदम् । अथवा अनन्तार्थं तसादिग्रहणमन्यथाऽनवधिक ज्ञायेत, अत्र पूर्वसूत्रात्स्यादावित्यनुवर्तमानेन तसादावित्यस्य समुच्चयार्थश्चकारः । यथा "विशेषणं विशेष्येणै०" इत्यत्र । अत एव "आद्वेर" इत्यत्र स्यादावित्यस्याऽनुवृत्तिरन्यथा चानुकृष्टत्वान्नाऽनुवर्तेत । अमम साना इति–तेन किन्तरामित्यादौ तद्धपरेषु न भवति ।

' आद्वेरः ' । २ । १ । ४१ ॥ द्वाविच्छतीति क्यनि क्विपि तयोर्लोपे सौ "आद्वेर" इत्यनेनेकारस्याऽत्वं न स्यदादिसम्बन्धित्वस्याभावात् द्वीरित्येव भवति । एक इति–रूपनिर्णयार्थमिदं दर्शितं न तु विधिस्फलम् ।

' तः सौ सः ' । २ । १ । ४२ ॥ भवतीति ' नामग्रहणे० ' इति न्यायात् प्राप्ताऽपि सत्वे भवतीति स्यात् । नपुंसके सेरभावात् पुंलिङ्गे तु सेः स्थानित्वेन सत्वे कृतेऽपि "पैवस्य" इति सलोपे विशेषाभावात् स्त्रियामुदाहृतम् ।

' अदसो दः सेस्तु डौः ' । २ । १ । ४३ ॥ असाविति–सेरनेन डौ 'डित्यन्त्य स्वरादेः" इत्येवं कार्यं, न तु ' आद्वेरः " इति प्रक्रियालाघवार्थं विरुद्धकार्यस्य सर्वकार्यबाधकत्वेन व्याख्यास्यमानत्वात् । हे असौ, हे असकौ विशुभिति–अत्र औरित्यपि कृते स्यादेशा इति सेः स्थानित्वेऽपि ' अदेतः स्यमोः " इत्यस्य न प्रसङ्गः । सिद्धराऽमोऽपि लुपि सिद्धायां यदम् ग्रहणं तदन्यस्य स्यादेशस्य लुग्भवतोऽमिति तत्र व्याख्यानात् । कार्याणि न भवन्तीति–एतानि च विधीं प्राप्नुवन्ति । तथाहि–अदस्अ स्यात् सौ अनेन औकारे ' आद्वेरः ' इत्यत्वे आपि औप्यपदेशे औतेत्यस्य सिम्बन्धे तु आमन्त्र्ये ' दैवापः इत्यस्य औ, अनामन्त्र्ये तु ' दीर्घङ्याब् " इत्यस्य, अपि तु " अस्यायत्तत् इत्यस्य प्राप्तिः । अथ औतेत्यत्र प्रथमाद्वितीयाद्विवचनेनेति व्याख्यानात्कथं सिः स्थानौकारस्य प्राप्तिः ? सत्यम्, अत्रैव स्थिते तत्रैव व्याख्यात मिति औतेति प्राप्नोत्येव ।

' असुको वाऽकि ' । २ । १ । ४४ ॥ असुक इति–अत्र परत्वाभिन्नत्वात् "अव्यादेः इति बाधित्वा तस्य "आद्वेरः "लुगस्या० ", "सोरुः " इति असुकसिति तन्मते–सम्बोधन स्त्रियां चाऽसुक इति विसर्गान्त एव; स्वमते तु स्त्रिया असुका इति । स्त्रीसम्बोधने तु हे असुके ! इति ।

---

१ ७-२-१ । २ १-१-३६ । ३ ४-२-८१ । ४ २-१-११४ । ५ १-४-४२ । ६ १-४-३५ । ७ २-४-११३ । ८ १-४-१ । ९ २-१-४१ । १० २-१-११३ । ११ २-१-७१ ।

'मोऽवर्णस्य'। २। १। ४५॥ नन्वदः कुलमिच्छतीत्यस्मिन् वाक्येऽदस्यामुष्यपुत्रकात् सेत्युपि "सोऽ" इति रुत्वे, "रोर्यः" इति यत्वे, "स्वरे वा" इति यलोपेऽवर्णान्तत्वान्मत्वप्रसङ्ग इति; सत्य, पदान्तरापक्षत्वेन यलोपस्य बहिरङ्गत्वात् तदनपेक्षत्वेन मत्वविधेरन्तरङ्गत्वादसिद्धं बहिरङ्गमिति लोपस्याऽसिद्धत्वेऽनवर्णान्तत्वान्मकाराभावः।

'वाद्रौ'। २। १। ४६॥ अदसोऽनपरस्याद्यागमस्य तद्ग्रहणेन ग्रहणादस्मिन् सत्यदस इकारान्तत्वेनाऽवर्णान्तत्वाभावादप्राप्तेऽयं योगः। अमुमुयङ्ङिति—समुदाये प्रवृत्ता अपि शब्दा अवयवेऽपि वर्तन्त इति। मात्रा शब्दोऽर्धमात्रायामपि तेनाऽमुमुयङ्ङित्यत्राऽर्धमात्रिकस्याऽपि रः स्थाने एकमात्रिक उकारादेशो भवति। अत्र वा व्यवस्थितविभाषार्थो न विकल्पार्थस्तेन क्वाऽपि कथञ्चिद्विकल्पः प्रवर्तते यदि तु विकल्पार्थः स्यात्तदा प्रथममेव प्रयोगद्वयं स्यात्। तावतैव विकल्पस्य चरितार्थत्वात्। अदसो दकारस्येति—अद्रेरागमत्वात्तद्ग्रहणेन ग्रहणाददसो दकारस्येत्युक्तेऽपि अदसोऽद्रेश्च दस्य मः सिद्धः, दकारस्येत्यत्र एकवचनान्तत्वादेकस्यैव दस्य म इति तु न वाच्यम् अव्याख्याभयात्; चातूरूप्यमिति स्वार्थे भेषजादित्वात् ट्यणे चतुर्णां रूपाणां भावः 'पतिराजान्त०" इत्यनेन वा।

'मादुवर्णोऽनु'। २। १। ४७॥ अनु पश्चादिति, अत्राऽनुना पूर्वं सम्बन्धस्तस्य च पश्चादर्थत्वात् "प्रभृत्यन्यार्थ०" इति दिग्योगलक्षणा पञ्चमी। यदि पूर्वं पश्चादित्यनेन योगो विवक्ष्यते, तदा "रिरिष्टात्०" इत्यनेन ग्रामान्तरस्य इत्यत्र षष्ठी स्यात्; पश्चादित्यसत्त्वमव्ययं वा। अथाऽत्रानुग्रहणं किमर्थं यतो यदि व्यवहितात् प्रागुवर्णो भवति तदा इनादेवेत्युत्तरसूत्रे नियमार्थे व्याख्यायमानेऽन्वयस्य लब्धत्वात्, सत्य, एवमपि नियमाशङ्का स्यात्, इनादेशस्यापत्यप्रत्ययादेशस्ततोऽन्यस्मादपि प्रत्ययादेशादेव पश्चादुवर्णः; प्रकृत्यादेशात् परस्तात् पूर्वमपि भवेत्तथा च अमुया अमुयोरित्यादयो न सिध्येयुः। अमुष्मै—नन्वत्र किंस्यादिति इत्योत्वे स्मै भादेशे कृते कथं न भवति?, उच्यते—अद्रीत्यत्र नञः पर्युदासाश्रयणात्, स हि सदृशग्राही ततो यत्र साक्षात् स्वरोऽग्रे भवति तत्रैव पूर्वस्याकारस्य ओकारस्तत्राऽद्रीति साक्षात्स्वरदर्शनात्।

'बहुष्वेरी'। २। १। ४९॥ अमुकम्यः अत्राऽकस्य मध्यपतितस्य तद्ग्रहणेन ग्रहणेऽप्युकारेण व्यवधानादनेन ईत्वाभावः।

---

१ १-२-२१। २ १-३-१४। ३ ७-१-६। ४ २-२-७५। ५ २-२-७२। ६ १-४-२१।

'धातोरिवर्णोवर्णस्येयुव् स्वरे प्रत्यये' । २ । १ । ५० ॥ धुवर्णस्येति कर्तव्ये यदिवर्णोवर्णस्येति कृतं तद्भिन्नमिन्ना प्रकृतिरिति दर्शनार्थम् । प्रत्यये इति '<u>प्रत्ययाप्रत्यययोरिति</u>' न्यायेन प्रत्यय एव भविष्यति किं तद्ग्रहणेन ? सत्य, '<u>न्यायाश्च स्थविरयष्टिन्यायेन प्रवृत्ति</u>' । नियौ, निय इति, ननु गौणमुख्ययोरिति मुख्यस्यैवेयुवौ प्राप्नुतः ? नैवम्, "स्यादौ यः" इति सूत्रस्यैतदपवादत्वात् गौणस्यापि भवति । स्त्रियाविति–ननु "स्त्रियाः" इत्यनेनाऽपीय् सिद्धः किमत्रोदाहरणेन ? सत्यं, तेन नाम्न इय् भवति अनेन तु धातोः, अत एव यत्र क्विबन्तः स्त्रीशब्दो भवति तत्राऽनेन "वाऽम्शसि" इति विकल्पो बाध्यते ।

'इणः' । २ । १ । ५१ ॥ अत्र व्यभिचाराभावेऽपि धातोरित्युत्तरार्थमनुवर्त्तनीयम् । यत्वापवाद इति–"योऽनेकस्वरस्य" इति प्राप्तस्य । परत्वेनेति–द्वितीयेति विधेयविहितत्वात् प्रकृष्टत्वेनत्वर्थः । परत्वं तु स्पर्धाभावान्न घटते । परत्वादिति–'पूर्वेऽपवादा अनन्तरान् विधीन् बाधन्ते नोत्तरानिति', "योऽनेकस्वरस्ये" ति प्राप्त यत्वं बाधते न तु गुणवृद्धी । ईयतुरित्यत्र द्वित्वे कृते '<u>सार्थोन्यभाकृत बलीय</u>' इति न्यायात्पर्यभिधायेवस्वतो दीर्घः ।

'संयोगात्' । २ । १ । ५२ ॥ य्वोरपवादौ इति "क्विवृत्तेः०" "योऽनेकस्वरस्य" इति विहितयोः ।

'भ्रूश्नोः' । २ । १ । ५३ ॥ संयोगात् परस्येति विशेषणं श्नोर्न तु भ्रूशब्दस्याऽव्यभिचारात् ।

'स्त्रियाः' । २ । १ । ५४ ॥ स्त्रियामित्यत्र '<u>निरनुबन्धग्रहणम्</u>' इति न्यायात् हस्वापश्च " इति नाम् न परमस्त्रियामिति–प्रत्ययनयेति नोपतिष्ठते, 'वेयुवो' इत्यत्राऽस्त्रिया निर्देशात् । यद्वा स्वरादिप्रत्ययेन प्रकृतेराक्षेपात् स्त्रिया इति तस्या विशेषणत्वेन तदन्ततदंप्रत्ययायदन्तस्याऽप्युदाहरणं । तर्हि स्त्रीशब्दस्याऽपि तदन्तत्वा दियादेशः प्राप्नोतीत्याशङ्क्याऽनपकृत्वादिति । एतच्चेति–अस्त्रिया इति निर्देशात् परादपीयुवपत्वादिकार्यात् प्रथममेव ईयादिक कार्यं भवतीत्यापुक तथेत्यर्थः ।

'वाऽम्शसि' । २ । १ । ५५ ॥ अत्र षष्ठीबहुवचनस्य नामविषयत्वेन स्याद्यादित्वाभावात् प्रत्यासत्त्या तुल्यायामपि संहितायां द्वितीयैकवचनस्यैव ग्रहणम् । स्त्रीशब्दस्य संस्थैकार्थत्वाभावाद्वितयसोऽन्नुत्पत्तेः संस्थैकार्थत्वयोभावात्तयो वा

स्वरादित्वाभावाद्द्वितीयाबहुवचनस्यैव शसो ग्रहणाच्चस्याऽव्यभिचारात्वेन साहचर्यम् कथमापन्नमस्तीति, अथ धातुरूपस्यैव स्त्रीशब्दस्य विकल्पार्थमिदं कस्मान्न भवति, कथमुक्तं "धातोरिवर्णे०" इत्यादिना नित्यमियादेश इति ? उच्यते–स्त्रिया इति प्रागारम्भादधातोरेव स्त्रीशब्दस्य ग्रहणम् । स एव चाऽनुवर्तते न चाऽननुवर्तमानस्याऽन्यथात्वं भवति, यदाह श्रीशेषराजः "नहि गोधा सर्पन्ती सर्पणादहिर्भवतीति" तस्मादुक्तमुक्तं "धातोरिवर्णो०" इत्यादिना इयादेश इति ।

'योऽनेकस्वरस्य' । २ । १ । ५६ ॥ धातोरित्यनुवर्तत इति, '<u>निर्दिश्यमानविशिष्टः प्रकृतं न बाधते</u>' इति न्यायात्, इयुवाधकमिदम् ।

'स्यादौ वः' । २ । १ । ५७ ॥ उवबाधनार्थमिदं, वसुमिच्छतीति वेवमभि राजान वेत्यर्थः । ग्रम्यवृत्तिस्तु नपुंसकः ।

'क्विब्वृत्तेरसुधियस्तौ' । २ । १ । ५८ ॥ क्विबन्तेनैवेति, नन्वत्राऽवधारणं कस्माल्लब्धम् ? उच्यते–वृत्तिस्थस्य धातोः स्यादौ कार्यविधानात्तस्य च केवलस्य वृत्त्यसम्भवाद्वृत्तिग्रहणादेव क्विपि लब्धे क्विब्ग्रहणमवधारणार्थमत एवाऽवधारणस्य शब्दाश्रयत्वादसामर्थ्यमपि नाऽस्तीत्याह क्विब्वृत्तेरिति । सेनानीरिति–सेनां नेतेत्यर्थं कथनं चाभवत् सेना शब्दस्य षष्ठ्यन्तस्य '<u>गतिकारककृति</u>' न्यायेन नीशब्देन क्विबन्तेन "कृति" इति समासः, न च वाच्यं "नैकार्म्येक०" इति नियमेन द्वितीयैव प्राप्नोति न षष्ठी तत्कथं कृतीति समास ? उच्यते–"कर्मयुक्ते कर्त्रा" इत्यस्यैव विषयेऽयं नियमो न कृतीत्यस्य, यद्वाऽपि नयतीति नीः पश्चात् परशब्देन कर्मषष्ठ्यन्तेन कारकत्वात् स्याद्युत्पत्तेः पूर्वं क्विबन्तेन समासस्तदाऽपि यत्वं भवतीत्याह यद्वेत्यादि, उभयत्राऽप्यर्थभेदाभावात् प्रक्रियाभेदमात्रमेतदुपदर्शितमिति, परमार्थतस्तु सोपपदादेव क्विप् । ननु महतः सेनान्यो यस्येति कृते यत्वं भवति वा नवा ? भवत्येव, यतः सेनानीशब्दस्य क्विबन्तेन वृत्तिरस्ति । परमनीरिति–परमशब्दस्याऽकारकत्वात् क्विबन्तेन समासाभावात् क्विब्ग्रहणादिह यत्वं न भवति ।

'दृन्पुनर्वर्षाकारैर्भुवः' । २ । १ । ५९ ॥ दृन् हिंसमिति दृह्, दृहु इति धातुः द्वर्ततीति क्विपि, तल्लोप, सिलोप च "पदस्य" इति हलोप दृन् इति रूपम् । पुना-भूरिति–भक्त्या पुनर्नवापि स्त्री यथाभूद्गुरे नवम ( नवस्त्रीम् ) इति वैजयन्तीकारः । कारेति–क्रियत इति कारो राजलभ्यो भागः । कारभ्वौ उभय शास्त्रापनः । स हि कारशब्द

१ ३-१-५ । २ ३-१-७० । ३ १-३-१ । ४ ३-३-४१ । ५ ३-१-८१ ।

पठित्वा करणकारणयोरेकार्थत्वावेकदेशनिकृतं तदेवेति कारणमन्येनाऽपीच्छति । स्वयम्भुवाविति–अत्राऽपि " विभुरस्म० " इत्यादिना क्विप् । न तु " समंत्स्यर्थम् " इत्यादि डुः । तदा हि धातुत्वं न स्यात् । एतैरवेति–प्रकृतिनियमोऽयम् । एतैर्योगे एव एव नाऽन्यस्य, धातोरिति तु उपपदनियमो न भवति । " अर्थेवमभ्युपोऽड् " इति सूत्रनिर्देशात् । एवंविधे हि नियमे क्रियमाणे एतैर्योग एव नाऽन्यस्येत्यन्ये धातवो नियमिताः स्युः । ततस्तु एतैरन्यैश्च योग बत्वं स्यात्तथा चाऽस्वयम्भुव इति न स्यात् ।

' णषमसत् परे स्यादिविधौ च ' । २ । १ । ६० ॥ णो विधीयमानत्वे- नैवास्तीत्यभिप्रायकारे णकारेन णत्वविधायकानि सूत्राण्युच्यन्ते, एव षकारेणाऽपि षत्वविधायकानीति । एतत्सूत्रनिर्दिष्टयोरिति–यदि तु सप्तमपादोक्तक्रमेण षत्व इति क्रियते तदा षत्वमसत् वृष्टव्यमिति पूर्वं कृतस्य षत्वस्यासत्त्वात् भवत इति सिद्धम् । न च च इति व्यावृत्त्या पूर्वमेव न भविष्यति । धातोः प्रागुपसर्गसम्बन्ध इति मते व्यावृत्तेरभावितायत्वात् अभिषुणोतीत्यादि न सिध्यति । ' उपसर्गात्सुग० " इत्य- नेन विहितस्य षत्वस्य णत्वे परत्वात् । " रघुवर्णान्नोण० " इत्यनेन णकाराद्विधीय- मानं णत्व न स्यात् । णत्वाभावं चेति–अयमभिप्रायः, णत्वस्यैवाऽसिद्धत्वं युक्तम् । कार्यासिद्धत्वाभावे हि यथा देवदत्तस्य हन्तरि हतेऽपि न पुनर्देवदत्तस्य प्रादुर्भावो भवति तथा कार्येऽसिद्धत्वमापादितेऽपि न शक्तेः पुनः प्रत्यापत्तिर्भवति । ततः पुष्ण इत्यत्र णत्वस्याऽसिद्धत्वेऽपि नकारत्वस्यापत्तेरभावाभाऽनन्ता प्रकृतिरिति तन्निबन्धनोऽ- नोऽकारलोपो न स्यात् । णत्वासिद्धत्वे त्वकारलोपप्रारम्भेण शास्त्रप्रवर्तने न कस्त- प्रसङ्गमिति । अधिकार इति–अधि उपरि क्रियतेऽनुवर्त्यत इत्यधिकारः अधि ।

' ऋतोरेवोऽपि ' । २ । १ । ६१ ॥ ऋकारेणोपलक्षितस्य इति व्युत्पत्तिकल्पनात् ऋकारोपलक्षितानां ग्रहण सिद्धं, ऋकारोपलक्षितस्य तकारस्य सर्वेष्वेषु विद्यमानत्वात् । परे कार्ये इति–परत्वमत्रत्यसूत्रापेक्षं विज्ञायते, न कार्यविधायकसूत्रापेक्षम्, अप्रीति प्रतिपत्तेः । एतत्सूत्रापेक्षे हि परत्वे " यैतद्व० " इति यत्वमपि परम् । तस्मिन्नप्य सत्त्वे प्राप्तत्र्यीति प्रतिषेधो युज्यते । ग्रामणीमानिति–ग्राम्यस्याऽस्त्यस्य ' अत इञ् " तथा मतुः । यद्वा ग्रामोऽस्याऽस्ति इन् ततः ग्राम्यणाऽस्ति मतुः । सन्युः पन्युरिति, सख्यं पूज पेच्छति क्यन् " क्यनि " इति ईकारस्ततो क्वम् । यदाऽपि लयन सखीनिच्छामि च्छति या स्त्री क्यन् सखीयतीत्यादि प्रक्रिया क्रियते तदाऽपि ग्रामणीप्रभृतवत् विशेषणसम्बन्धत्वेन नित्यस्त्रीत्वाभावात् ' याऽनेकस्वरस्य " इति यत्वे सन्युः पन्युरित्येव

१ ५-१-१ । २ ५-२-८४ । ३ ७-४- । ४ १-१-१९ । ५ १-१-४२ । ६ २-१-८ । ७ १-३-११ । ८ ३-४-२१ ।

भवति । यदा तु वनिमिच्छति यः पुमानित्यादि क्रियते, तदा यो वनिशब्दः स्त्रीलिङ्गः स ङ्यन्तो न भवति, यस्तु ङ्यन्तः न नदन्तः स न स्त्रीलिङ्ग इति "स्त्रीदूतः" इत्यस्य प्राप्तिरेव नाऽस्ति, यत्वे सून्युः पून्युरित्येव । यदा तु ङ्यन्तादेव क्यन् तदा "क्विपां क्वौ वा०" इति वाति तत्पक्षे तु "क्विस्वैवित्ति" इत्येस्ते सून्या सूनरिति रूपद्वय पश्चाद्भागे ज्ञातव्यम् । नन्वपीति किमर्थं यतः यत्वरूप परे कार्ये कर्तव्ये कादेशस्याऽसत्त्वं प्राप्तमनेन निषिध्यते, तथ परे कार्ये इति भवनात्र प्राप्नोति, यत्वयत्वयोः पूर्वसूत्रे ग्रहणादिति ? सत्य, अत एव प्रतिषेधात् पूर्वत्र यत्वसहचारितं सप्तमपादनिर्दिष्ट यत्व गृह्यते तेन अद्राक्षीदित्यादि सिद्धम्, अन्यथा यदि पूर्वसूत्रे सामान्येन यत्वमङ्गीक्रियते तदा "पदोः कस्सि" इति परे कार्ये कर्तव्ये यत्व स्याऽसत्त्वात् कत्व न स्यादिति । मग्न इति–'मस्जेः सः" इति सस्य नः । "नो व्यञ्जन०" इति लुप् ।

'पदोः कस्सि' । २ । १ । ६२ ॥ निघोक्ष्यति स्यतिप्रत्यय गुणे "हो धुट्पदान्ते" इति ढत्वे नित्यस्याऽपि कादेशस्य परेऽसत्त्वात् 'गडदबादे" इत्यादे चतुर्थत्वे तदोऽनन्त कत्वे सिद्धम् । कमिच्छासेरपि सौ विकल्पन ककारमिच्छति तन्मते–शाषि, शास्सि ।

'भ्वादेर्नामिनो दीर्घोर्वोर्व्यञ्जने' । २ । १ । ६३ ॥ "राद्स्मूर्च्छे०" इति सूत्रे मूर्च्छ इति निर्देशात् प्रत्ययाप्रत्यययोरिति नाऽभीष्ट । भ्वादेरिति आकृष्या नामिन इत्यनन घोरित्यनेन च सम्बध्यते । हूर्च्छेति–अत्राऽष्, मूर्च्छेति–अत्र भिदाघङ्, कुर्यति–"शौच०" इति वेट्, दीव्यात् अत्राऽऽशीष्यात्; सप्तम्यां तु दीव्यत् दीव्येत् । असद्विधाविति–यथाऽत्र दीर्घद्वारेणैव स्थानिवद्भावप्रतिषेधो भविष्यति, किमनन सूत्रेणाऽसदधिकारविहितन ? नैवं, ओर्मा मोमा इत्यत्र साधकत्वात् । तथाहि ऊर्णतीति मूर्च्छतीति मनि "राल्लुक्" इति वकारछकारयोर्लोपे एतस्सूत्रविहित दीर्घस्याऽसद्विधित्वेनासत्त्वे 'नामिनोरुपान्त्यस्य' इति गुणो भवति, अन्यथा लघ्व भावात् स न स्यात् । दिव्मा दिव्न इति, यत्रयानां सानुनासिकनिरनुनासिकत्वऽप्यत्र निरनुनासिकस्य विवक्षितमिति 'अनुनासिके च०" इत्यूट् न भवति । "मन्वन् क्वनिप्" इति वनिविधायक सूत्रे क्वचिद्ग्रहणस्य सर्वोपाधिव्यभिचारार्थत्वात्कचिदय

१ २-१-५६ । २ १-४-२८ । ३ १-४-२१ । ४ २-१-६२ । ५ ४-४-११ । ६ ४-१-४५ । ७ २-१-८२ । ८ १-१-७७ । ९ ४-२-६६ । १० ४-४-४७ । ११ ४-१-११ । १२ ४-१-४ । १३ ४-१-१ ८ । १४ ५-१-१४७ ।

स्वरूपेण न भवति । कश्चित् धातुसम्बन्धो न भवतीति नाममात्रभावः । प्रत्यासत्त्येति-अत्रैकेन प्रयत्नेन द्वयोरुपादानं प्रत्यासत्तिः । शब्दान्तरं प्रतीत्य शब्दान्तरस्याऽऽसत्तिरिति व्युत्पत्तेः । इयमेव हि शब्दस्य शब्दान्तरेण प्रत्यासत्तिः । पदैकप्रयत्नोच्चार्यं नामैकवाक्योपात्तलक्षणप्रत्यासत्तिर्नेहोपयुज्यते ।

'पदान्ते' । २ । १ । ६४ ॥ पिपठीरिति, ननु स्यादेः सम्बन्धिनो नामिनो दीर्घ इत्युक्तं, तत्कथमत्र पिपठिष् इत्यस्यास्यादिरूपस्य सम्बन्धिनो नामिनो दीर्घ इति ? सत्यम्, स्याद्यवयवेन पद् इत्यनेन योगात्समुदायोऽपि पिपठिष इत्येवंरूपो स्यादिः । यथैव पूर्वसूत्रेषूदाहृतेषु चतुर्भिः, चतुर्ष इत्यादिष्वप्यनेन प्रकारेण स्यादि सम्बन्धित्वमस्त्येव तत्कथं न दीर्घः सत्यम्, धातुत्वे सति स्याद्यस्यादिचिन्ता क्रियते, अत्र तु धातुत्वस्याऽप्यभावः । तर्हि कुर्कुरीयति, चतुर्यति, दिव्यतीत्यादिषु धातुत्वमस्ति ततोऽनेन प्रकारेण स्यादित्वमप्यस्ति ततो दीर्घः स्यात्; सत्यं, यद्यप्येवं प्रत्ययान्तानां धातुत्वमस्ति पिपठीरित्यादिविषयेषु न स्याद्यवयवात् प्रत्ययो विधीयते, किं तर्हि नाम्न एव ? ततो स्याद्यवयवयोगाभावात् कुर्कुरीय इत्यादेः समुदायस्य न स्यादित्वम् । आशीरिति अत्र नित्यमपि विसर्गं बाधित्वा "नित्यादन्तरङ्ग"मिति न्यायात् प्रथममनेन दीर्घस्ततो विसर्गः ।

'न यि तद्धिते' । २ । १ । ६५ ॥ नाम्युपान्त्य इति, अयमर्थः । यदा दिव् इत्यादेः क्विप् तदा कृत्वा भाव्यं, इति न वकारान्तत्वम्; यदा तु विच् तदा गुणे कृते एकारस्य दीर्घरूपस्य दीर्घकरणं व्यर्थम् । ननु दिव्यमित्यत्र सम्भवति वान्तो नाम्युपान्त्यश्च धातुः, सत्यं, अत्राऽपि दिव्प्रत्ययान्तस्यौणादिकत्वाद्दिवो न धातुत्वमिति न वान्तो नाम्युपान्त्यश्च धातुः सम्भवति । पुर्यामिति—पुरशब्दाज्जातित्वात् स्त्र्यां, 'पुर' पालनपूरणयोरित्यस्मात् "इगुप" किति इमप्रत्यये वा । एवं गिर्योः किर्योरिति । बहिरङ्गलक्षणस्येति—प्रत्ययाश्रितत्वेन यत्वं बहिरङ्गं, दीर्घत्वं तु प्रकृतिमात्राश्रितत्वेनाऽन्तरङ्गम् । कुर—छुर्योरित्युकारः किमिति, अन्यथा प्रतिपदोक्तत्वात् कुरत् शब्दे इत्यस्यैव ग्रहणं स्यात्तर्हि कुर्कुर इति निर्विवादं क्रियताम् । न च वाच्यं कुर्कुर इति कृते 'कुरड्' हिंसायामित्यस्याऽपि ग्रहणं स्यात्, कुर्कोतीत्यादौ रेफाभावात् करिष्यन्तीत्यादौ तु नाम्यभावेन दीर्घत्वप्राप्तेरभावादिति । छुर्यत—यपविधे यत्र कृते चिकीर्षतीत्यादौ दीर्घनिषेधः स्यात् । संविव्याय, विव्यायेति 'व्येंग्', व्ययन् आस्यां चायि, "व्येस्यमोर्यङि" इत्यास्यप्रतिषेधे द्वित्वेऽन्त्यादिव्यञ्जनलोपे

१ उणा १८।२४-२-१।

"ह्रस्वः" इत्यनेन ह्रस्वत्वे, तस्य च कार्यान्तरसाधनार्थं "भ्याम्भ्येभ्यपि" इति इकारस्याऽपीत्वे प्रथमे प्रयोगे "नामिनोऽकलिहलः" इति एत एत्वे जाये च सिद्धम्। असिद्धत्वादिति–इत्वे कृते प्रत्ययाश्रितत्वेन बहिरङ्गस्य प्रकृत्याश्रितत्वेनाऽन्तरङ्गे दीर्घत्वे कर्तव्ये "ह्रस्वः" इत्यनेन कृतस्य इकारस्येत्यर्थः। न तु स्वरूपसाधनार्थं, "भ्याम्भ्येभ्यपि०" इति कृतस्येकारस्याऽपि मध्ये इकारस्याऽसिद्धत्व यतस्तस्याऽसिद्धत्वे "ह्रस्वः" इत्यनेन कृत इकारः सिद्धः स्यात्तस्य च नामित्वात्ततो नामिनोऽसिद्धत्वादिति यदुक्तं तद् व्यार्थं स्यात्। ननु नामिनोऽसिद्धत्वादिति किमित्युक्तं यावता यद्यप्यत्राऽनेन दीर्घो भविष्यति, तथापि "ह्रस्वः" इत्यनेन ह्रस्वे कृते संधि व्यापेत्यादि सेत्स्यति; सत्यम्, ह्रस्वरूप परस्मिन्कार्ये विधेये दीर्घत्व दीर्घत्वस्याप्य ऽसिद्धं भवतीति। यदाऽपि नित्यत्वाद्विशेषविधानाद्वा "ह्रस्वः" इति बाधित्वा "भ्याम्भ्येभ्यपि०" इति प्रवर्तते तदाऽपि तस्याऽपि प्रत्ययाश्रितत्वेन बहिरङ्गेनाऽसिद्धत्वान्नामिनोऽभावाद्दीर्घाभावः। कुर्वते, कुर्दनस्यादिषु द्वोस्कुर्वेति ज्ञापकाद्दीर्घत्वं न भवति, कथं यदि रेफोपान्त्यानां दीर्घः स्यात्तदा द्वो स्कुर्वा भवतिरोप इत्य स्याऽपि दीर्घः सिद्ध इति दीर्घोच्चारणं न कर्तव्यम्। तस्मादत्र दीर्घ कुर्वन् ज्ञापयति स्यादेरित्यय विधिरनित्यः।

'मो नो म्वोश्च'। २। १। ६७॥ पदान्त इत्यनुवर्तमानेन समुच्चयार्थश्च चकारो न तु पदान्त इत्यस्याऽनुकर्षणार्थः। विधानसामर्थ्याल्लोपाभावो नाऽऽशङ्कनीय इत्याह–न त्वस्याऽसत्त्वादिति। त्वत्त्वपीति–अप्यर्थेऽव्ययमव्ययम्।

'स्रस्ध्वस्क्वस्सनडुहो दः'। २। १। ६८॥ उखास्रदिति, उखया मुखेन स्रा स्या वा स्रसते। ननु दकारकरणं किमर्थं? तकार एव क्रियताम्, यतस्तकारेऽपि कृते "धुटस्तृतीयः" इत्यनेन दकारो भविष्यति। नैवम्, तकार विधीयमान परेऽसदिति वच नात् 'धुटस्तृतीय" इति दत्वाभावाद्दकारश्रवण न स्यात्। स्वनडुदिति–अत्र बहुत्वे वाक्य कार्यमेकत्वे तु पुंमनडुहो०" इति कच् स्यात्। कस्मिन्नीति–कसोः ककारो 'वसं' निवासे, 'वसिङ्' आच्छादने अनयोर्व्युदासार्थः। तेन वसेः क्विपि यजादित्वात् वृति दीर्घत्वे ऊः। क्षौम वस्ते क्विपि क्षौमवः। अथ वसतिवस्त्योः सकारान्तत्वा व्यभिचाराद्व्यभिचारे च विशेषणस्यार्थवत्त्वात् व्यभिचारिणः कस एव ग्रहण भविष्यति। कुतो कस्तिति सकारोपादानात्? नैवम्, अन्यथाऽपि प्रतीतिः स्यात्, यस्तुसन्तयोरेतयोरेव वस्तनीसिवन्तयोर्विशेषविहितत्वेन ' मेः रुर्वा च०" सिद् लोपा

१ ४-१-११। २ ४-१-७१। ३ ४-१-९१। ४ २-१-७६। ५ ७-१-१०१। ६ ४-१-७१

मावे कसिमिति द्विः सकाररूपाद्रूपं स्यादितीह मा भूदिति ककारकरणम्। स्वतरत्वरेव बाधकमिति–अनडुद्रुम्ने हो घुट्पदान्ते ” इत्यनेन दस्वस्य शेषेषु दस्य प्राप्तिः। प्राप्ते चाऽप्राप्ते चाति क्लीबे विद्वत्कुलमित्यादिष्वप्राप्ते पुंस्त्वे तु विद्वानित्यादौ प्राप्ते इति तस्य न बाधकम्।

‘ ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां गः ’। २। १। ६० ॥ ऋत्विगिति, ऋतुः प्रयोजन प्रवर्तकं यस्येति वाक्ये “ केयूर० ” इति प्रयोजनशब्दलोपः। अत एव निपातनाद्वा। ऋतु प्रयोजन इत्यर्थकथनं वा। तत्र पक्षे ऋतुना हेतुभूतेन यजते इत्यर्थः। ननु ऋत्विग्दिगुष्णिगिति गान्ता निपाताः क्रियन्तां किं गविधानेन? सत्यम्, गनिपातने गत्वसंनियोगशिष्टत्वेन ज्ञायेत ततो ध्याङ्चौ ऋत्विग्भौ उष्णिहाविति न स्याताम्। गत्वे तु विहिते निपातनं सर्वत्र भवति, गत्व तु पदान्त एव भवतीति। स्रगिति–सृजति मस्तकादिकमिति “ ऋत्विक् पृषि ” इत्यनेन बहुवचनात्स्विकादयः।

‘ नशो वा ’। २। १। ७० ॥ जीवतीति अप्। जीवस्य जीवतो नशन “ द्वयोर्विभ्यो वा ” इति किम्।

‘ सजुषः ’। २। १। ७३ ॥ रत्वापवादः, समास इति, अस्मादेव निर्देशात्।

‘ अहः ’। २। १। ७४ ॥ सावधिकस्यादिति अयमभिप्राय उभयत्राप्युत्पन्नानि नामानीत्यस्मिन्पक्षे नाम्नः प्रतिपदोक्तस्य सम्भवाद्वाक्यविधिकस्य न ग्रहणमिति। व्युत्पत्तिपक्षस्तु इह नाऽऽश्रितः।

‘ रोलुप्यरि ’। २। १। ७५ ॥ अहरधीते इति “ कालाध्वनो० ” द्वितीया। अहः काम्यतीति ‘रोः काम्ये” इति नियमात् प्रत्यये ” इत्यनेन न सकारः। हे दीर्घाऽहोऽत्र, अत्र वाक्ये विभक्तिर्लुप्तास्ति तत्कथ रो न भवति? सत्यं, लुपीति प्रत्यासत्त्या व्याख्येयम्। पदपक्षया लुप् पदत्वमपि यदि तदपेक्षया भवति। अत्र तु वाक्य विभक्त्यपेक्षया लुप्, भाषाद्विभक्त्यपेक्षया तु पदत्वम्। वाक्यविभक्त्यपेक्षयैव पदत्वमपि न वाच्यम् द्वयेम्योऽसये ” इति प्रतिपदात्। रथन्तरमिति–रथं रवस्थं तरत्यतिक्रमति भृतञ्जि ” इति खः, सामविशेषः। यावतमिति कर्मणि क्तः।

‘ धुटस्तृतीयः ’। २। १। ७६ ॥ अभिमरिति अत्र संज्ञाशब्दत्वात् “ नाम्नः प्रागम् ” इति न भवति। मध्यावधिकयोरिति रः पदान्ते ” इत्यादिलक्षणेनाऽन्त्य

१ २-१-८२। २ ३-१-११६। ३ उणा ८७४। ४ ५-१-११५। ५ अ १ २-४२। ६ २-१-७। ७ २-१-६। ८ १-३-२५। ९ ५-१-११२। १० २-१-८६। ११ [illegible] २-१-९।

योरित्यर्थः। दुःखयतर्दुःखयतेर्वेति सुखदुःखाणित्यत्र दुःखधातुर्विसर्गोन्मिश्रो मतान्तरेण जिह्वामूलीयान्वितश्च पठ्यते । संयोगान्तलोप इति–ननु व्यञ्जननैरन्तर्यं संयोगः, न च विसर्जनीयजिह्वामूलीययोर्व्यञ्जनसंज्ञाऽस्ति । तत्कथं "पेचस्य" इत्यन्तलोपः ? सत्यं, कस्याऽऽदिः कादिरिति व्युत्पत्त्या अं अः इत्येतयोर्व्यञ्जनत्वे तथा "अं अः ≍क ≍प०" इति सूत्रे अं अः इति साहचर्यात् ≍क इत्यस्याऽपि व्यञ्जनत्वे संयोगान्तलोपो भवति । कण्ठ्यत्वाच्च स्थान्यासन्नो भकारः । न तु टऽप इत्यनेन साहचर्यम् । कुतः अं अः टऽप इत्येकत्यकरणात् । अभरतीति–यद्यप्यत्र ह्रस्वस्य परेऽस्य स्थाने तृतीयस्याऽप्राप्तिस्तथापि मावभरतीत्यादिषु प्राप्नोतीत्याह–विधानसामर्थ्यादिति ।

'गडदबादेश्चतुर्थान्तस्यैकस्वरस्यादेश्चतुर्थः स्ध्वोश्च प्रत्यये' । २ । १ । ७७ ॥ धातुरूपावयवस्येति, अत्र धातुरूपावयवस्येति विशेष्यम्, अस्य च समासद्वयं, पर्णधुडित्यादौ सिसाधयिषिते धातुरूपमाऽऽवयवश्च गुह इत्यादिः । अवयवभावयवमप्यपेक्ष्याऽभिधीयत इति पर्णगुह इत्यादिः, समुदायोऽवयवी । दुग्धिप् इत्यादौ तु साधयितुमिष्टे धातुरूपस्याऽवयव इति षष्ठीसमासः । धातुरूपं दुग्धिम् इत्यादि, तस्याऽवयवो दिम् इत्यादिः । समासद्वयेऽपि च कुण्डमुम्भति कुम्बोप् इति निरस्तम्, नहि कुम्बोप् इत्यस्य समुदायस्य मध्ये बोप् इति धातुरूपोऽवयवो नाऽपि धातुरूपस्याऽवयव इति आदिचतुर्थस्याभावः । यद्वा धातुरूपस्याऽवयव इत्येवं षष्ठीसमास एव क्रियते, एवं च क्रियमाणे दुग्धिप् इत्यादीनि आद्यन्तवदेकस्मिन्निति न्यायनिरपेक्षाणि सिध्यन्ति । पर्णधुडित्यादीनि तु आद्यन्तवदेकस्मिन्निति न्यायेन । न्यधूढ्वमिति–अयतन्या ध्वमि, सकि, "हुहदिह०" इति तस्य लुकि, अटि हत्वे धत्वे "तवर्गस्य०" इति धस्य ढत्वे, "ढस्तड्डे" इति ढलोपे रूपमिदम् । धर्मविधित्वेनेति–धर्मे सकाररूपे परतो विधिः । सिज्लुकि न भवतीति–ननु सिज्लोपात् पूर्वमेव किमिति नाऽऽदिचतुर्थत्वम् ? नैवम्, परस्मिन् लोपरूपे कार्ये विधेये आदिचतुर्थस्यास्याऽसदधिकारनिर्दिष्टत्वेनाऽसत्त्वात् । प्रत्यय इति किमिति–'ननु प्रत्ययाप्रत्यययोः प्रत्ययस्यैवेति' न्यायेन प्रत्यये एव भविष्यति किं प्रत्ययग्रहणेन ? सत्यम्, दधूष्वः दधूष्वहे इत्यत्र यदा उभयोः स्थाने इति न्यायेन ध्व इत्यस्य प्रकृतिप्रत्ययस्थाननिष्पन्नस्य प्रत्ययव्यपदेशः स्यात्तदा आदिचतुर्थत्वं भवेत् । सति तु प्रत्ययग्रहणे न्यायनिरपेक्षो यः प्रत्ययस्तस्मिन्नेव भवति नेतरस्मिन् प्रत्ययग्रहणसामर्थ्यात् ।

'धागस्तथोश्च' । २ । १ । ७८ ॥ नन्वत्र चकारकरणं किमर्थं स्ध्वोः पूर्वेणैव

१ २-१-८१ । २ १-१-१६ । ३ ४-१-७४ । ४ १-२-६ । ५ १-१-४२ ।

सिद्धत्वात् ? सत्यम्, यद्यपि " क्रियाव्यतिहारे " इत्यात्मनेपदं से व्यतिपास्से इति स्यात्; कृते च षकारे व्यतिषास्से इत्येव न स्याद्यतुर्थः 'सिद्धा छवे'ति न्यायात्।

'अघञ्यतुर्णास्तयोर्धः'। २। १। ७९॥ अघ इत्यत्र नञ् पर्युदासस्तेनाऽन्यस्मादपि धुड्धातोरेव। पूर्वसूत्रे निमित्तत्वेनोपादानात्, इह तयोस्त्विस्य पुनरुपादानं कार्यित्वार्थम्। चतुर्णामिति—ननु भवदधादित्यत्र चतुर्णान्त्यस्यस्यविकारोऽन्त्वित्यर्थः। अर्थवशादिति पञ्चम्यन्तं कृत्वा रूपाणि साधयिष्यन्ते किं चतुर्णामित्यनेन ? सत्यम्, क्लिष्टप्रतिपत्तिरियमिति सुखार्थम्। यद्यपि च्छन्तघपदेनैवेति, कृतस्य तु प्रथाव्यवधानाच्चतुर्णान्तत्वाभावात्। नामनिर्दिष्टे इति 'क्लिनन्ता धातुत्वं न त्यजन्तीति' न्यायादपि न भवत्यत्र इति भवनाच्छुड्धातोरेव परिग्रहात्।

'नाम्यन्तात् परोक्षाद्यतन्याशिषो धो ढः'। २। १। ८०॥ नामीति विशेषणाद्विशेषणे तदन्तविधिमानाभावादन्तत्त्व कृष्णाद्यन्तप्रहणं सुखार्थम्। रान्तादन्त्रि परोक्षा न सम्भवति, सटस्तु तस्तरिद्वे इत्यादि परेण विकल्प एव, तथाऽत्र छायाभावेऽपि नाम्यन्तादित्यत्र निर्दिष्टव्याख्यानं क्रियमाणं परत्वात् "ऋर्वो र्भुवीर्" इत्यनेन इणादेशे सत्यपि अदीढ्वमित्यादीनि सिध्यन्ति किन्तु अविढ्वं, अचिढ्वमित्यादीनि न सिध्यन्तीति ग्रहणमिति। तस्तेः परस्मैपदिनोऽपि कर्मण्यात्मनेपदं, अतीढ्वमित्यत्र "वर्णान्त्" इति सिचः कित्त्वम्, अविढ्वमित्यादौ "इर्म स्वाघ:" इत्यनेनेत्वं सिचः कित्त्वं च। इत्वविधानादेव गुणो न भविष्यति किं कित्त्वनति न वाच्य विधानस्य। अचिद्वेत्यादौ इत्वग्रहेण सिचो छुपि चरितार्थत्वादिति। अकृढ्वं, कृपीढ्वमित्यनयाः वर्णान्त्" इत्यनेन सिच् सीष्यमोः कित्त्वाद्गुणाभावः। अपगध्वमिति "धो धि वा" इति विकल्पेन सिचो लुप्प्रसङ्गेः पक्षे अपग्ढ्वमित्यत्राऽद्यतनीध्वमि सिचि, घाढ्ढ धकारस्य " घञः ध्वम् " इति कृते, "धाम्यन्तस्या " इत्यनेन सिचः पत्वे, ' ढस्ति-स्तृतीय " इति धस्य दत्वे; ' तवर्गस्य " इति ध्वमो धस्य दत्वे च सिद्धिः।

'हान्तस्याञ्जीढ्भ्यां वा'। २। १। ८१॥ जिटः स्वतन्त्रत्वादिन्त्तु प्रत्ययाधयवत्वेन प्रत्ययपरत्वाद्धातोर्नाम्यन्तत्वाभावे पूर्वेण न प्राप्नोतीत्यप्राप्ते विभाषेयम्।

'हो धुट्पदान्ते'। २। १। ८२॥ मधुलिडावित्ति—यदा 'गतिकारक०' इति न्यायान्मधुशब्दस्य लिह इत्यनेनाऽविभक्त्यन्तेन समासस्तदाऽन्तर्वर्तिविभक्त्यभावात् पदत्वप्राप्तिरेव नाऽस्ति। यदाऽपि लीढ इति कृत्वा मधुनो लिहाविति निमक्त्यन्तेन

१ ३-३-२३। २ ४-४-११६। ३ ४-३-२६। ४ ४-३-४१। ५ ४-३-४२। ६ २-१-४६। ७ २-१-१५। १८ १-१-२६। ९ १-१-६।

समासस्तदाऽपि " ईस्यच्चोऽसये " इति पदत्वाभाव इत्युभयथाऽप्यपदत्व ङिद् इत्य स्येति । औयवदिति-ह्रित्वे स्थानित्वादिति-ननु कथमत्र स्थानित्वम् । अकारेण सह केवि द्विर्वचने कर्तव्ये पूर्वविधित्वाभावात् ? सत्यम्, निमित्तापेक्षयाऽपीह प्राग्वि धिरिष्यते । यद्वा इत् इत्यनयोः स्थानित्वमस्त्येव । अवयवयोश्च समुदायोपचारात् इ त् इत्यस्याऽपि स्वरादेशः स्थान्यन्तस्य प्राग्विधित्वमिति । यदि निमित्तापेक्षया प्राग्विधिरिष्यते, तर्हि नयनमित्यत्र स्वरादयस्य गुणस्य स्थानित्वेऽप्यादेशो न प्राप्नोति ? सत्यम्, निमित्तापेक्षया प्राग्विधित्वं प्रायिकमिति ।

' म्वादेर्नामिर्दीर्घः ' । २ । १ । ८३ ॥ यदि म्वादेरित्यस्य दादरिति समानाधिकरण विशेषणं भवेत् तदाऽदुग्धेत्यादयोऽडागमे कृत दादित्वाभावाच सिध्येयुरिति म्वादेरित्यस्य दादेरिति व्यधिकरणं विशेषणं व्याख्यातम् । नन्वत्र सर्वेष्वपि प्रयोगेषु यस्य यः क्रियते ततो य एव क्रियतां, किं यकारेणेति ? सत्यम्, गकारे क्रियमाणे चतुर्थान्तत्वाभावादधोगित्यादौ " गडदबा० " इत्यादिचतुर्थत्वं न स्यात् ।

' मुहद्रुहष्णुहष्णिहो वा ' । २ । १ । ८४ ॥ षेलस्निह्-षेल स्निह्यति स्निह्यतीत्यर्थः । सेचनार्थत्वं त्वस्य " स्वस्नेहना० " इति सूत्रे स्निह्यतेऽन्नेनेति स्नेहनमुदकादीति दर्शनाद्विज्ञायत इति । ननु किं मुहादयः स्वरूपेणोपादीयन्ते मुहादेरित्येवोच्यताम् ? न चैव कृतेऽधिकानां प्रसङ्गस्तदनन्तरं हस्करणात्, तर्हि पुणादिष मुहादिपरिसमाप्त्यर्थमपि भविष्यतीत्याह-मुहादरिति ।

' नहाहोर्धतौ ' । २ । १ । ८५ ॥ मूस्थानस्येति-अन्यस्याऽसम्भवात्, आरधेति-नन्वाहेरपि धकारे " अघोषे प्रथम० " इति तकारे कृते आरथेति सिध्यतीत्युभयोरपि धकार एव क्रियतां किं तकारकरणेन ? न च सिवस्यमुविधानादेव धत्व न भविष्यति, अन्यथा सिवो धत्वमेव विदध्यादिति वाच्यम्, यतो लाघवार्थं तद्भवेत्, अन्यथा ' शृगः पञ्चान्तं० " इत्यत्र सिवो ध इति सूत्रान्तरे कृते गौरवं स्यात्तस्मात् तक धत्वनिवृत्त्यर्थमिति ।

' भजः कगम् ' । २ । १ । ८६ ॥ चुट्पदान्त इत्यस्य चजाभ्यां कगाभ्यां च प्रत्येकमभिसम्बन्धाद्यथासंख्याभावः, प्रत्येकमभिसम्बन्धश्च " भ्रागिमात् ", ' स्थादि विभक्तिः " इति सूत्रनिर्दिष्टकत्वभतकपञ्चापकात् । ' भार्ग्यापाप्य० " इति सूत्रे भ्रस्ज् इति निर्देशात्, " रागाद्दो रक्त " इति रक्तनिर्देशाच यथासंख्याभावः । किञ्च यदि

१ १-१-१५ । २ २-१-७७ । ३ ५-४-६५ । ४ १-२-५ । ५ ४-२-११६ । ६ २-१-४८ । ७ १-१-११ । ८ ५-१-२४ । ९ ६-२-१ ।

धुट्पदान्त इत्यनेन सह यथासंख्यमभिप्रेत स्यात्तदा “ऋत्विग्०” इत्यधिकारे ग्रहणं कृत्वा मस्त सिद्ध्यादिति । यथाऽत्र सूत्रे किमर्थमादश्रुत्यविधान यावता क्विधानं गविधान वा क्रियतां, यथालक्ष्यं कस्य गत्वे गस्य कत्वे च समवायसिद्धेः । सत्यम्, मामावे लघ्वादयः कामावे पकारादयो न सिध्येयुरिति कग्रहणम् ।

‘यजसृजमृजराजभ्राजभ्रस्जव्रश्चपरिव्राजः शः षः’ । २ । १ । ८७ ॥ क्विरेव धुडिति–“वेर्महादिभ्यः” इति नियमात् क्वौ इडभाव इत्यर्थः । ननु यजसृजन्त्वयोरनयोरन्योऽपि विनाविधुट् सम्भवति तत्कथं क्विरेव धुडिति ? सत्यम्, यजसृजन्त्वयोरनयोर्धातुपारायणिकानामेव मते प्रयोग इष्यते न वैयाकरणानामिति क्विरेवेत्युक्तम् । साहचर्यार्थमिति–न चाऽऽत्मनेपदानित्यत्वज्ञापनार्थं पुनः पाठ इति वाच्यं, तदा चात्मनेपदित्वेन पुनः पठेत । नाऽप्येकस्य मृजुप्रसादपूर्वकस्यान्यस्य नेति वाच्यं यतः मृजुवन्धादपि ‘ सर्वरूपो० ” इति सूत्रादुत्सर्गः प्रवर्तिष्यते तस्मादेकेनाऽपि धातुनाऽर्थभेदेन प्रयोगद्वयं सिध्यति परं साहचर्याय द्विः पाठ इति । कथमसुमिति–नञ्पूर्वस्य सृजेः क्विबन्तस्य यत्वेन माव्यं तत्कथ गत्वमित्याह–औणादिकत्वेति–मस्यत इति न सृज्यत इति वा ‘ खौमिषुषि० ” इति क्विदपि बाहुलकादेकत्राऽस्य शत्वेऽन्यत्र सकारादकारयोर्लोपे चाऽसुमृजम्प्रसिद्धिः । पथिमाश्छानिति–पन्थानं पृच्छति “ स्पृश० ” इति क्विप् धुटि पदान्ते च पूर्वाभ्यमोरादरणानि स्यातामौ तु विशषः । स्वमते तु पथिप्राशावित्यादेव भवति ।

‘संयोगस्यादौ स्कोर्लुक्’ । २ । १ । ८८ ॥ संयुज्यन्ते वर्णा अत्रेति व्यञ्जनात् यति संयोगः । स च वैयाकरणसम्प्रदायात् व्यञ्जननैरन्तर्यमुच्यते । ‘दन्त्यापसिद्धमिति’ न्यायाधाराभ्यस्य तुमर्थितः दन्त्यस्य तु तस्याऽभावगित्यत्र कत्र मध्ये किन्तु पठितस्य मतक्षेप इति । समुदायस्यैव लोपं सिध्यादिति–कया युक्त्या संयोगेति प्रथम, पदस्येति द्वितीयं अन्ते चेति तृतीय सत्र कुर्यात् । तत्राऽऽद्यस्यार्थः–धुटि प्रत्यये संयोगादिस्थयोः सकारककारयोर्लुग् भवति । द्वितीयस्यार्थः पदान्ते वर्तमानस्य सकारककारादिसंयोगस्य सकलस्याऽपि लुक् । तृतीयस्यार्थः–पदस्येत्यत पदान्ते इत्यनुवर्तते । ततः पदान्ते संयोगसम्बन्धिनोऽन्त्यस्य लुग्भवतीत्यकरणात्तत्र स्थानित्वं न भवति । अन्ये तु अस्टिमिति–तन्मतस्वमतयोः “ न वेदमं ” इत्यत्र विशेषः, तन्मते अविद्विपत, स्वमते तु अद्विटिस्व इति । पृथक्स्यातेति–पृथक्पश्याः कान्तोऽन्ययम् । न तु “ खौमिषुषि ” इत्यनेनाऽप्यप्रत्ययान्तो अन्तः । तदा “ पेचा ”

१ ६-१-६९ । २ ४-४-११ । ३ ५-१-१६ । ४ पृष्ठ ६०४ । ५ ५-२-६१ । ६ ४-१-७ ७ पृष्ठ ६०४ । ८ २-१-६६ ।

इति गतस्य परेऽसत्त्वात्पदादेशस्य कत्वस्याऽप्यसत्त्वे सूत्रविफलता स्यात्। मांसपिप-किति-नन्वत्र ‘स्वरस्य०” इति स्थानिवद्भावेन पदान्ते संयोगस्याऽभावात् ककार लोपो न प्राप्नोति। न चाऽस्वविधौ स्थानिवत्त्वनिषेध इति वाच्यम्। मस्कुगिति वचनात्? सत्यम्, मस्कुकीति नञ्निर्दिष्टस्याऽनित्यत्वेन स्थानित्वाभावात् प्राप्ति-र्विघतः; यथा मधुगित्यत्र।

‘पदस्य’।२।१।८९॥ पदान्ते वर्तमानस्येति-पदस्य विशेष्यस्य “विशेषणमन्तः” इति परिभाषया पदान्ते इति व्याख्यातम्। भूयानिति-अपदसंज्ञकेऽपि तद्धिते “अस्वयम्भुवोऽव्” न, “भूर्लुक् च” इत्यत्रोकारप्रश्लेषात्। विधान भूम स्यत्र पदसंज्ञक परिगायम् सामर्थ्याच्च भवतीति, अन्यथा प्रक्रियालाघवार्थं अकार मेव विदध्यादित्यर्थः।

‘रात्सः’।२।१।९०॥ रात्परस्य सस्यैवेति-पचम अपिमाः मवाग इत्यादि विमर्शेऽर्जागर्तेम स्वस्त्या दिपि, “ईवःसिति” इति द्वित्वे अत्वे “पर्भे” इतीत्वे, “द्वितीय०” इति घत्वे, गुणे च नियमाल्लोपो न प्राप्नोतीति। नैवम् प्रकरणात् पूर्वसूत्रविहितस्यैवाऽयं नियमो न व्यञ्जनादेरित्युत्तरसूत्रविहितस्य, यद्वा सूत्रे द्वितकारनिर्देशो ज्ञातव्यः। द्वितकारनिर्देशेऽपि न कोऽप्युच्चारणकृतो भेदोऽस्ति तदयं रात्परस्य तकारसकारस्यैव लुग् नाऽन्यस्येति सूत्रार्थः सम्पन्नः। यद्येवं तर्हि कीर्त्यतेः क्विपि कीरिति प्राप्नोति। अत्र भाष्य-लोक प्रयुक्तानामिदमन्वाख्यानं लोके च कीर्त् इत्येव दृश्यते न कीरिति। अवधा इति-नन्वत्र “सेः स्ध्वां०” इति सेर्लुकि रुत्वे च कर्तव्ये “गडदबा०” इति घत्वस्याऽसत्त्वात् कृते रुत्वे चतुर्थान्तत्वाभावात् कथं घकारः? सत्यम्, ‘असिद्धं बहिरङ्ग’ इति भविष्यति।

‘नाम्नो नोऽनह्नः’।२।१।९१॥ अत्र रफाविति, नन्वत्र विशेषविधानात् ‘रो लुप्यरि” इति ‘अह्नः” इति च रेफरुत्वे एव भविष्यतः किमहन्प्रतिषेधन स्यात्-असत्त्वादिति। न चैवं, तयोरनवकाशत्वे स्यात्-सावकाशमिति। रफरुत्वलक्षण। सम्बोधन इति-“नाऽऽमन्त्र्ये” इति नलोपप्रतिषेधात्। अहमहितमिति-लक्षणप्रति-पदोक्तयोरिति प्रतिपदोक्तस्यैवाऽहन्शब्दस्य निषेध इत्यत्र प्राप्तिः। परं नाम्न इति व्याख्यया निषिध्यते। वृत्रहभ्यामिति-धातुमात्राभिधत्वेन तान्तोऽन्तरङ्गो धातस्या ऽपपदसमासभलोपो बहिरङ्गः।

---

१ ७-४-३१ । २ ७-४-११२ । ३ ७-४-७ । ३ क ७-४-४३ । ४ ४-१-१३ । ५ ४-१-५८ । ६ ४-१-४९ । ७ ४-१-७६ । ८ २-१-७७ । ९ २-१-७५ । १० २-१-७४ । ११ २-१-९२ ।

' नाऽऽमन्त्र्ये ' । २ । १ । ९२ ॥ आमन्त्र्य इत्येकवचनात्पत्रैक एवाऽऽमन्त्र्य स्तत्रैवाऽनेन नलोपनिषेधो यत्र बहवस्तत्र न, यथा–हे पद्म पुरुषाः । इत्यादौ ननु राजन्नित्यादौ सिलुकः स्थानिवद्भावेन । "अधांतुविभक्ति॰ " इत्यनेन नामसंज्ञाभावे पूर्वेण प्राप्तिरेव न किं प्रतिषेधेनेत्याह–एतदेवेति । न च चान्य सिलुकः स्थानित्वेन " नामसिद् " इति पदत्वं प्राप्नोति, तस्मिंश्च सति नलुग्भविष्यतीति; यतः " स्वौजी-वाऽजर्मविधौ " अत्र तु व्यञ्जनलक्षणो वर्णविधिरिति स्थानित्वं न प्रवर्तत इति ।

' मावर्णान्तोपान्त्यापञ्चमवर्गान्मतोर्मो वः ' । २ । १ । ९४ ॥ अत्र मकारावर्णयोरन्तोपान्ताभ्यां सह यथासंख्य न, ' मोर्म्यादिभ्यः " इति निषेधस्य व्यर्थत्वात्, यत ऊर्मिमानित्यत्र मान्तत्वस्य यवमानित्यत्राऽवर्णोपान्तत्वस्याऽभावात् । मोमवद् गौरिमतोरिति निर्देशाद्वा । बहिरङ्गलक्षणत्वादिति–तद्धितापेक्षत्वेन वृद्धिर्बहि रङ्गा तदनपेक्षत्वं वत्वमन्तरङ्गमिति ।

' नाम्नि ' । २ । १ । ९५ ॥ नाम द्विविधं, इन्द्रवादि निरूढलक्षणार्कं, " अघा तुविभक्ति॰ " इति शास्त्रीयं च । तत्र प्रत्यासत्तत्वाच्छास्त्रीयस्यैव ग्रहणे प्राप्ते नामाधि-कारेणैव सदवस्य लाभाभाम्नीत्यतिरिच्यमानमधिकारपरिग्रहाय भवत् लौकिकमेव ज्ञापयतीत्याह–संज्ञायामिति । आसन्दीवानिति–आसं आसिक्रियां नन्दति अपि पृषोद रादित्वात् । आसर्णतोः " कुमुदा " इति नाऽऽसन्दी येत्रासन सोऽत्राऽस्ति मध्यादिः ।

' चर्मण्वत्यष्ठीवच्चक्रीवत्कक्षीवद्रुमण्वत् ' । २ । १ । ९६ ॥ कक्षाबन्ध स्यति–कक्ष मता, कक्षाय हिता वा, कक्ष साधुर्वा, " दिगादिदेहांशाद्यः " इत्यादिभिर्ये कक्ष्या । लवणस्यति–लुनाति चैरत्वं नन्द्यादनः । अत एव गणपाठाल्लवणम् । उद न्वान्–उदन् मावसामर्थ्यादलोपो न अन्यथाहमावो निपात्यत ।

' राजन्वान् सुराज्ञि ' । २ । १ । ९८ । राजन्वान् सुराज्ञीति–शोभनन्नृपवो वाच्य । यदा तु राजन्नमन्दन चन्द्रोऽभिधीयत तदा राजवान् इत्व इत्येव । निपात-नस्यतद्विषयत्वात् ।

' नोम्पादिभ्यः ' २ । १ । ९९ ॥ हरिममानिति–हरिमरिन्द्रः प्रहरण-विशेषो वा मोऽस्याऽस्ति । तिमिमानिति– " कमितिमि॰ " इति द्वयोरपि निपातनम्, गर्भ पण्ड तदस्याऽस्ति । ध्वजिमानिति–अध्वानं जयति किप् पृषोदरादिः । ककुद्मा-निति–ककुदपाठुतमङ्गुत्त्वस्य गण द्विदकारपाठान्मतो नाऽनुनासिकः । महिष्मा

---

१ १–१–२७ । २ १–१–२१ । ३ ०–४–१ ९ । ४ २–१–११ । ५ ६–२–११ । ६ ६–२ ११४ । ७ उणा ६१३ ।

निति-" मेडक्पुर० " इति मतौ, ' असिद्ध वहिरङ्ग 'मित्यकारस्याऽसिद्धत्वान्न पुट स्तृतीयः । न च वाच्य " स्वरस्य परे० " इति स्थानित्वे तस्याऽसिद्धिर्वो " न सम्धि० " इति निषेधात्, क्षान्तिमतीप्रभृति च मधुमतीं पावस्तर्वेषु " नद्यां मतुः " ग्रिम्बीमती " डीनीबेम्थि० ", " गौरादि० " ङी । मधुमती-मम्भावमतुः, हनूमानिति-" अन्ते विपदि० " इति दीर्घः ।

' मासनिशासनस्य शसादौ लुग्वा ' । २ । १ । १०० ॥ स्यादाविति, स्यादन्यः शसादिर्न सम्भवतीति स्यादावुदाहारि । अथ ' सर्वैकार्थाद० " इति शसम्भवस्तदाऽऽदिशब्दस्याऽकठार्दानामसम्भवनाऽन्वयस्यम् । यद्वा मण्डूकप्लुतन्याये न स्यादिरनुवर्तनीयमिति । मासिशब्दस्य व्यवस्थावाचित्वाद्वा स्यादिरत्र लभ्यते । मासशब्दस्य भ्यामि अननाऽन्त्यलोपऽसिद्धे वहिरङ्गमिति अकारस्थानित्वेन " सो रुः " रुत्वाभाव, " पुटस्तृतीयः " इति दत्व तु न्यायानित्यत्वात् माद्भ्यामिति मन्यत माष्यकृत् । दुर्गस्तु मास्भ्यामिति । निजभ्यामिति-अत्र निशशब्द सत्यपि निशाग्रहण निज्भ्यामित्यस्य सिद्धयर्थं, निशशब्दस्य हि भ्यामि निड्भ्यामित्येव भवति । क्विपन्त स्याद्धातुत्व ' यजसृज० " इत्यादिना षत्वप्राप्तः ।

' दन्तपादनासिकाहृदयासृग्यूषोदकदोषकृच्छकृतो दत्पन्नसहृदसन्यूषन्नुदन्दोषन्यकन्शकन् वा ' । २ । १ । १०१ ॥ पादपद्शब्दाभ्यामपि पदा पादनेत्यादि सिद्ध पर पद्शब्दमरणत्राप्यत पादशब्दस्य स्थनकार्यस्यापि पदा पादनेत्यादिसिद्ध्यर्थं पादशब्दोपादानम् । हृदयहृद्भ्यां सिद्धे हृदयोपादान शसौ विशेषार्थं, हृदः हृदयान् शसौन् । दृष्छब्दस्तु शपिवचनो नाऽस्ति ।

' यस्वरे पादः पदणिक्यघुटि ' । २ । १ । १०२ ॥ पादन्तस्य नाम्न इति-पूर्वसूत्र नाम्न इत्यपिषकारोऽपि नाऽध्याहारि धातोस्तत्राऽसम्भवात् । अत्र तु धातु सम्भवे नाम्न इति विशेषण चक्र । न पति-अनर्थकत्वान् सर्वस्य पादन्तस्य प्राप्नो तीत्याह-निर्दिश्यमानस्यति । त्रिपदी गायत्रि " वो पादः " इति ङीः, द्विपदिकामिति-' संख्यासमाहारे च० " इति मः । संख्यादरित्यकस्य अतोपन, ननु ' ऐकार्थ्यस्य " इति सिद्धऽकस्मवियोग किमलोपन ? सत्यम् । स्थानित्वामावायमन्यथा स्वरस्य० " इति स्थानित्व पाच्छब्दामावान्न स्यात् पदादेश । पादमाचष्ट पादयतीति-अत्र व्यञ्जनान्तः पाच्छब्दो लिरयत मस्तर तु णिचि अल्लोप " स्वरस्य० " इति स्थानित्वे

१ ६-१-७४ । २ ७-४-११ । ३ ७-४-१११ । ४ ६-१-२ । ५ अष्ट ११५ । ६ ३-१-७८ । ७ ७-२-१५१ । ८ १-१-७१ । ९ १-१-७६ । १० १-१-८० । ११ १-४-६ । १२ १-१-११ । १३ ७-४-६४ । १४ ७-४-११ ।

पाच्छब्दाभावात् प्रसङ्गविकलत्वं स्यात् । तर्हि पावमाचष्ट इति वाक्ये पदः पत्भवति यद्दर्शितं तत्कथं ? उच्यते–प्रत्यासत्तिन्यायादस्मिन् प्रत्ययेऽकारलोपश्चास्मिन् पथाऽऽदेशोऽपि प्राप्नोति । अत्र तु पावकारलोपः शसि स्यादतः । " नैकस्वरस्य " इत्यन्त्यस्वरादिलोपाभावश्च ।

' उदच उदीच् ' । २ । १ । १०३ ॥ उदयतीति–ननु धिवर्जनं किमर्थम् ? न च वाच्यं णिवर्जनाभावे उदीचादेशः स्यात्, यतो भवतु उदीचादेशस्तथापि " त्र्यन्त्यस्वरादेः " इति लोपे उदयतीति भविष्यति । अत्रोच्यते, विशेषविहितत्वात्तलुकं बाधित्वा प्रथममेवाऽऽदेशः स्यात्, तथा च ' सकृद्गते स्पर्धे ' इति न्यायात् पश्चादपि न ।

' अच प्रागदीर्घश्च ' । २ । १ । १०४ ॥ अथ इत्यदमञ्चतीति क्विपि टादावनन्तरपूर्वस्वराभावे दीर्घत्वाभावादेकयोगनिर्दिष्टत्वादादेशस्याऽप्यभावात् कथं रूपं स्यादिति सिध्यतीत्याह–अन्वाचयशिष्टत्वादिति । अथ व्यवहितस्याऽपि कथं न भवति ? सत्यम्, प्राक्शब्दस्याऽनन्तरार्थत्वादेव एव पूर्वशब्दमपास्य प्राक्शब्दोपादानमनन्तरार्थम् । ननु चशब्दाच्चयनं मीलनमन्वाचयस्तेन शिष्टोऽन्वाचयशिष्टः । दीर्घो न भवतीति–स्थान्यासन्नत्वात् लकारः । दध्ययतीति–परत्वात् " समानानां " इति दीर्घं बाधित्वा गुणः ।

' कसुष्मतौ च ' । २ । १ । १०५ ॥ पेचुष्य इति–' आगमा यद्गुणीभूता ' इति, इड्गमहितस्य कस उष्, उषिति षकारस्य " नाम्यन्तस्था " इति सिद्धे प्रक्रियालाघवार्थं षकारकरणम् ।

' श्वन्युवन्मघोनो ङीस्याद्यघुट्स्वरे व उः ' । २ । १ । १०६ ॥ ङीग्रहणात् स्याद्यघुट्स्वरे लब्धे स्यादिग्रहणमघुट्स्वरस्याऽप्रत्ययस्याशङ्कानिरासार्थम् । ग्रहादि कथम् ? ङीप्रत्ययोऽघुट्स्वरोऽपि प्रत्यय एवेति नाऽऽशङ्कनीय, ङीग्रहणात् । अथाऽघुडित्यत्र पर्युदासात् स्यादिर्लभ्य(स्य)त एव, प्रसज्यवृत्तिनिराकरणे हेतोरभावात् । प्रियश्वनी–स्त्रियां तु बहुव्रीहौ " नोपान्त्यवतः " इति ङ्यापामपि ङीप्रतिषेधः । उपान्त्यवता च श्वन्शब्दस्य " न वमन्त " इति प्रतिपादितयोस्तत्रननोक्तविधानात् । यत्तु प्रियश्वनीति दृश्यते । तत्प्रथममेव वृथा कर्मधारय । यौवनमिति युवन् इदमिति कार्ये विकार तु एकस्वरात् मयट् स्यात् । अतिश्वानीति–अतिक्रान्ता श्वा

१ ७-४ ४४ । २ ७-४-४१ । ३ १-२-१ । ४ २-१-१५ । ५ १-४-११ ।
६ २-१-१११ । ७ ६-२-४८ ।

पैरिति वाक्यम् । तत्पुरुषेति " गोष्ठातेः शुनः " इति समासान्तः स्यात् । गोष्ठश्वेनेति-गोष्ठेऽश्व सप्तमी शौण्डाद्यैः " इति समासः, " गोष्ठातेः० " इट् । नन्वत्र समासान्तः समासस्याऽवयवो भवति ततश्चाऽनेनाऽधुड्स्वरादिप्रत्ययस्य व्यवधानात् प्राप्तिरेव नाऽस्तीति किमित्युक्तं ? नकारान्तनिर्देशादिति । अत्रोच्यते, भाष्यकारवचनाद्यथा समासान्तः समासावयवो भवत्येवमुत्तरपदावयवोऽपीष्यते । ततश्च यन्ग्रहणेन तदव-यवत्वात्तस्याऽपि ग्रहणमिति, अधुड्स्वरादिप्रत्ययस्य न व्यवधानमतो यदुक्तं नकारा-न्तनिर्देशादिति तत्साध्वेव । मघवत इति-मघो ज्ञानमस्याऽस्ति मघा वाऽऽरावकाः सन्त्यस्य ' स्वौपो वहुलं० " इति ह्रस्वः । मातरिश्वनेति-मां तरति विप्, मातरि अन्तरिक्षे श्वयति मातरिश्वन् इति साधुः । अत एव निर्देशात् सप्तम्यलुप् ।

'लुगातोऽनापः' । २ । १ । १०७ ॥ क्वाटाबन्तयोः केचिदतीत्व केचित् त्वीत्व-पेच्छन्ति । तत्र तीत्वेऽनाप इति वचनादनेन लुगभावे क्वापाटाया इत्येव भवति, अत्वीत्वे त्वनेन लुकि क्वः टू इत्याद्येव । शाहे वहीति-ओहाक् गतौ हाकश्च जिहीते शीतकाले कर्तव्यतया प्राप्नोति विप् ।

' ई को वा ' । २ । १ । १०९ । क्विर्विभक्तिस्तत्साहचर्यादीकारोऽपि विभक्तिरूप एव ग्राह्यस्तेन औकारस्थानिनि ईकारेऽनेन विकल्पः । ङीप्रत्ययेषु राज्ञीत्यादिषु पूर्वेण नित्यमेव । निरनुबन्धग्रहणाद् वा ।

' पादिहन्-धृतराज्ञोऽणि ' । २ । १ । ११० ॥ तास्य इति- 'सेर्नाम्य०" इत्य-नेन ककारापाप्तस्य बाधकः "स्त्रियादेरण्" । सामनः-द्वयोरपि देवदत्तार्थे वेत्यधीते वेत्यर्थे इदमर्थे वाऽण्, " षेषि " इत्यनो लोपाभावः । ताक्ष्ण्यः अत्र-" कुर्वादिभ्यो ञ्यः "।

' न वमन्तसयोगात् ' । २ । १ । १११ ॥ अत्र वकारमकारयोः संयोगमपि क्षेपयस्तेन " विशेषणमन्तः " इति तदन्तत्वे लब्धेऽन्तग्रहणं स्पष्टार्थम्, अन्यथा व्मसं-योगादिति समस्तनिर्देशेऽनयोरेव संयोगादित्याशङ्का स्यात् । वमः संयोगादिति व्यस्तनिर्देशेऽपि वकारमकाराभ्यां परो यः संयोगस्तस्मादित्यपि प्रतीयेतेति न्यासकारः।

' हनो ह्नो घ्नः ' । २ । १ । ११२ ॥ प्लीहन इत्यादिषु, हन इति हन्तेरनुकर णात् 'अर्थवद्ग्रहण' इति न्यायाद्वाऽन्यस्य न भवति ।

' लुगस्यादेत्यपदे ' । २ । १ । ११३ ॥ अपद इति, अदन्तोर्विशेषणम्, दध्नाग्रमिति अत्र " ह्रस्वीभ्योऽसमे " इति प्रतिषेधादग्रे इत्यस्य पदत्वाभावात् कथ

१ ७-१-११ । २ १-१-८८ । ३ १-४-११ । ४ ६-२-१ १ । ५ ७-४-५१ । ६ ६-१-१ । ७ ७-४-११३ । ८ १-१-२५ ।

नाऽकारस्लोपः ? सत्यम्, सावधानमप्याख्यानात् अपदे पदेति, अत्र तु इतो पूर्वं पदसमासीदिति । तर्हि प्रायश्चमित्यत्र 'गति कारकेति' न्यायादविभक्त्यन्तेनाऽप्यनन्त नेन समासे प्राप्नोति, सत्यम्; अपद इत्युत्तरपदमपि गृह्यते । " ते लुग् वा " इति उत्तरपदस्य लोपादिति । यथा " वेदूतोऽनव्यय० " इत्यत्र ।

' स्त्रियामन्त्यस्वरादेः ' । २ । १ । ११४ ॥ सति यस्मिन् यस्मात् पूर्वमस्ति परं नाऽस्ति सोऽन्त्यस्तत्र भवोऽन्त्यः । मुनी अत्र सर्वत्र " इवर्णादेरस्वे " इति प्राप्ते परत्वा-दनवकाशत्वाच्च विसर्गस्य लुगेव । उपसरम इति-उपसरदेशजाता । मन्दुरजः-मन्दुरे मन्दुरायां वा जातः, " ङ्यापो बहुलं नाम्नि " इति ह्रस्वः ।

' अवर्णादश्नोन्तो वाऽतुरीङ्यो: ' । २ । १ । ११५ ॥ अवर्णादिति-ननु तुदन्ती मान्तीत्यादौ ईङ्योरनपेक्षत्वेन वर्णमात्राश्रयत्वेन चाऽन्तरङ्गत्वात् ' लुगस्या देत्यपदे " इति ' समानानां " इति च अकारलोपदीर्घत्वयोः कृतयोरवर्णात् परत्वं शतृप्रत्ययस्य नाऽस्तीति तत्कथमीकारावर्णशतृप्रत्ययत्वीभावापेक्षत्वेन बहिरङ्गोऽन्त इत्यादेशो भूतपूर्वत्वमेति, 'वार्णात् प्राकृतं बलीय' इति तु नेहोपतिष्ठते भिन्नकालत्वात् । तथाहि-ईङ्योः सन्नाधेऽन्तादेशः प्राप्नोति लोपदीर्घौ तु ततः प्रागेव । यत्र हि वार्ण प्राकृतयोर्युगपत्प्राप्तिः कारक इत्यादौ तत्रैवमुपतिष्ठत इति ।

' श्विव औः सौ ' । २ । १ । ११७ ॥ द्यौरिति, अत्र " उः पदान्ते० " इति प्राप्तोऽप्यचरितार्थत्वात् सावित्ति विशेषविधानाच्च औरेवाऽनेन प्रवर्तते, न तूकारः; मधद्युरिति-एकदेशमिति प्राप्तिः ।

'उः पदान्तेऽनूत्'। २ । १ । ११८ ॥ दिवाभयः अन्तर्वर्तिनीविभक्तिमाश्रित्य पदत्वेऽनेनोत्वे कथं दिवाभय इत्यादीत्यत आह-अकारागमे भविष्यतीति, अकारा-गमे चाऽकारागमकरणसामर्थ्यादिव उर्न । विभक्तेः पूर्वं वाऽकारागमे पदान्तत्वाभावा-देव वा । वृत्तिविषय इति-समासविषये प्रयुज्यते केवलस्तु न प्रयुज्यत इत्यर्थः ।

ग्रंथाग्रं संख्याज्ञात्वेति ।

इति श्रीसिद्धहेमचन्द्राभिधानशब्दानुशासने द्वितीयस्याऽध्या यस्य प्रथमपादः समाप्तः ।

मङ्गलमस्तु लेखकपाठकयोः ।



१ १-२-१ ८ । २ २-४-१८ । ३ १-२-२१ । ४ २-४-१६ । ५ २-१-११३ । ६ १-२-१ ।
७ परपरिभाषार्थे श्लोक ५ ।

' क्रियाहेतुः कारकम् ' । २ । २ । १ । क्रियायाः कारकमित्युक्ते क्रियायाः कर्तुर्मुख्यत्वात्तस्यैव कारकत्वं स्यात् । गौणमुख्ययोरिति न्यायात् । हेतुः कारकमित्युक्ते तु द्रव्यस्य मुख्यत्वात्तद्धेतोरेव कटं करोतीत्यादौ कारकं स्यान्न तु चैत्रो याती त्यादौ । कारकः शब्दः कर्तृमात्रपर्यायः । कर्त्रादीत्यत्र कर्तृशब्दस्तु कर्तृविशेषवचनत्वेन कर्त्रादिकारकसंज्ञमिति विशेषणविशेष्यभाव उपपन्न इति, अन्यथा वृक्षो वृक्षसंज्ञ इतिवदनुपपन्नः स्यादिति । तत्र द्रव्याणामिति द्रव्याणां सामर्थ्यं कारकमिति सम्बन्धः । द्रव्यस्य तु कारकत्वे प्रतिबन्धकमन्त्रादिसन्निधानासन्निधानाभ्यां दहनादेर्दाहादिक्रियोत्पत्त्यनुत्पत्ती न स्याताम् । तत्स्वरूपस्य सर्वदा विद्यमानत्वादुत्पत्तिरेव स्यात्, तस्माच्छक्तिरेव कारकमिति ध्येयः । चैत्रादेस्तु कारकत्वं शक्तिशक्तिमतोरभेदनयेन । स्वपराश्रयेति–अयमर्थः–यदी क्रिया सा च चैत्र आस्ते इति स्वाश्रिता, कटं करोतीति पराश्रिता; अन्योन्यमाश्लिष्यत इत्युभयाश्रिता । क्रियाकाल इति–क्रियायाः शक्तिं प्रति ज्ञापनकालस्तत्र क्रियाकाले समवहितसकलोपकरणे शक्तिरभिव्यज्यते–प्रकटीक्रियते अवगता भवति । अभिव्यज्यते इति कर्मकर्तरि कर्मणि वा यया क्रियया कर्त्र्या शक्तिः प्रकाश्यते प्रकटीक्रियते । अभिव्यनक्ति प्रकटीकरोति क्रियाकर्त्री शक्तिः सैवं विवक्ष्यते नान्यमभिव्यनक्ति किन्तु स्वयमेवाऽभिव्यज्यते शक्तिः । हेत्वादेरित्यत्राऽविद्यमानसम्बन्धस्य सहार्थस्य चाऽकारकत्वं तेन विद्ययोषित इत्यादौ " कर्मकं कृता " इति न समासः, बहूनामिदं वस्त्रमित्यादौ " षष्ठ्यस्याभी० " इति भ्रम् मा भूत् ।

' स्वतन्त्रः कर्ता ' २ । २ । २ । अत्र कारकत्वादेव स्वातन्त्र्ये लब्धे पुनः स्वतन्त्रश्रुतिर्नियमार्था तेन स्वातन्त्र्यमेव यस्य तस्य कर्तृसंज्ञा, न तु पारतन्त्र्यसहितस्वातन्त्र्ययुक्तस्य । अपरायत्ततयेति–प्राधान्यं च क्रियाहेतुभूतयाऽपरायत्ततया । यद्वा, सामानाधिकरण्यं प्राधान्येन किं रूपेणाऽपरायत्ततया । प्रेषितः करोति–प्रयोज्यावस्थायामपि स्वातन्त्र्यस्याऽहानेः कर्तृत्वम् " यः क्रियां कर्मकर्तृत्वा, कृत्वे मुख्यभावतः । अप्रयुक्तः प्रयुक्तो वा, स कर्ता नाम कारकम् " ॥ १ ॥ आत्मप्रधानः, यस्याऽगुणभावेन धातुना व्यापार उच्यते सर्वोऽसौ स्वतन्त्र इति, क्वचिद्व्योऽयम् । यत्रैव करणादीन्यप्रधानानि सन्ति, इन्धनाः स्थाल्यां काष्ठैरोदनं पचतीत्यादौ तत्रैव कर्तृसंज्ञेत्येवं न किन्तु तदभावेऽपि चैत्रोऽऽस्ते शेत इत्यादावपि ।

' कर्तुर्व्याप्यं कर्म ' । २ । २ । ३ ॥ कर्तुरित्यत्र प्रथमव्याख्याने व्याप्ये-

१ १-१-१४ । २ ७-१-१९ ।

ष्यस्य कृत्प्रत्ययान्तस्य योगे " कर्तृकर्मणोः कृति " इति कर्तरि षष्ठी, ननु यदा द्वैतीयी कर्म्याख्यानं कर्तुः कर्म व्याप्यमिति क्रियते, तदा कर्मणा योगे कर्तृशब्दात् केन सूत्रेण षष्ठी प्राप्नोति ? उच्यते कुच्छेमा उपादय इति कृत्वा कर्मशब्द औणादिकप्रत्ययान्तो-ऽपि कृदन्तस्तत्प्रत्ययोगे " कर्तरि " षष्ठी । विकार्यमिति–विकार्यते स्वभावोच्छेदेना ऽन्यथात्वं नम्यत इति । विकृत्य इति अन्यथा विकृतिमनुपगच्छतो यस्यस्यैव विकार्यत्वायोग्यः स्यात् । ग्रामासनुपगच्छतीति–तथाऽऽमासाऽयोग्यस्य परमनिःकृष्टपरमाण्वादेरिवाऽऽमास्यसंनिरहः स्यादिति व्याप्यस्याऽऽमासमनमवान्तरव्यापार इति । विषं भक्षयतीति–यदा भक्षणार्थमिति । चतुर्थ्यां प्राप्तप्रवृत्तिस्तथा उदको विमाम्यो उक्षमं परीक्षा चेति योतकराचार्यः । प्राप सम्प्रत्यय तदैवाऽनिष्टम् यदा तु राजनी तेन व्याप्यविकान्तेन वा मन्यते तदा इदमेव । गां दोग्धि पय इति–अन्तर्भूतण्यर्थाः सकर्मकाः सर्वे तेनाऽयमर्थो गौः कर्त्री पयः कर्म मुञ्चति, तां गां मोचयतीति । गां स्रावयति पय इति–" गतिबोधा० " इत्यत्र बहुवचनादन्येषामप्यणिकर्तुः कर्मत्वं, तेन गवादीनामपि कर्मत्वं युक्तम् । नाऽत्र नियमः प्रवर्तते । एतेऽपीदृशा अपि द्विकर्मका उच्यन्त इति । पौरवं गां भिक्षते, अस्ति राजा पुरुर्नाम, तदपत्यं 'पुरुमगेभ्य " इत्यणि पौरवोऽयं च याच्यमानो हृष्टो म्लानो वा भवतीति विकार्यं कर्म । भिक्षते कोऽर्थो याचनापूर्वकं गां दापयति वियोजयति चेत्यर्थः । ग्राममवरुणद्धीति–व्रजं सेवमानां सेवयतीत्यर्थः । पृच्छति कथापयति, वृक्षमवचिनोतीति–वृक्षः फलानि विमुञ्चे तं वियोजयतीत्यर्थः । अनुनयार्थ इति–तेन मिस्त्वर्थमध्ये पाणिग्रहाराऽनुनयार्थानां न ग्रहः । मिथिर्याञ्चायामेव वाचिस्त्वनयार्थं इति । जयति–मोचयति । कर्षति–वियोजयति, मथ्नाति वियोजयति, नयति प्रापयति, हरति वियोजयति प्रापयति वा, मुष्णाति कोऽर्थः ? स्वस्वामिकं सन्तमास्वस्वामिकं करोति । गृह्णाति–स्पाजयति । सक्तुन्धानोदनं पचति, तण्डुलान् विक्लेदयन् विकुर्वन्नोदनं करोतीत्यर्थो धातूनामनेकार्थत्वादिति ।

" वेनाऽपविद्धसलिलस्फुटनागसद्मा, देवासुरैरमृतमम्बुनिधिर्ममन्थ ।
व्यावर्तनैरहिपतेरयमाहिताङ्कः, खं व्यालिखन्निव विभाति स मन्दराद्रिः ॥१॥ "

( किरा ५. श्लो ३० )

नेतव्या वा ग्राममजाविति–अजादेः प्राधान्यात्प्रथमं पूर्वं तत्रैव क्रियाप्रवर्तनादन्त एव तत्र प्रधान कर्मत्व इति । केचिदाहुर्नाऽमी नयत्यादयो द्विकर्मकाः अन्यकर्तृकत्वादि–अजां नयति ग्राममजां गृहीत्वा ग्रामं यातीति वाक्यार्थः । नयतिस्तु

१–१ ६४ । २ १-१-८६ । ३ ६-१-११६ ।

प्राप्तिमात्रवाची । मन्यमानक्रियापेक्षयाऽपि कर्मत्वं दृश्यते, यथा प्रविश पिण्डीं द्वारमिति भक्षणक्रियापेक्षया पिधानक्रियापेक्षया चेति । नैवम् एवं सति अजा नीयते ग्राममित्यत्र कर्मण्युत्पद्यमानेनाऽऽत्मनेपदेनाऽजा कर्मणोऽभिधाने न प्राप्नोति, यतो गृहा वेऽजा कर्म न नयतेरिति । तस्मादन्यकर्मत्वमजाया नेष्टव्यमिति । अकर्मकाणामिति–नित्याकर्मकाणामविद्यमानकर्मकाणां चेत्यर्थः । प्रधान एव कर्मणीति–कर्तृकर्मणि कर्मवाचः प्रत्ययो भवतीति सम्बन्धः, प्राधान्यं च तस्य "गतिबोधाहारार्थ०" इति कर्मसंज्ञया विधीयमानत्वेन कृत्रिमत्वात् कर्तुः प्रथमप्रवृत्तिविषयत्वाद्वा । प्रधान एवेति–अन्यस्त्वप्रधानेऽपीच्छति तन्मतोपेक्षणाय अत्रैवकारः । आसयति मासं मैत्रमिति–आस्ते मासं मैत्रस्तमासीनमपरः प्रयुङ्क्ते, मासस्य "कालाध्वभाव०" इति कर्मसंज्ञा । कालाध्वभावदेशैः सर्वेऽपि धातवः सकर्मका इत्यन्यकर्मापेक्षयाऽकर्मका इह ग्राह्याः । बोधयति शिष्यं धर्ममित्यत्र वाक्यस्य धर्मप्रतिपादनपरत्वेन धर्मस्य प्राधान्यं शिष्यादेर्गुणभावः । शिष्यादिसंस्कारपरायां तु प्रवृत्तौ शिष्यादेः प्राधान्यं धर्मस्य गुणभाव इत्युभयत्र कर्मणः प्रत्यय इति । पाठयति शिष्यं ग्रन्थमिति–अर्थस्य शब्देन प्रतिपाद्यत्वाच्छब्दस्य प्राधान्यं, शब्दस्यार्थपरत्वादर्थस्यैव प्राधान्यमिति समर्थयन्ते गरीयांसो विद्वांसः । पयसा ओदनमिति–अत्र पय इति न व्याप्यमोदनापेक्षयाऽन्याङ्गत्वात्, यथाऽनन्याङ्गं तदेव व्याप्यमिति ।

'वा कर्मणा–मणिकर्तरि'। २ । २ । ४ ॥ नन्वेवं तर्हि गत्यर्थादीनामप्यविवक्षितकर्मत्वे विकल्पः प्राप्नोतीत्याह–गत्यर्थादीनामिति ।

'गतिबोधाहारार्थशब्दकर्मनित्याकर्मणामनीखाद्यदिह्वाशब्दायक्रन्दाम्'। २ । २ । ५ ॥ न विद्यते कर्म येषां तेऽकर्माणो नित्यमकर्माणो नित्याकर्माण इति, विसदृशबहुपदसमासस्ततो द्वन्द्वात्षष्ठीबहुवचनम् आहारस्य सुप्रसिद्धत्वाद्गतिबोधयोः स्वरूपमाह । गतिर्देशान्तरप्राप्तिरिति । बुध्यते शिष्यो धर्मम्–अत्र हि बुध्यादयः चक्षुरादीन्द्रियसाधनज्ञानविशेषस्याऽप्रतिपादनात्सामान्यबोध एव वर्तन्त इत्यर्थः । दर्शयति रूपतर्कमिति–रूपं तर्कयतीति "कर्मणोऽण्" इत्यणि रूपतर्कः । कर्षयाऽऽप्यत इति 'भुजिपत्यादिभ्यः०' इति कर्मण्यनटि, "पूर्वपदस्थ०" इति णत्वे, प्रज्ञादित्वात्स्वार्थेऽणि कार्षापणः । अत्र दृश्यादीनां चक्षुरादिसाधनप्रनियतज्ञानविशेषबोधार्थत्वेत्यर्थः । अन्ये तु इति ते हि गत्यादिसूत्रे धर्मिमुपादाय बोधार्थत्वेनैव सिद्धे धर्मिग्रहणादुत्तरत्र विशेषबोधार्थस्य परिग्रहो नाऽन्येषामित्याचक्षते । उत्पठमिति–उत्पीयते

१ १-१-७ । २ २-१-२१ । ३ ५-१-७१ । ४ ५-१-११८ । ५ उप ४०४ ।

भ्रमरैरिति " मुरेश्मेरब० " इति निपातनम् । स्वादयत्यपूपमिति–अत्र " चेस्वाद-रार्थेऽ " इति परस्मैपदम् । आदयस्योदनमिति–अत्र फलवत्त्वाभावात् " परिमुहा० " इति नाऽऽत्मनेपदम् । मतान्तरेण वा प्रयोगोऽयम् । ते हि " परिमुहा० " इत्यत्राऽदधातुमपठन्त आत्मनेपदं नेच्छन्ति ।

'भक्षेर्हिंसायाम्' । २ । २ । ६ ॥ भक्ष्यन्ते यव बलीवर्दा यवानदन्तो, यवानां विनाशत्वेन हिंसा । ननु हिंसा हि प्राणव्यपरोपणलक्षणा सा च प्राणिन्येव चेतने सम्भवति कथमचेतन सस्ये । नहि तत्राऽऽयुरिन्द्रियबलोच्छ्वासलक्षणा दशमलक्षणत्वनां परिमितचेतनः प्राणाः सन्तीति ? अत आह–वनस्पतीनामिति–वृक्षादिमत्त्वेनेति–वनस्पतयः सचेतना वृक्षादिमत्त्वात् । यो यो वृक्षादिमान् स स सचेतनः, यथा पुरुषः । वृक्षादिमन्तश्चैते तस्मात् सचेतना इति । पञ्चावयवमनुमानमिति । पूर्वपक्षहेतुदृष्टान्तो पनयनिगमनस्वरूपम् । भक्षयति पुत्रानिति–ननु पुत्रभक्षणस्य हिंसात्मकत्वात् भक्षयति पुत्रान् मार्गेति कथं कर्मकत्वाभाव इत्याह–न ह्यत्र मार्गी स्वयं पुत्रान् भक्षयति, न च सामन्यस्तत्र प्रयुङ्क्तेऽपि स्वेच्छयाक्रोशति भक्षय पुत्रानिति भक्षिर्न हिंसाविषयः ।

'वहेः प्रवेयः' । २ । २ । ७ । सूत्रगतस्यैवार्थः, तत्र वहतिः प्राप्त्यर्थो यथा वहन्ति बलीवर्दा देशान्तरं प्राप्नुवन्तीति । प्रापणार्थो यथा–ग्रामं भारं वहति बलीवर्दः, ग्रामं प्रापयतीतिः अत्राऽपि प्रापणोपसर्जनं प्राप्तिरस्त्येव । अकर्मको यथा नदी वहति स्यन्दत इत्यर्थः । अनेकार्थत्वात् प्राप्त्यर्थो यदा प्रापणया उपसर्जनीभूता प्राप्तिरप्यस्तीति भव्यर्थत्वात् प्राप्तिः । वाहयिता भारं बलीवर्दानिति–अत्र बलीवर्द शब्दात् ' वैकर्त्र क्वयोः " इति प्राप्तषष्ठीविकल्पात् द्वितीया तदुनिमुक्तपक्षे भारस्यात्र कर्मणि कवः इत्यनेन षष्ठी, द्वितीयप्रयोगे त्वेतद्विपर्ययः । " वैकत्र द्वयो " रिति षष्ठीप्रवृत्त्युदाहरणं तु वाहयिता भारस्य बलीवर्दानामिति गम्यमपि ज्ञेयम् । अत्र तु निष्प्रयोजनत्वाच्च दर्शितम् ।

'ह्रुक्रोर्नवा' । २ । २ । ८ ॥ इमादपर्यन्तं कृपातोरपि स्यादेरेव गृह्यते तेन कृत् विसृप, 'कॄम्' हिंसायामित्यनयोर्व्यवच्छेदः ।

प्राप्ते चेति–यदा हरतिर्गतो वर्तते ऽभ्यवहार वा, करोतिश्च यत्नमात्रार्थकर्मकः । विकुर्वन्तोऽश्वे यत्ना इति मि पुष्पु भवाः सि॑वपकशब्दाओ इत्यण् शब्दकर्मकत्व तदा पूर्वेण प्राप्त, यदा तु हरतिः स्तेयादौ वर्तते करोतिश्च सकर्मको भवति तदाऽप्राप्त

---

१ अभि दि ४ । २ १-१-१ ८ । ३ १-१-१४ । ४ २-२-८५ । ५ २-२-८१ । ६ ६-१-१ १ ।

विशेषानुपादानादुभयत्र विकल्पोऽयमिति, कारयिता कटस्य देवदत्तं देवदत्तेन वेति । प्रथमप्रयोगे देवदत्तशब्दाद्द्वितीयप्रयोगे तु कटशब्दात् "वैकत्र द्वयोः" इत्यनेन प्राप्तषष्ठीविकल्पात् द्वितीया, तद्विमुक्तकर्मणि "कर्मणि कृतः" इत्यनेन षष्ठी यद्यत्र "वैकत्र द्वयोः" इत्यनेन षष्ठीप्रवृत्तिः स्याच्च विकल्पस्तदा द्वितीयकर्मणि "कर्मणि कृतः" इत्यनेन नित्यं षष्ठी स्यात्, कर्तृप्रधानदेवदत्तशब्दात्तु "द्विहेतोरस्यणकस्य वा" इत्यनेन प्राप्तकर्तृषष्ठीविकल्पात्तृतीया । 'वैकत्रद्वयो'रित्यस्य "द्विहेतोरस्यणकस्य वा" इत्यस्य च प्रवृत्त्युदाहरणं, कारयिता कटस्य देवदत्तस्य कटं देवदत्तस्य वेति मन्यमपि ज्ञेयमत्र तु निष्प्रयोजनत्वान्न दर्शितम् ।

'ह्रस्वमिणवदोरात्मने' । २ । २ । ९ ॥ वन्दयते राजेति-अत्र । "ङर्मिण्कर्मे०" इत्यात्मनेपदम् । अभिवादयते गुरुं शिष्यं शिष्येण वा मैत्र इति । फलविवक्षायामात्मनेपदम् ।

'नाथः' । २ । २ । १० ॥ कर्म वा भवतीति-कर्तुर्व्याप्यमित्यनेन नित्यं प्राप्ते पक्षे निषेधः साध्यः । आत्मनेपदविषयस्य चेति-कर्मपेक्षयेदमुक्तं, भावकर्मणोस्तु सर्वधातूनामप्यात्मनेपदमस्त्येव । सर्पिषो नाथते इत्यादिषु सर्वेषु कर्माभावपक्षे "शेषे" इत्यनेन षष्ठी ।

'स्मृत्यर्थदयेशः' । २ । २ । ११ ॥ सामान्येन चिन्तनार्थ उक्तोऽपि स्मृति र्धातुरनुभूतस्यार्थस्य विशिष्टे चिन्तने वर्तमानो गृह्यते । एवमिवार्थाऽध्येत्यादयोऽपि गृह्यन्ते । तेन मनसा चिन्तनार्थानां समीक्षादीनां व्युदासः । लोकानामीष्ट इति-व्यापारेषु नियुङ्क्ते स्वायत्तीकरोतीत्यर्थः ।

'कृगः प्रतियत्ने' । २ । २ । १२ ॥ प्रतिशब्दः पुनरर्थे "अर्थ्यर्थ भवना-दिभिः" सः । सतो गुणाधानायेति-ननु यत्नद्वये सति पुनर्यत्न इत्युपयुज्यते तत्कथमत्र प्रतियत्नः ? उच्यते-प्रथम तावदर्थस्याऽऽत्मलाभाय यत्नो भवति, तदुत्तरमनो यो यत्नोऽधिकान् गुणानुत्पादयितुं परिपूर्णस्य गुणस्य वा तादवस्थ्य रक्षितुं स प्रतियत्नः । कटं करोतीति-अभूतः सन्निर्वर्त्यः कटोऽत्र, यत्र तु यष्टिकया रक्तं कटं करोति तत्राऽपि विकार्यमेव कर्म न प्रतियत्नः, उपपूर्वस्य करोतेः प्रतियत्नवि-षयत्वात् "गन्धनो०" इत्यात्मनेपदं चोपपूर्वस्यैव । अत एव मूलोदाहरणेष्वप्युपपूर्व एव दर्शितः । एधोदकस्येति-एधाश्च उदकानि च, 'धर्मार्थादिष्वनियमो वा "इत्येकत्वम् ।

१ २-२-८५ । २ २-२-८३ । ३ २-२-८७ । ४ २-२-८८ । ५ २-२-८१ । ६ २-२-४८ । ७ २-२-७६ । ८ ३-३-११६ ।

'रुजार्थस्याज्वरिसन्तापेर्भावे कर्तरि' । २ । २ । १३ ॥ रुजेति भावे इत्यस्मान्निर्दिष्टादिति रुजा । भावमेविति–साध्यरूपस्य भावस्य कर्तृत्वानुपपत्तेः सामान्यशब्दोऽपि भावशब्दः सिद्धरूपे भावे वर्तत इति तात्पर्यार्थः । चैत्रं रुजति, मत्स्यघ्ने वात इति–अत्र योऽत्स्यघ्नरूपो भावो न स कर्ता यस्तु वातरूपः कर्ता स द्रव्य न भावः ।

'जासनाटक्राथपिषो हिंसायाम्' । २ । २ । १४ । 'नटण्' अवस्यन्दने इति, अवस्यन्दनं हिंसाभेदः । न तु नट् नृत्याविति । अत्राऽप्यहिंसार्थत्वादित्येव हेतुः । आकारोपान्त्यनिर्देश इति–ननु जासनाटक्राथेत्याकारः किमर्थो यतो जसनटक्रथादि धातवः पठ्यन्ते, तेषां निर्देशे तथैव निर्देश्यम् । अथ ण्यन्तनिर्देशस्तर्हि जासिनाटिक्राथीति भवितव्यमित्याह–यत्राऽऽकारश्रुतिस्तत्रेति एवं क्राथिर्घटादिरिति–एवममुना प्रकारेणाऽपरमपि निर्दिश्यते, किं तत् ? क्राथिर्घटादिर्दृश्यते, न तु क्रथ् अर्दिम् हिंसायामिति, चौरादिक इति वैयाकरणानां मतम् । धातुपाठपक्षान्तरेऽप्युपलभ्यमानत्वात् चौरादिकोऽपि । ननु यथा घटादेर्ह्रस्वः पक्षे निषिध्यते । तथा वस्तु मुदवीचसिदित्यादौ "वर्णान्यत्वा" इत्यस्याऽपि किं न निषेधः ? सत्यम् । <u>यस्मिन् प्राप्ते एवेति</u> न्यायात् 'चटोः' "इत्यस्यैव निषेधः । अभावकर्तृकार्यमिति–ननु हिंसाया रुजारूपत्वात् 'रुजार्थस्या' इत्यनेनैव कर्मविकल्पो भविष्यति किमनेनेति ? । अथ जासनाटक्राथेत्याकारभवनार्थमिदं सूत्र विधीयते तदा पिष्टग्रहणं व्यर्थकं स्यात्तस्मात् पूर्वेणैव सिद्धेऽभावकर्तृकार्यमिति सिद्धम् ।

'निप्रेभ्यो घ्नः' २ । २ । १५ ॥ संग्रहार्थमिति, यद्येवमर्थं तर्हि न प्रदेयं यत्राऽपि व्यस्तविपर्यस्तौ निप्रौ भविष्यतस्तत्राऽपि नेः प्राग्वा परो हन्स्तीति ? उच्यते, तदन्योपसर्गपूर्वस्य हन्तेर्वा कर्मसंज्ञानिवृत्त्यर्थम् । तेन चौरं विप्रहन्ति विनिहन्ति वेत्यादौ पूर्वेण नित्य कर्मसंज्ञा । प्रहन्तीति–अत्र घ्नामिति–बहुवचनात् हन इत्यनेन सत्त्वाभावः ।

'विनिमेयद्यूतपण पणव्यवह्रोः' । २ । २ । १६ ॥ पत पणायतीति–प्रकृतिग्रहणे स्वार्थिकप्रत्ययान्तानां ग्रहणमिति सूत्रे पणेत्युक्तेऽपि पणायतेरपि ग्रहः । आत्मनेपदं तु भवति अयं न्यायोऽनित्यः । इदं च कुतो लभ्यते ? "केमेर्णिङ" इत्यत्र णिङिति ङकारोपादानात् । मोपायतीत्यर्थ इति अनेकार्थत्वाद्धातूनाम् ।

---

१ ४-२-१५ । २ ४-१-१४ । ३ १-२-११ । ४ १-४-१ ।

'न' । २ । २ । १८ ॥ सन्धिना विजिगीषत इति समर्येन सह सन्धिं कृत्वाऽन्यषां भूमिं विजिगीषत इत्यर्थः । अत्र क्रियेत्यादि-क्रिया धात्वर्थरूपा तत्साधनं च भवा इत्यर्थः । सुतस्य सुदेवमिति-अत्र सु इति निपातान्तरं नोपसर्गः, अत एव सुस्थितं दुःस्थितमित्यादौ षत्वं न भवति "स्थासेनि०" इत्यनेन, यथा च सु इतिनिपातान्तरं नोपसर्गस्तथा दुरित्यपि ।

'करणं च' । २ । २ । १९ ॥ चकारस्याऽन्यत्समुच्चेतव्यं नाऽस्तीति करणमेव प्रतीयते । करणस्य कर्मसंज्ञायामप्राप्तायां विधीयमानायां निर्वर्त्यादियो भर्मा न चिन्त्या असम्भवात् । युगपज्ञप्तीति-फलं भवतु मा वा संज्ञाद्वय तु सर्वप्रयोगेषु वेदितव्यम् । ननु संज्ञाद्वय युगपत्त्विरभकाशमिति न वाच्यम् अक्षैर्देवयते इत्यत्र चरितार्थत्वात् । कथं चेत्येवेति-न च विकल्पेऽपि युगपत्संज्ञाद्वय भविष्यतीति वाच्यं, विकल्पस्य पाक्षिकप्राप्तिनिवृत्तिफलत्वात् । प्रतिकार्यमिति-एकस्याऽपि कर्मणः करणस्य वा कार्यं कार्यं प्रति संज्ञाभिधायकानि सूत्राणि भिद्यन्त इत्यर्थः ।

'उपान्वध्याङ्वसः' । २ । २ । २१ ॥ उपादिभिर्द्वन्द्वं कृत्वा वसते पूर्वे यस्मात् स चाऽसौ वस् चेति बहुव्रीहिगर्भो विशेषणसमासः । शब्दशक्तिप्रामाण्याद् न्वादिपूर्वो वसतिः स्थानार्थमाचष्टे, तस्मादर्थादुपपूर्वस्याऽपि स्थानार्थस्य परिग्रहो न तु भोजननिवृत्तिवचनस्येत्यत आह-अन्वादिसाहचर्यादिति-स्थानार्थयोगात्तस्योपवस्योऽपि स्थानार्थ इत्युक्तं स्थानार्थस्येति ।

'वाऽभिनिविशः' । २ । २ । २२ ॥ अभिः पूर्वो यस्मान्नेः सोऽभिपूर्वः, अभिपूर्वश्चाऽसौ निश्चाऽभिनिस्तस्मात् परो विट् तस्य "मयूरव्यंसके०" इति पूर्वपदलोपः । अभेर्निस्तेन युक्तो विशिति वा, न तु द्वन्द्वः । अभिश्च निश्चेत्येवंरूपे द्वन्द्वे हि अभिनिशब्दयोः प्रत्येकमभिसम्बन्धः स्यात् यथा-"उपान्वध्याङ्वसः" इत्यत्र । व्यवस्थितविभाषेयमिति-नाऽत्र वाशब्दो विकल्पार्थो येन समकक्षतया द्वितीयास्तम्यौ, किं तर्हि ? प्रयोगव्यवस्थयेति ।

'कालाध्वभावदेशं वाऽकर्म चाकर्मणाम्' । २ । २ । २३ ॥ अध्वा गन्तव्यमिति-गमनार्हं तनाऽध्वशब्दाभिधेयस्याऽध्वनः कर्मसंज्ञा न भवति । नतसाधव्यविशेषः क्रोशयोजनादिगमनमर्हति, यद्यप्यर्थप्रधानोऽयं निर्देशस्तेन कालाध्वभावदेशानां साक्षात् प्रयोगे न भवति । अपि तु, तदर्थप्रतिपादकशब्दप्रयोगे । भावः क्रियेतिक्रिया धात्वभिधान्या सिद्धतारूपा न तु साध्यमानेत्यर्थः । पर्वतादिरिति-भादिशब्दात्

१ ३-१-४ । २ १-१-११६ । ३ २-१-२१ ।

खेटकर्बटमहम्यादि गृह्यते । गोदोहमास्ते अत्र सामीप्यक आधारः, यदा तु विशिष्टः कालो विवक्ष्यते तदा नैमित्तिकोऽपि । एवमोदनपाक इत्यत्राऽपि । मासं पचतीति-अकर्मकाणामित्यत्र नित्याकर्मकाणामविवक्षितकर्मणां च सामान्येन ग्रहणमित्यविवक्षित-कर्मकमुदाहरति । इदं गोदोहमासितं, अत्र बाहुलकात् षष्ठीप्राप्तिं प्रति न कर्मता । तेन "कर्मणि कृतः" इत्यनेन न षष्ठी । अत्राऽऽधारे क्तः प्रत्ययः, कथमिति ? पचादीनां सकर्मकत्वाच्च प्राप्नोतीत्याशङ्कार्थः । पचत्योदनं मासमित्यादि-सर्वेऽप्यमी धातवः प्राप्त्युपसर्जने स्वार्थे वर्तन्ते ततो मासादिप्राप्तेस्त्वादिरर्थो भवति द्विकर्मकता च । अनेनेति न सूत्रेण 'कालाध्वनोर्व्याप्तौ" इत्यनेन कर्मण्यकर्मणि च द्वितीया भविष्यति किमनेन विधानसूत्रेणेत्याह-अनेन कर्मसंज्ञायामित्यादि-कालाध्वपेक्षयेद मुक्त भावेऽपयोऽस्तु द्वितीयार्थमिति तन्मते तु मासस्यैव द्वितीयार्थे न तु दधस्य, ते हि तेषग्रहणं न कुर्वन्तीति । कालाध्वनोर्व्याप्ताविति चेति-यदत्यन्तसंयोगे काला ध्वभावेति प्रवर्तते तर्हि "कालाध्वनोर्व्याप्तौ" इति क प्रवर्त्स्यतीत्याह कालेति । 'कालेऽध्वनो " रिति-गुणद्रव्ययोगे क्रियायोगे तु "कालाध्वभावदेशं वा " प्रवर्तत इत्यनयोस्तन्मते विभागः ।

'साधकतमं करणम्' । २ । २ । २४ ॥ सिध्यतेर्मिति "सिध्यतेरज्ञाने" इत्या-त्वे पक्षे तमपि च सिद्धम् । प्रकृष्टोपकारकत्वेनेति-प्रकर्षेण प्रकृष्टं तेनोपकारकम् । यद्वा प्रकृष्यते स्म प्रकृष्टस्ततः प्रकृष्टं च तदुपकारकं चेति कर्मधारयः । प्रकृष्टोपकारकत्वस्य को हेतुरव्यवधानम् । यद्वा प्रकृष्टोपकारकत्वमपि किंस्वरूपमव्यवधानमिति । अन्येषु मिलितेष्वपि कारकेषु लवनादिक्रिया दात्रादि विना न शक्यत इति कर्त्राऽव्यवहितं दात्रादि करणमपेक्ष्यत इति तस्य प्रकृष्टत्वम् । यत्प्रकृष्टोपकारकत्वेन स्थाल्यादिकमपि कर्त्राऽव्यवहितमपेक्ष्यते तदपि करणमेव । ननु प्रकृष्टोपकारकत्वं कर्तुरप्यस्ति तस्याऽपि करणत्वं प्राप्नोति, नैवम्; तस्य स्वातन्त्र्यं लक्षणमस्ति । साधकतममिति-ननु सामग्रीतः क्रियासिद्धिस्तत्र कथं किञ्चित् साधकतमं किञ्चित्तद्विपरीतं ? अन्वयव्यतिरेकाभ्यां हि तत्र सर्वेषां सामान्यमवगम्यते तस्मात् क्रियासिद्धौ साधकतमस्य सम्भवो नाऽस्तीति सम्भव कल्पनया दर्शयति -परमार्थवृत्त्या साधकतमत्वस्य सम्भवो नाऽस्ति यद्व्यापा-रानन्तर्येण तु क्रियासिद्धिर्विवक्ष्यते तस्य कल्पनया साधकतमस्येयं संज्ञा । ज्वलनरूप उत्पातनिपातरूपः पुष्परूपश्च यथाक्रमं प्रयोगभवेऽनान्तरव्यापाराः । तमग्रहणमिति-गौणमुख्ययोरिति न्यायात् साधकतमस्यैव भविष्यति किं तमग्रहणेनेत्याह-अपादाना दीति-अन्यैरपादानं प्रथममुक्तमिति तन्मतापेक्षयाऽपादानादीत्युक्तम् । यद्वा स्वमतापेक्ष-

१ १-३-८१ । २ १-२-४२ । ३ २-२-११ । ४ ४-१-११ ।

याऽपि "कविम्भेऽञ्जनम्" इतिवत्। तरतमयोग इति–साहचर्यात्तरतमगतः प्रकर्षोपलक्ष्यते। स्वकक्षायामिति–स्वकक्षा स्ववर्ग इति यावत्। ननु यदि स्ववर्गेऽपि प्रकर्षो नेष्यते तदाऽन्येषां करणानां किं स्यात्? उच्यते–तदा करणान्तराणां सम्बन्धे षष्ठी स्यात्।

'कर्माभिप्रेयः सम्प्रदानम्'। २। २। २५। इह च "न येषाः" इति ये गुणे "उपसर्गस्या०" इत्यलोपे। सम्प्रदीयते यस्मै बाहुलकाल्ल्युट्। भक्त्यनुग्रहादिकाम्ययेति–यथेति प्रत्ययः–भक्ता, अनुग्रह–उपकारः, आदिपदात् कीर्त्युपायाभावादिग्रहः। भक्ताय निगदते (गृह्यते) स्वयं भक्तं कर्तुं पच्यमानेनाऽऽकारितं द्विजान्तरं निन्दतीत्यर्थः। अभिप्रेयमादिति–अभिरभिमतार्थः प्र आरम्भार्थः, केवलस्य हि इयते–र्गमनं वाच्यं नाऽभिसम्बन्धस्ततोऽभिप्रेय विशिष्टसम्बन्धप्रतिपत्त्यर्थम्। विशिष्टश्च सम्बन्धः कर्तुः भक्त्यनुग्रहोपायापचयमकामनाजनितः स चाऽत्र नाऽस्तीति। प्रेय इति यत्रे क्रियमाणे कर्मणा क्रियया यः सम्बध्यमानो भवति स सम्प्रदानसंज्ञ इत्युक्ते ततः पृष्ठं ददातीत्यत्राऽपि स्यात्। रजकस्य वस्त्रं ददातीति–परिपूर्णं मूल्यमलभमानस्य रजकस्य पराङ्मुखत्वं। छात्राय चपेटां प्रयच्छतीति–चपेटमाऽऽश्रितः सन् छात्रोऽपि शुद्धो भवति विनयपरो भवति।

'क्रुद्रुहेर्ष्यासूयार्थैर्यं प्रति कोपः'। २। २। २७॥ सम्प्रदानसंज्ञा स्यात् क्रुधिद्रुही अकर्मकावेव। सम्बन्धषष्ठ्यां प्राप्तायां सम्प्रदानम्। मनसा कुप्यतीति नाऽत्र मनस उपरि कोपो किन्तु तेन करणाऽन्यस्य पुत्रादेः। कर्तुरपीति न केवलं विषयसप्तम्यां च प्रतिक्षेपस्तस्य सम्प्रदानत्वमाधारमात्रत्वेन कर्तुरपि स्यादित्यर्थः। शिष्यस्य कुप्यतीति–शिष्यस्य सुभाषिनोऽविनयस्योपरि कोपो न तु शिष्यस्य। धनिनो द्रुह्यतीति–धनस्योपरि द्रोहो न तु प्राणानाम्। भार्यामीर्ष्यतीति–अन्येनाऽवलोक्यमानां न सहते। इन्द्रो मेनामितिवदसूयार्थोऽकथि। द्विषेरपीत्ययस्यादिति–अप्रीतिमात्रमेव विवक्षितं न तु क्रुधाद्य इत्यर्थः। अत्रेदं विचार्यते–कोपाद्द्रोहादयो भिन्नस्वभावा व्याख्यातास्तत् कथं तदर्थानां च प्रति कोप इति सामान्येनैवविशेषणमुपपद्यते। तेषां हि यं प्रति द्रोहो च प्रतीर्ष्या यं प्रत्यसूयेत्येव घटते, नैव कोपः; कोपस्वाभावात्कोप एव द्रोहादयो द्विप्रकाराः केचित् कोपहेतुकाः केचिद्वस्त्वन्तरहेतुकाः। तत्रेह पूर्वेषां ग्रहणं यथा स्यादुत्तरेषां मा भूदित्येवमर्थं च प्रति कोप इति सामान्येन विशेषणमुपात्तम् अन्यथा व्यभिचाराभावादिदमनुपादेयं स्यात्।

'अपायेऽवधिरपादानम्'। २। २। २९॥ इंसूद। अपायनं "दुर्यनं०"

१ १-१-१ । २ ५-१-२८ । ३ १-२-११ । ४ ५-१-२८ ।

इत्यर्थः । अत्रापि ध्रुवः कर्तुः प्रभवोऽपादानमित्यपि न वक्तव्यम् । अत्यन्तमिति—अन्तमतिक्रान्तम् । षड् योजनानीति—अत्र षड्योजनरूपस्याऽध्वनः अध्वाश्रय इत्यध्वनाऽध्वनोऽन्तेन सह गते गम्य इति सूत्रेण सामानाधिकरण्य तस्माच्च अध्वाश्रय इत्यस्मात् या प्रथमा विभक्तिः सा योजनानीत्यत्राऽपीति । गतानीति—चैत्रेण कर्त्रा षड् योजनानि गतानि अतिक्रान्तानीति योजनानां कर्मत्वम् । उपचाराद्योजनस्थनरगतापेक्षया योजनान्यपि गतशब्देनोच्यन्त इति तेषां कर्तृत्वं वा । गतेष्विति—अतिक्रान्तेष्वित्यर्थः । आग्रहायणीति—अत्र हायनस्य " पूर्वपदात्० " इति णत्वम् । अग्रहायणेन मृगशिरसा चन्द्रयुक्तेन युक्ता पूर्णमासी " नक्षत्रेण युक्तः० " इत्यण् । बलाहकमिति—व प्राप्त्याऽन्तर्भूतण्यर्थो वा ।

' क्रियाश्रयस्याधारोऽधिकरणम् ' । २ । २ । ३० ॥ आधीयत इत्याधारो " भूम्नो० " इत्यलि क्रियाश्रयः क्रियासम्पादक इत्यर्थः । आश्रियेते अवतिष्ठेते क्रियाश्रयौ कर्तृकर्मणी अस्मिन्निति ' व्याधाधारा० " इत्यादिना घञ् । विघटनक्रियायामिति—विघटनमवयवानामसम्पृक्तता । हेतुत्वं प्रतिपद्यत इति—यदुक्तं—

" कर्तृकर्मव्यवहितामसाक्षाद्धारयत् क्रियाम् ।
उपकुर्वत् क्रियासिद्धौ, शास्त्रेऽधिकरणं स्मृतम् ॥ १ ॥"

विषयाय प्रभवति—" तस्मै योगाय कल्पते " इतीकणि—वैषयिकम् । औपश्लेषिकमिति—"अध्यात्मादिभ्य ठञ् "। मति गोत्वं—अनवयवस्याऽपि गोत्वादेर्व्यक्त्यावयवमान् व्याप्त्यावतिष्ठमानस्य व्यक्त्यादिरभिव्यापक एवाऽऽधारः । सामीप्यकमिति—मेघवादित्वमनन्तात् स्वार्थे कः । नन्वाश्रय आधारो भवति, आश्रयश्च संयोगसमवायाभ्यां भवति । न चाऽत्रस्थितिक्रियाश्रयेण घोषादिना गङ्गादेः संयोगसमवायौ स्तः ? नैष दोषो यदायत्ता हि यस्य स्थितिः स विनाऽपि संयोगसमवायौ तस्याऽऽश्रयो भवति । यथा राजपुरुष इत्यत्र न राज्ञा सह संयोगसमवायौ स्तः । अथ च तदधीनस्थितित्वाद्राजाश्रयः पुरुष इति लोके व्यपदिश्यते । नैमित्तिकमिति—अत्र ' विनयादिभ्यः " इतीकम्, युद्धे सन्नह्यते—सन्नहनादयस्त्वन्यत्राऽपि केनचिन्निमित्तेन सम्भवन्तीति न युद्धादिर्वैषयिकः । औपचारिकमिति—अत्र ' अध्यात्मादिभ्य ठञ् " अन्यत्राऽवस्थितस्याऽन्यत्राऽध्यारोप उपचारः । अङ्गुल्यग्रे करिशतमिति—अत्र हि करिशतादीनामन्यत्राऽवस्थितानां केनाऽपि प्रयोजनादिनाऽङ्गुल्यग्रादावध्यारोप्यमाणानामङ्गु-

१ २-१-६४ । २ ६-२-६ । ३ ५-१-११ । ४ ५-१-११४ । ५ ६-४-१४ । ६ ६-१-७८ । ७ ७-२-११६ ।

स्पष्टादिरौपश्लेषिकाभिन्न औपचारिक आधार उच्यते, यथा साङ्कस्यप्रादिशब्देनोपचाराद्येपाभिव्यक्तो देश एवोच्यते तदौपश्लेषिक एवाऽऽधारोऽत एवाऽऽहुः—

“ आधारस्त्रिविधो ज्ञेयः, कटाकाशतिलादिषु ।
औपश्लेषिको वैषयि–कोऽभिव्यापक एव च ॥ १ ॥”

अस्योः प्रतिनत्रतीति–यथाऽग्निस्त्वं सुखादि दुःखकारि तथा प्रेष्योऽसीत्यर्थः ।

‘ नाम्नः प्रथमैकद्विबहौ ’ । २ । २ । ३१ ॥ तत्रेति–एव स्थिते सतीत्यर्थः । तेष्विति–पञ्चकस्य नामार्थस्य क्रमेण लक्षणमाह–जातिरिति नित्यत्वैकत्वे सत्यनेकत्र समवेता जातिः । अत्र जातिलक्षणे नित्यपदाभावे घटेन व्यभिचारो नित्यद्रव्यवृत्तयोऽन्त्या विशेषा एकत्वाभावे विशेषेषु व्यभिचारः । अनेकत्राऽभावे परमाणौ विशेषेण व्यभिचारः । सम्बन्धादीति–आदिशब्दान्नित्यद्रव्यवृत्तयोऽन्त्या विशेषा अतीन्द्रियपदार्थमन्या योगिसंवेदनीयास्तेऽपि स्वार्थः । स्वार्थ इति–स्वस्यैवाऽर्थः स्वार्थो विशेषणमसाधारणोऽर्थः प्रवृत्तिनिमित्तमिति । गौरिति–जातिरनुवृत्तप्रत्ययहेतुरनुगतज्ञानहेतुः । अत्र तद्विशिष्टस्य द्रव्यस्य प्रतीतेर्जातिः स्वार्थः । शुक्ल इति–गुणः शुक्लत्वादिः । शुक्लः पट इत्यादौ तद्विशिष्टस्य द्रव्यस्य प्रतीते( ज्ञानस्य )र्गुणः ( हेतुः ) स्वार्थः । गर्गस्याऽपत्यानि “ गर्गादेर्यञ् ” “ यञञोऽ ” इत्यनेन लोपः । पञ्चाला इति–पञ्चालानां राष्ट्रस्य राजानः पञ्चालस्य राज्ञोऽपत्यानि वा “ राष्ट्रक्षत्रियात् ” अञ् स्वार्थस्य व्यवच्छेदमिति–अत्र कर्तरि षष्ठी स्वार्थेन व्यवच्छिद्यते । द्रव्याद्याभय इति–आदिशब्दात् स्वार्थपरिग्रहः । पदार्थे प्रवृत्त इति–शब्दधर्मो लिङ्गमिति मतापेक्षया । भेदप्रतिपत्तिहेतुरिति–भेदो विलक्षणज्ञानोत्पत्तिरूपस्तया हि पदार्थानां भेदः प्रतीयते । भेदः परिमाण संख्येति लक्षणस्यास्याः । ननु नामार्थव्यतिरेकिणामन्येषामेकत्वादीनां विशेषणभूतानामभावात्क इत्यादौ प्रथमाया अभावः प्राप्नोतीत्याह–निमित्तमिति, निमित्तमेकत्वसंख्यालक्षणम् तद्गतस्यैकत्वसंख्यागतो यदेकत्वं तत्र विभक्तिप्रवृत्तिः । यथा वृक्ष इत्यत्र वृक्षत्वगतो द्रव्यस्यैकत्वं प्रतिपाद्यते तथाऽत्राऽप्येकेन सामान्यमेकत्वं भिन्नत्वेकत्वसंख्यागत एकत्वं प्रतिपाद्यते, यथा सामान्यं दृश्यमानस्य दण्डिनो दण्डमानस्य । स्यादिभिरिति–तिशब्देन तिवादय आख्यातप्रत्यया आदिशब्देन च कृत्तद्धितसमासा उच्यन्ते । व्यतिरिच्यत इति व्यतिरेकस्तस्मिन् व्यतिरेके नामार्थादतिरेक जातिस्य द्वितीयाया विभक्तयो व्यतिरेकनिमित्तयः । तत्पूर्वक–सम्बन्धरूपा चेति–

१ ६-१ २ । २ ६-१-१२६ । ३ ६-१-११४ ।

तत्क्रियाकारके पूर्वे यस्य स चाऽसौ सम्बन्धश्च स एव रूपं यस्याः शक्तेः सा तथा । आनीयं भूमिमित्यादिषु सर्वेषु धातुलक्षणात् करणादिम्यनीयादयः । उपचरितमपीति-अध्यारोपितमित्यर्थः । सहचरणस्थानतादर्थ्यवृत्तमानधारणसामीप्ययोगसाधनाधिपत्येभ्यो ब्राह्मण-मञ्च-कटक-राज-सक्तु-चन्दन-गङ्गा शाटकान्नपुरुषेष्वतद्भावेऽपि तद्वदुपचारः । छत्रिणो गच्छन्ति-छत्रिसहचरिताः पुरुषा यान्तीत्यर्थः । शक्तिप्रधानमपीति-पच इत्यादिभ्योऽपादानादिशक्तीनां प्रतीयमानत्वे न शक्तिमतोऽर्थमात्र शक्तिप्रधानम् । द्योत्यमपीति-प्राद्युपसर्गाणां क्रियार्थद्योतकत्वादन्ययोपसर्गत्वाभावाचदर्थमात्र द्योत्यमेवेति । स्वरूपमात्रमपि-सोपसर्गाऽनुपसर्गधात्वर्थस्यादिभिर्वैषिष्याऽप्रतीतेः । आमच्छतीत्यादिक्रियापदार्थे एव तदर्थ इत्यर्थः । नाम्न इति किं ? ननु धर्मस्य निरर्थकत्वाद्वाक्यार्थयोश्चाऽसत्त्वरूपत्वात् संख्याया सत्त्वधर्मरूपत्वेन तद्(प्र)वृत्यभावात् सत्त्ववाचिनो नाम्न एव प्रथमा भविष्यति किं नाम्न इत्यनेन ? उच्यते-यथा धातोरसत्त्ववाचित्वेऽपि साधनाश्रयामेकत्वादिसंख्यामाश्रित्य तिबादीनामेकवचनादीनि प्रवर्तन्ते तथा स्यादीनामपि प्रवर्तेरन् । एकवाक्यादप्यवयवगतां वर्णाच्च निरर्थकादपि स्वरूपगतां संख्यामाश्रित्य प्रथमा स्यादिति । वाक्यात्म्यामिति-उपलक्षणत्वात् पदादपि । नत्वर्थमात्रे प्रथमेत्युक्तत्वात् मात्रग्रहणस्य चाऽधिकार्थेऽव्यवच्छेदकत्वाद्वीरपुरुष इत्यादौ सामानाधिकरण्येनाऽर्थमात्राद्विशेषणविशेष्यभावस्याऽधिकस्य प्रतीतेः प्रथमा न प्राप्नोति । समासविधानमपि प्रथमोत्पत्तेर्लिङ्गं न भवति । वीरं पुरुषमानयेति द्वितीयाद्यन्तानामपि समाससम्भवादिति प्रथमा न विधेया, नैष दोषः; आधिक्यस्य वाक्यार्थत्वाद्वीरनाम्नोऽनपेक्षितशब्दान्तरार्थसंसर्गोपहितविशेष्यभावात् स्वार्थमात्रनिष्ठात् प्रथमा विधीयते । एवं पुरुषशब्दादपि ।

'आमन्त्र्ये' । २ । २ । ३२ ॥ प्रसिद्ध-सत्सम्बन्धस्येति-तेन पाल्पित्यदेवदत्तत्वा विना प्रवृत्तिनिमित्तेन सम्बन्धो यद्वा तेनाऽऽमन्त्र्यमाणेना देवदत्तादिशब्देन सम्बन्धः । प्रसिद्धस्तत्सम्बन्धो यस्य देवदत्तादेस्तस्य । तद्विषय आमन्त्र्य इति आमन्त्र्यपदं हि क्रियाविशेषणं भवति हे देवदत्त ! व्रजाम्यहमिति, अत्राऽभिमुखीकृतदेवदत्तविशिष्टा क्रिया प्रतीयते । यदाह हरिः—

" आमन्त्रितपदं यच्च, तत्क्रियाया विशेषकम् ।
व्रजानि देवदत्तेति, निघातोऽत्र प्रतीयते ॥ १ ॥ "

ततश्च देवदत्तादेः क्रियाविशेषणात् कर्मादितिरिक्तामन्त्रणसम्बन्धरूपे वर्तमानाच्छौणात् प्रथमापवादः षष्ठी प्राप्नोति तद्बाधनार्थमिदमुच्यते । सम्बन्धश्चाऽऽमन्त्र्यामन्त्रणभावो विषयविषयिभावो वा ।

'गौणात्समयानिकषाहाधिगन्तरान्तरेणातियेन तेनैर्द्वितीया' २।२।११॥ गौणादिति, "तव भागेते" प्रज्ञापयति वा, अत्र पक्षे येन तनौ मुक्त्वाऽन्ये वाचकाः। समया पर्वतं नदी–निकटं निकषा वा। निकषति दूरमाव 'सेमिपूनिकषिभ्यामाः' जहाति सौख्य विभु, धयति निन्दामाव "ग्रैगारम" इति निकषा हा धिक् दम्भानां व्युत्पत्तिः। हा देवदत्तमिति–हा कष्टं देवदत्तस्य यतो भर्मत व्याधिः। अन्तरा निषधमिति–अन्तं राति "स्त्रिं" इति आः। अन्तरेण गन्धमादनमिति–अन्तरे मध्ये नयति कश्चित्" इति डे, "वर्तुरन्ते डति" इत्यत्रापि "पूर्वपरस्था " इति पाल्ये च। अतिवृक्षमिति–वृक्षमामतिक्रमण पाण्डवानां महद् दुःखम् भवत इत्यर्थः। येन पश्चिमामिति–अत्र यत तनौ तत्पलक्षणमार्ग योतयतः पश्चिमां प्रति लक्षीकृत्यगत इत्यर्थः। अथ गतः कां प्रति पश्चिमां, पश्चिमाया लक्षणेन देवदत्तस्याऽप्रसिद्धं गमन लक्ष्यते। मन्तराऽन्तरणाधि मथाऽन्तराशब्दः क्रियामावन्तोऽप्यस्त्यव्ययं च, अन्तरेणस्यपि अन्तरशब्दात्तृतीयायां भवति अव्ययं च। तत्र विशेषानुपादानात् सामान्येनोभयस्याऽपि ग्रहणं कुतो न भवतीत्याह–साहचर्यादिति। समयादिभिर्निपातैः सहैकमास्योपाचत्वादत्रापि निपातानामित्यर्थः। अन्येनापीति–द्विधा व्याख्येय, समयादिभ्यतिरिक्तेन पावच्छब्दापदनाम्ना नामभ्यतिरिक्तेन धात्वादिनाऽपि योगे गौणान्नाम्नो द्वितीया भवतीति। अथ तृतीयमत्र पादं यस्य स तथा।

'द्वित्वेऽधोऽध्युपरिभिः' २।२।१४॥ "सामीप्येऽधोध्युपरि" इति द्वित्वम्। असामीप्यादिति–अधोपरादिमात्र विवक्षित न सामीप्यमिति द्वित्वाभावः।

'सर्वोभयाभिपरिणा तसा' ।२।२।१८॥ सर्वादिनिर्देशस्य तसा विशेषणमन्यः" इति न्यायात्तदन्तप्रतिपत्तिरित्याह–सर्वादिभिस्तसन्तैरिति।

'लक्षण वीप्स्येत्थम्भूतेष्वभिना'।२।२।१६॥ लक्षणापस्यति–यना दरित्यथः। इत्थंभूत इति–मनन मातुस्वादिना प्रकारमस्य इत्थं भवनं क्षीरे कः। इत्थम्भूतमत्राऽस्ति "अर्थापिम्यः" यथा इत्थं देवदत्ता भवत्यस्मिन् मात्रादौ "भैपर्ना" इति कः इत्यभूता मात्रादिः। "अर्मेर्थ मरवादिभि" इति समासः। वृक्ष वृक्षमभिसेक इति–अत्र वृक्षस्य वृक्षस्य सक इति सर्वेन वृक्षाणां वीप्स्यमानां सकं प्रति यस्तेषां साम्यमापनमात्रलक्षण सम्बन्धः सोऽभिना द्योत्यते। वीप्सा तु द्विर्वचनयोत्येवेति।

---

१ ६-३-१४९। २ उणा–५५८। ३ उणा ८००। ४ उणा–६५। ५ ५-३-१०१। ६ ३-२-२। ७ २-३-१४। ८ ७-४-७६। ९ ७-४-११२। १० ७-३-८६। ११ ५-१-१५। १२ ३-१-८८।

अन्ये त्वन्यथा वर्णयन्ति–वीप्सावीप्स्यमानयोः सम्बन्धो द्विर्वचनेनैव द्योत्यते न त्व भिना इति सम्बन्धस्याद्योतकत्वाऽपि तेन योगे वचनात् द्वितीयेति ।

‘ भागिनि च प्रतिपर्यनुभिः ’ । २ । २ । ३७ ॥ भागवतीति, भाग्यस्यार्थे भूधातुर्भागमे वर्तत इति हि धातुपारायणविदः । स्वीक्रियमाण इति–यस्त्वस्वीक्रियमाणेऽप्यंशे भागशब्दः प्रयुज्यते नगरस्य भागः प्रियङ्गोर्भाग इति स स्वीक्रियमाण भागस्यारम्भादिति ।

‘ हेतुसहार्थेऽनुना ’ । २ । २ । ३८ ॥ हेतुर्द्विविधो जनको ज्ञापकश्च, तत्र ज्ञापकस्य लक्षणस्यात् “ भागिनि च० ” इति सूत्रेण द्वितीया सिद्धेति जनक एवेह गृह्यत इत्याह–हेतुर्जनक इति । तुल्ययोग इति–ननु तुल्ययोगायर्थे सहादय एव शब्दा वर्तन्ते न पर्वतादिशब्दा इति कथं ततो द्वितीयेत्याह–तद्विषयोऽपीति । देवेन्द्रमुपपातयति कर्मणोऽपि देवेन्द्रोपपातम् । तुल्ययोगोऽभिधेयैः सह विद्यमानता तु भिन्नैरित्यनयोर्भेदः । विद्यमानतायामनु क्रमाणि संसारीत्युदाहरणं ज्ञातव्यम् ।

‘ उत्कृष्टेऽनूपेन ’ । २ । २ । ३९ ॥ उत्कृष्टशब्दो हीनापेक्षस्तेन हीनोत्कृष्टसम्बन्धेऽनुना द्योत्ये द्वितीयाऽनेन विधीयते ।

‘ कर्मणि ’ । २ । २ । ४० ॥ शब्दप्रयोगायोगादिति–अर्थप्रत्यायनाय हि लोके शब्दः प्रयुज्यते, स चाऽर्थो यदा शब्दान्तरेण प्रतिपादितः स्यात्तदा प्रयोजनाभावाच्छब्दान्तरप्रयोगो न कर्तव्यः । अनियताधाराणामिति–नहि भीष्मत्वादीनां कट एवाऽऽधारः किन्त्वन्येऽपि । ‘न केवला प्रकृतिरिति’–नाऽपद प्रयुञ्जीतेति न्यायात् । तदेकयोगक्षेमत्वादिति अलब्धलाभो योगः, लब्धार्थपरिरक्षणं क्षेमस्तस्य देवदत्तादेर्यावेकौ योगक्षेमौ तयोर्भावः । कर्मादिसामान्यमिति–करणादिक्रियामात्रयोग्यमित्यर्थः । तत्राऽपीति–सामान्यकर्माभिधानेऽपि । अन्तर्भूत इति–तत्राऽभिहितोऽपि कर्मविशेषोऽन्तर्भवति, यथा राज्ञः पुरुष इत्यत्र वाक्ये षष्ठ्या सम्बन्धोऽभिधीयते; न तु कश्चिद्विशेषस्त्वर्मावमुपयातीति द्वयोरुपादानम् । तत्रेति–कर्मादिशक्तियुक्ते द्रव्य इत्यर्थः । स्वरूपकालभिन्नायामिति–कृताकृतेत्यादिक्रियापेक्षया स्वरूपेण कालेन च पश्याऽऽहरेत्यादिका क्रिया भिन्ना । प्रधाना प्रधानक्रियेति–एकस्मिन् वाक्ये युगपदनेकप्रधानक्रियाया असम्भवात् प्रधानाप्रधानक्रियाविषयैवाऽनेका शक्तिरिति, तत्क्रियापेक्षया शक्तेरपि गुणप्रधानभावो भवतीत्यत आह–प्रधानशक्त्यभिधाने गुणशक्तिरभिहितवत्प्रकाशते, तस्यास्तदनुबन्धित्वादित्युक्तम् । प्रधानशक्त्यनुरोधादित्यादि–अत्रैवोदाहरणान्तरं दर्शयति–यथा च ग्रामो गन्तुमिष्यत इति । ननु गौणाख्यान्नः कर्मणि द्वितीयेत्युक्तम्,

अजां नयति ग्राममित्यादौ तु ग्रामाद्यपेक्षया अजादेः प्रधानत्वाच्च ततो द्वितीया प्राप्नोतीत्याह-इह चेति । क्रियापेक्षमिति-आख्यातपदेनाऽसामानाधिकरण्यं गौणमिति गौणत्वस्य द्वयोरपि कर्मणोर्भावात् क्रियापेक्षं गौणत्वमाश्रितम् । न चिहन्यत इति-देन गौणत्वादवाच्यत्वादपि द्वितीया सिद्धा ।

'क्रियाविशेषणात्' । २ । २ । ४१ ॥ अस्मात्सचेः क्रियाविशेषस्य यत्समानाधिकरणं तस्मादेव द्वितीया । नन्विदं सूत्र प्रथमाधिकारे क्रियतां प्रथमयाऽपि सर्वाण्यपि रूपाणि सेत्स्यन्ति ? उच्यते-पुष्पवास्तमयो पचति शोभन ते मार्गेणादौ विकल्पः प्राप्नोति । निर्गुणा गुणाः क्रिया चेति वचनात् तत्कथं क्रियाया विशेषणस्यमतः ? सत्यमेतत्, किन्तु तद्वातीयस्य द्रव्योपाधिरपेक्षयोत्कर्षो दृश्यते; यथा-शुक्लः शुक्लतरः शुक्लतम इति रूपरसादीनां कला इति प्रविभागप्रकथापकशास्त्रादुत्कर्षापकर्षवृत्तिश्च भवति, तथापाश्चन्तरयोर्मास्वराद्रस्यादितः, "भवेद्वित्रिगुणमाधुर्यमनन्तगुणमथवा, द्रव्यचतुर्गुणोद्भूतमन्यमाम्रफलादिके" ॥ १ ॥ यथा च रूपादीनां तथा क्रियाणामपि परस्परापेक्षया विशेषसम्भवात् शोभनं पचतीत्येव विशेषणयोगः स्यात् । कथमन्यथा पापच्यते, पचतितरामित्यादौ तासामेकरूपत्वात्यदाद्विप्रत्ययविधिः स्यात् । ननु चाऽसत्त्वभूता क्रिया तदुपाधिस्तु सुतरामसत्त्वभूतस्तत्कथं सत्त्वाभिधायिना नाम्ना प्रतिपाद्यत इति, उच्यते-धातुप्रकृतिवाच्याऽसत्त्वभूतैव क्रिया यथा क्रिया शब्देन नामरूपेण सत्त्वरूपापन्ना प्रतिपाद्यते तथोपाधिरूपापन्ना तथा शोभनादि शब्देनेत्यदोषः । मन्दं गन्तेति-मन्दशब्दस्य हि कर्मत्वे "गतेर्नवाऽनाप्ते" इत्यनेन तत्र चतुर्थी स्यात् । यदा गन्तेत्यत्र तृन् तदा मतान्तरेण ग्रामशब्दाच्चतुर्थी । स्वमते तु "कर्मणि कृतः" इत्यनेन परत्वात् षष्ठ्येव भवति । यदा तु तृन् तदा 'तृन्नुदन्त०' इति षष्ठीनिषेधात् स्वमतेऽपि चतुर्थी ।

'कालाध्वनोर्व्याप्तौ' । २ । २ । ४२ ॥ मासस्य मासे वा द्वयहं गुडधाना इति-अत्र सम्बन्धत्वेन द्वितीया मासशब्दात्तु व्याप्तेरभावात् । एवमुत्तरेष्वपि । क्रोशस्य क्रोशे चैकदेशे इति-अत्रैकदेशसम्बन्धात् व्याप्तेः सम्भवेऽप्यध्वनोऽभावे द्वितीया न । अकर्मकस्य इदमिति-अयमर्थो यदा धात्वादि कर्मणा इत्यतः सकर्मको विवक्ष्यते । तदा "कालाध्वभावदेशं वा०" इत्यस्य प्राप्तिरेव नाऽस्ति तत्राऽकर्मणामिति वचनात् । यदा त्वविवक्षितकर्मत्वेनाऽकर्मको धातुर्विवक्ष्यते तदा "कालाध्वभावदेशं वा इत्यस्य प्राप्तावप्यकर्मत्वाभावपक्ष आश्रीयते, कर्मत्वपक्षे हि कर्मणीत्येव सिद्धेः ।

'सिद्धौ तृतीया' । २ । २ । ४३ ॥ सिद्धाविति-यद्यपि विप्रकारा व्याप्तिः

१ २-२-१३ । २ २-२-८२ । ३ २-२-१ । ४ २-२-२३ ।

प्रस्तुता तथापि सामर्थ्यात् क्रियाव्याप्तेरेव सिद्धाविति विशेषणम्। द्वितीयापवाद इति-कालाध्वनोर्व्याप्तेर्विधीयमानत्वात् पूर्वेण द्वितीयायां प्राप्तायां तद्बाधनार्थो योगस्तेन यदु च्यते केचिन्मासेनाऽनुवाकोऽधीत इति करण एव तृतीया इतीद नाऽऽरम्भणीय मिति तदसम्यगिति।

'हेतुकर्तृकरणेत्थम्भूतलक्षणे'। २। २। ४४॥ फलसाधनयोग्य इति-फलं कार्यं तस्य साधनं निष्पादनं करणमिति यावत्तत्र योग्यः सामान्यतो दृष्टसाम र्थ्यः। योग्यग्रहणमन्तरेण फलसाधन इत्युच्यमाने यः फलं साधयति क्रियाविष्टस्तत्र प्रतिपत्तिः स्यात्, योग्यग्रहणेन तु योग्यतामात्रप्रतिपत्त्याऽकुर्वन्नपि तत्फलं हेतुरिति। योग्योऽत्र निर्व्यापारो गृह्यते सव्यापारत्वे तु कर्तृत्वमेव। धनादीनि कुलादिकम कुर्वन्त्यपि योग्यतामात्रेण तृतीयामुत्पादयन्ति। यत्राप्यध्ययनेन वसतीत्यादौ तत्राऽपि क्रियायामभावेऽपि योग्यतामात्रविवक्षितेति हेतावेव तृतीया इत्थंभूतलक्षण इति।

अयं प्रकारः-इत्थं भूयते स्म भवत्येति क्तः, तस्य ग्रहणमिति विग्रहः। स लक्ष्यते येनेति स्वार्थकथनमात्रं। इत्थम्भूतग्रहणमिति-नन्वित्थम्भूतग्रहणं किमर्थं ? यतो लक्षणे इत्युक्तेऽपि अपि भवान् कमण्डलुना छात्रमद्राक्षीदित्याद्युदाहरणानि भविष्य न्ति। अथेत्थं भविष्यन्ति भवन्तो वृक्षं प्रति विद्योतनमित्यत्राऽपि तृतीया स्यात्, तथः यतो "भागिनि०" इति सूत्रेण प्रतिना योगे द्वितीया भविष्यति। एवं सति प्रतेरयोगेऽपि द्योतकत्वाद् वृक्ष विद्योतन स्यात्, न तु वृक्षेणेति ? सत्यम्, इत्थम्भूतग्रहणमेवं ज्ञापयति यत्र साक्षात्प्रतिना योगो भवति तत्र "भागिनि च प्रतिपर्यनुभिः" इति सूत्रेण द्वितीया भवति; अत्र तु वृक्षस्य विद्योतनमित्येन भवति। अपि भवान् कमण्डलुपाणिमिति-"विशेषणसर्वादि" इति सूत्रेण विशेष-णद्वारेण पाणेः पूर्वनिपाते प्राप्ते 'न सप्तमीन्द्वादिभ्यश्च" इति निषेधात् कम ण्डलोः प्राङ्निपातः। ननु वाक्यावस्थायां कमण्डलुशब्दात् किमिति न तृतीया ? उच्यते-वाक्ये भावप्रधानपदेन सामानाधिकरण्यमिति प्रधानत्वेन गौणत्वाभावात्, तर्हि समासे सति कथं न ? उच्यते-तदा लक्ष्यप्रधानत्वाच्च। ननु समासे सति विभ क्त्यन्तवर्णनाशामत्वाभावे नाम्नो विहितायास्तृतीयायाः कथमत्र प्राप्तिः ? नैवम्, नोऽऽमन्त्र्ये" इति प्रतिषेधप्रकरणात्। तद्धि हे राजन्नित्यादिषु नलोपाभावा-र्थम्, तच्च युक्तम्; प्राप्तिपूर्वको हि प्रतिषेधः। अत्र तु 'नाम्नो नोऽनह्नः" इत्यनेन हे राजन्नित्यादिषु विभक्तिद्वारा नामत्वाभावे नलोपप्राप्तिरेव नाऽस्ति, तस्मान्नाऽऽमन्त्र्ये इति प्रतिषेधप्रकरणान्नामकार्यं प्रतिपन्नम्। ततः समासमध्येऽपि

१ १-४-९० । २ १-४-९१ । ३ २-१-५७ । ४ २-२-३५ । ५ ८-२-८ ।

प्राप्तिः, तर्हि धर्मभित इत्यादावपि समासे द्वितीयादिप्रसङ्गः स्यात्? तन्न, कर्मादिशक्तेः सम्बन्धस्य च समासेनैवाऽभिहितत्वात्। तर्हि नामार्थमात्रे प्रथमा भवतु? तदपि न, आख्यातपदसामानाधिकरण्ये प्रथमा। तर्हि नीलोत्पलमित्यादिषु नीलेन सहाऽऽख्यातपदसामानाधिकरण्ये कथं न प्रथमा? उच्यते–तत्राऽपि सामानाधिकरण्यं नाऽस्ति, अन्यथा सापेक्षत्वे समासोऽपि न स्यादिति। तर्हि कथमस्तु पाणिदम्भ्यादुपसर्जनीभूतलक्षणात्तृतीया प्राप्नोति? न। लक्षणस्य प्राधान्ये तृतीया न लक्ष्यस्येति न भवतीति शाकटायनः।

'सहार्थे'।२।२।४८॥ तुल्यः साधारणोऽप्रधानस्य प्रधानेन क्रियादिना यः सम्बन्धः–स तुल्ययोगः, विद्यमानता चेति। ननु च विद्यमानतायामपि तुल्ययोगोऽस्त्येव यथा सहोभयोः सम्बन्धाच्चाहि–'सहैव दशभिः पुत्रैर्भारं वहति गर्दभी' इति सहैव दशभिः पुत्रैः सतीति शक्यं प्रतिपत्तुम्, तत्र विद्यमानता चेति तुल्ययोगात् किं पृथग् निर्दिश्यते? उच्यते–विवक्षितयोगाभावात्, सहैव दशभिरित्यत्र वहनमात्रं विवक्षितं तद्गर्दभ्या एव न तत्पुत्राणां यथा पुत्रेण सहाऽऽगत इत्यागमनमुभयोरपीति तुल्ययोगाद्विद्यमानता भिन्ना।

'यद्भेदैस्तद्वदाख्या'।२।२।४९॥ भिद्यते यस्तु यभिरिति भेदा यस्य भेदिनश्चक्षुरादयो भेदाः काणत्वादिभिस्तद्वच्चक्षुरादिमतः पुरुषादेस्तत्प्रकारवत्त्वयुक्तस्य कोऽर्थः? स प्रकारवानक्ष्यादिरर्थस्तेन युक्तस्य चैत्रादेराख्या निर्देशो भवति, तद्वाचिनोऽक्ष्यादिवाचिनस्तृतीया भवतीत्यर्थः। अक्ष्णा काणः–अक्षि काणं चाऽक्काणं च भवतीति तेन काणत्वादिना भेदेन तद्वांश्चैत्रादिर्निर्दिश्यते। शिरसा खल्वाटः–खलन्त्यपगच्छन्ति कचा अस्मादिति कपाटेत्यादिवदव्ययात् साधुः। प्रकृत्या दर्शनीयः–प्रकृतिः स्वभावस्तद्भेदो दर्शनीयत्वम्, स्वभावो हि दर्शनीयत्वमदर्शनीयत्वं च भवति तद्भेदेन दर्शनीय इति प्रकृतिमानाख्यायते। गोत्रेति " गोत्रम्यूपी० " इति मे प्रायः, तद्भेदो वैयाकरणत्वं तार्किकत्वं चेति तद्भेदेन वैयाकरण इति तद्वानिर्दिश्यते। ननु च प्रकृत्या दर्शनीयः प्रायेण वैयाकरण इति युक्तः प्रयोगः, दर्शनीयत्वं हि प्राकृतं चेत्कृतं चाऽस्ति, वैयाकरणत्वं च प्राकृतमन्यच्च तत्त्वरम्युदासार्थं प्रकृत्या प्रायेणेति चाऽर्थवत्। अथ इत्यादिप्रयोगे स्वरूपस्यादिरव्यभिचारेण प्रतीतेरयुक्तः प्रयोगोऽर्थस्य गतत्वात्, उच्यते–लोकोऽत्र पर्यनुयोक्तव्यो यार्थवतोऽनर्थकतामनयस्य प्रतीतेऽपि शब्दान् प्रयुङ्क्ते, लोके च न सर्व एव शब्दमधिकृत्य शब्दान् प्रयुङ्क्ते, यदा शब्देऽधिकृत्य प्रयोगेऽभ्युपचरितार्थनिवृत्तिरस्या इत्यादिप्रयोग प्रयोजनं? भरत, अथ काणो न सूपकार

१ ५ १ १४।

मेति। गोत्रेण काश्यपः, काश्यपो माठर इति च गोत्रभेदस्तेन गोत्रमानास्पायते काश्यप इति। भेदग्रहणं किं ? यदि भेदग्रहणं न क्रियते तदा यन तद्वदास्येस्पुच्यमान षष्ठीः प्रवेश्य इत्यत्रैव स्यादत्र हि षष्ठ्यादिना तद्वानुपधारणाऽऽस्यायते, अक्ष्णा काण इत्यादौ च न स्यात्; न ह्यत्राऽक्ष्यादिशब्देन तद्वानिर्दिश्यते। अक्षि काणं यस्य ति—काणशब्देन हि अक्षिभेदेनाऽस्यास्ययायते न तद्वानेत्रादिः। षष्ठीनिवृत्यर्थं तु वचनमिति—यथापि न विधेयमेतत्सूत्रं मा भूत् कत्रादौ तृतीया, इत्थम्भूतलक्षणस्वा दत्यादेर्मेविष्यति, यदाह—" इत्थम्भूतस्य काणस्य लक्षणं ह्यक्षि युज्यते। ततस्तृतीया तेनैव तत्र सूत्रेण सिध्यति ॥ १ ॥" अत्रोच्यते—अक्ष्यादेरित्थम्भूतस्य काणा विलक्ष्यस्य भेदाभावाल्लक्षणत्वानुपपत्तिर्यथाहोपोवकरः—

" लक्ष्यलक्षणभावो हि, भेदे सत्युपपद्यते।
यथा छात्रकमण्डल्वोश्छात्रोपाध्याययोर्यथा ॥ १ ॥"

'काले भासवाऽऽधारे'। २। २। ४८॥ कालयति प्रक्षिपति पर्यायान् द्रव्येष्विति स्वार्थिकप्रत्यया नार्थविवर्तन्ते, प्रकृतिलिङ्गवचनानीति—कालेऽपि नक्षत्र शब्दो नक्षत्रलिङ्गसंख्य एव। पुष्येण पायसमश्नीयात्—पुष्येण चन्द्रयुक्तेनत्यादि प्रक्रियायां पुष्यशब्द काले वर्तते। पयसि संस्कृतं मत्स्यं संस्कृते मत्स्ये " अम्। पयसा सस्कृतमिति तु कृते तृतीयाधिकारनिबेधितेन " संस्कृते " इति सूत्रेण इकणेन भवति। अध्वनि मा भूदिति—अत्र विशिष्टतारकावच्छिन्नं क्षेत्र पुष्यमघादिशब्दौ वर्तेते, न काल इति। चित्रा मासविकृति—यद्यपि चित्राशब्दो मासविकायां वर्तमानः कालम प्युपाधित्वेनोपादत्ते। यतश्चित्रासु जाता या सा चित्रेति विशेषणत्वेन प्रतीयमानत्वात् कालेऽपि वृत्तिः सम्भाव्यते। तथापि तत्र कालस्य गौणत्वात् गौणमुख्ययोः मुख्ये कार्यसम्प्रत्ययात्र भवति। स्वावच्छिन्ने काले इति—स्वनाऽस्मनाऽवच्छिद्यते विधि यते पलितलच्छेदविलपुष्पविशिष्टः कालः। कोऽर्थो ? यत्र काले तिलाः पुष्पन्ति तिलानां छदम भवतीत्यर्थः।

'प्रसितोत्सुकाभ्यद्धैः'। २। २। ४९॥ ननु प्रसितशब्दस्य गुणगुणवचनस्य क्रियार्थस्य च सम्भवादुभयार्थस्याऽपि ग्रहणप्रसङ्ग इत्याह—साहचर्यादिति।

'व्याप्त्येऽग्निद्रोणादिभ्यो वीप्सायाम्'। २। २। ५०॥ द्रिद्रायेन धान्यं क्रीणातीति—द्रोणो मानमस्य धान्यस्य " मानम् " इतीकण्, तस्य " अनाम्न्य० " इति लुप्। यद्वा द्वौ द्रोणौ मेयमस्य धान्यस्य, कोऽर्थोऽनेन धान्येन द्वौ द्राणौ

१ १-१-१४ । २ ६-४-३ । ३ ६-४-१६९ । ४ ६-४-१४१ ।

मीयेते यदा इकण् नाऽऽगच्छति मेयवाचित्वात् द्रोणस्य । यद्वा द्वयोर्द्रोणयोः समाहारो द्विद्रोणम् । पात्रादित्वात् स्त्रीत्वाभावः । अत्र द्रोणो व्रीहिराशौ व्रीहिरितिवत् द्रोण-शब्दो मेयवृत्तित्वेन धान्यस्य समानाधिकरणो द्विद्रोणशब्दः । एवं पञ्चकेन पशून् क्रीणातीति–पञ्चेति संख्यामात्रमस्य "संख्यायाः संघसूत्र०" इति यथा विहिता "संख्यायास्तेभ्या०' इति कः, पञ्चकं पञ्चकं सह पशून् क्रीणातीत्यर्थः । पञ्चकं पञ्चकमि-त्यत्र पशुसामानाधिकरण्येऽपि पञ्चकशब्दात् प्रायशः मतु इत्यभिदेकवचनम् । द्विद्रो णादय इति–आदिशब्दस्य प्रकारार्थत्वात् येभ्यो वीप्सायां प्रयोगे तृतीया गम्यते ते द्विद्रोणादयः, न तु गर्गादिवत् सन्निविष्टा इति ।

'समो ज्ञोऽस्मृतौ वा' । २ । २ । ५१ ॥ संजानीते इति–संप्रतेरस्मृतावि त्यात्मनेपदम् ।

'दामः सम्प्रदानेऽधर्म्ये आत्मने च' । २ । २ । ५२ ॥ नन्वनेन ब्राह्मणेन दानं प्रवृत्तमित्यादिवत् सम्प्रदानस्य करणत्वविवक्षायां दास्या सम्प्रयच्छत इत्यादौ तृतीयोत्पत्तेः किमर्थमिदमारभ्यते ? यद्वा सहार्थे इयं तृतीया । दास्यै स्वयं धनं ददाति साऽप्यात्मानं तस्मै ददातीति । दानपूर्वके सम्भोगे दाण् वर्तते । दास्या सह सम्भुङ्क्ते इति । एवं चाऽत्र क्रियाव्यतिहारोपपन्नत्वाद्व्यारणेनैवाऽऽत्मनेपदम् । अत्रोच्यते–एवं हि धात्वन्तरेऽपि विनाऽपि समुपसर्गेणाऽधर्मत्वाभावेऽपि स्यात् । ब्रूम वृषल्या सम्प्रयच्छत इत्यत्राऽपि सम्प्रदानविवक्षायां चतुर्थी स्यात् । अत एव चतुर्थीप्रत्युदाहरणेषु च तृतीया मा भूदित्येवमर्थमिदं वक्तव्यम् । विवक्षयाऽपि न सिध्यति । विवक्षानियमो हि विना वचनेन दुरधिगम इतीदमारभ्यत इति । ननु सम इति परदिग्योगलक्षणा पञ्चमी तत्र "पञ्चम्या निर्दिष्टे" परस्य तथाऽनन्तरस्येति प्रसक्तव्यवधाने न प्राप्नोतीत्याह–इह संपूर्वस्येति । यद्वा सम इति पूर्वत्र पञ्च-म्यन्तमपीह कल्पवशात् षष्ठ्यन्तं विज्ञायते । तत्र व्यवधानेऽपि समा योऽस्यमानार्थ-त्वात् दामः सम्बन्धोपपत्तेर्भवत्येव विधिः ।

'तादर्थ्ये' । २ । २ । ५४ ॥ यूपाय दारु–अत्र यूपादिहेतुभूतस्य दारुविशेषे तृतीया नाऽयौगत्वात् ।

'रुचिक्लृप्त्यर्थधारिभिः प्रेयविकारोत्तमर्णेषु' । २ । २ । ५५ ॥ मूत्राय क-ल्पते यवागूः–यवागूः कर्त्री सम्पद्यत किं मूत्रं ? मूत्ररूपमित्यर्थः । ननु मूत्रयवागू शब्दयोर्द्वयोरपि सम्पद्यत इति क्रियया सह सम्बन्धाद् गौणत्वाभावात् कथं मूत्रशब्दा-

१ १-४-१ ३ । २ १-४-११ ।

चतुर्थी ? उच्यते—एतस्यात्रसामर्थ्यविवक्षाऽत्र गौणमुख्यभावेन क्रियासम्बन्धात् मूत्रस्य गौणत्वम्। तथाहि—प्रथमं यवाग्वाः सह क्रियायाः सम्बन्धः पश्चान्मूत्रस्येति। गौणादिति व्याख्यानुदाहरणे तु मूत्रादर्शिशेष्यार्थे मूत्रादिकं प्रथमं क्रियया सम्बन्धनीयम्। यद्वा मूत्रायेति कोऽर्थः ? मूत्ररूपविकारसम्बन्धित्वेन यवागूः सम्पद्यत इत्यर्थः। चैत्राय शतं धारयति—ध्रियते तिष्ठति स्वरूपाभ्रच्यवनं शतं कर्तृ, तत् ध्रियमाणं, प्रयुङ्क्त इति णिच्, अपरपठितचुरादौ वा।

'प्रत्याङ्भ्यां श्रुवोऽर्थिनि' । २ । २ । ५६ ॥ याचितोऽयाचितो वेति—अयमत्या याच्यमानं महत्त्वादयाच्यमानोऽपि प्रतिजानीत प्रतिपद्यतेऽभ्युपगच्छतीत्यर्थः ।

'प्रत्यनोर्गृणाख्यातरि' । २ । २ । ५७ ॥ आचार्यं गृणातीति—आचष्ट इत्यर्थः, अत्राऽऽचार्यमाचक्षाणमिति प्रतिपत्तव्यम्, अन्यथा प्रसङ्गविकलता स्यात्।

'यद्वीक्ष्येराधीक्षी' । २ । २ । ५८ ॥ निमित्ता विद्यमानुपलम्भादस्मिन् वस्तुनि सादृश्यादिनिमित्तादनेकपक्षालम्बनानवधारणात्मिका मतिर्विमतिः, सन्देहज्ञानमिति यावत्। तत्पूर्वकं निरूपणीयम्। अदृष्टमिष्टानिष्टफलं पुण्यपापरूपमप्रत्यक्षं पराभिप्रायादिकं वा। विप्रश्नविषय इति—विचारविषयो दैवादिलाभालाभादिर्वा। क्रियाऽपीति—पर्यालोचनादिका। तस्य दैवमिति—शुभाशुभमित्यर्थः। दैव एवास्य इति—न तदभिप्रायादावित्यर्थः। राधीक्ष्योर्योगाभावादिति—एवं तर्हि मैत्राय राध्यतीत्यादावपि सम्बन्धाभावान्न स्यात् ? न, तत्र मैत्रेणैव सह राधीक्ष्योः सम्बन्धो विवक्षितोऽन्यस्याश्रुतत्वात्। राधीक्ष्यर्थधातुयोगेऽपीच्छन्त्येके इति—पाणिन्याद्याचार्याः, मैत्राय राध्यतीति राधिश्चुरादिरपरपठितोऽत्र गृह्यत इच्छन्ति पाणिन्यादयः।

'उत्पातेन ज्ञाप्ये'। २ । २ । ५९ ॥ उत्क्रम्य प्रसिद्धं निमित्तं पततीति पाद्युत्कात् सोपसर्गादपि "... " इति णः। निमित्तं द्विधा जनकं ज्ञापकं च। यत्र तादर्थ्यं तत्र जनक एव हेतुः, यथा रन्धनाय स्थाली। अत्र तु तादर्थ्याभावात् ज्ञापक एव हेतुः, षष्ठ्यपवाद इति—ज्ञाप्यज्ञापकसम्बन्धविवक्षायामित्यर्थः।

'श्लाघह्नुङ्स्थाशपां प्रयोज्ये'।२।२।६० ॥ 'युजण्' सम्पर्चने, प्रयोज्यत इति "ये एवाऽत्र" इति च प्रयोक्तुं ज्ञाप्य इति वा, 'कर्मदे०' इति घ्यणि, " निर्माणुजः शक्ये " इति गत्वाभावे, द्वितीया प्राप्तौ वचनम्। मैत्राय निह्नुते—अत्र ' श्लीप्सायाम् " आत्मनेपदं स्थानेनाऽऽत्मानं ज्ञापयतीति। मैत्राय शपते— " शप उपलम्भने " इत्या

---

१ ४-१-६३ । २ ४-३-२४ । ३ ४-४-३५ । ४ ४-३-११६ । ५ ३-१-६४ । ६ ३-१-३५ ।

रमनपदम् । यथा मात्रादिप्रतीरस्यतन नाऽहं जाने न मया कृतमिति मैत्रं ज्ञापय तीत्यर्थः । कथयतीति भोजनाकाङ्क्षायनाः । यस्तु मैत्रादिज्ञानन् ज्ञाप्यते तत्र न भवतीति । तथा चाऽन्यथा ग्रन्थ श्लिकमकोऽयं ज्ञापितस्तत्र कथयत्से आख्यापयते तद् ज्ञाप्य सम्प्रदानत्वेन प्रतिपन्नाः । कथयत आख्यापयते तमिति ।

‘ तुमोऽर्थे भाववचनात् ’। २ । २ । ५१ ॥ भवन भावः ‘ भावकर्त्रोर्घञ् ” पचतीति भवतीतीति वा ‘ स्थानिम्यः कर्तरि ” अनट् । भावस्य वचनो भाववचनस्तस्मात् । पाकायवति–पक्तुं पक्ष्यत इति वा वाक्ये ‘ भाववचनाः ” इति घञादयः ।

‘ गम्यस्याप्ये ’। २ । २ । ५२ ॥ गम्यो यद्यपि अप्रयुज्यमानः प्रयुज्यमानश्च भवति । अप्रयुज्यमानश्चाऽप्रकरणशब्दान्तराभिधानैः प्रतीयमानार्थः स च गम्य इत्युच्यते । एधेभ्यो व्रजति–नयनार्थं व्रजतीति तादर्थ्य एव चतुर्थी भविष्यति किमनेन ? उच्यते–अन्यथा एधाहरणार्थतायामिति न सिध्यति ।

‘ गत्तेनयाऽनाप्ते ’। २ । २ । ५३ ॥ गतिशब्दस्य ज्ञानाद्यर्थत्वेऽप्यनाप्त इति वचनात् पादविहरणरूपेण गतिर्गृह्यते । ज्ञानादिष्वाप्यस्याऽनाप्तत्वस्यासम्भवादित्याह–गतिः पादविहरणमिति । स्त्रियं गच्छति–भजनार्थोऽत्र गमिर्न गत्यर्थ इति न चतुर्थी । पन्थानं गच्छतीति–अनाप्तमप्राप्तं कर्मापि चतुर्थी, पन्थास्तु सम्प्राप्त इति चतुर्थ्यभावः । चतुर्थी पत्यन्त इति निभान्तन्यासकृता यशोनन्दी ।

‘ मन्यस्यानावादिभ्योऽतिकुत्सने ’। २ । २ । ५४ ॥ न त्वां तृणाय मन्ये पुस्यति स्यजस्तृणादप्यमानमिति “ नौम्युपान्त्य ” इति क सूत्रम् । न त्वा नाव मन्य, नानादश तत्पदर्शनेनाऽनुमतश्चाः । अथ नावमपारस्यन्तापकारकरणात् कथमतिकुत्सनं गम्यत इत्याह–नावमपोरपीति । परम स्वच्छयाऽभिमतं स्थान पराधीनतया स्यात् प्रकर्षेण नीयते इति परप्रणयस्तस्य भावः परप्रणयता । अनापादान्ध्येवादिभिरिति–आदिशब्दात् पतनस्तनिनगरसादिभिः । कुत्स्यतेऽनेनेति–शुष्मशब्दोऽपि मन्यस्याप्यत्वात् पथ चतुर्थी प्राप्नोतीत्याह–शुष्मवा न भवतीति । कृत्सामावश्यपीच्छन्त्यके इति पाणिन्यादय । परस्यास्वष्टीति–“ कर्मणि कृतः ’ इत्यनेन तत्सम्बन्धित्वे षष्ठी । शुष्मच्छब्दात्तु “ वैकत्र द्वयोः ” इति षष्ठीनिषेधात् द्वितीया । यदा तु शुष्मदयन्तः “ कर्मणि कृतः ” इत्यनेन नित्य षष्ठी तदा तृणशब्दात् “ वैकत्र द्वयोः ” इत्यनेन विकल्पेन षष्ठी । तद्विकल्पे च चतुर्थ्यपि । न त्वा तृणाय मन्ता तृणस्य मन्ता तृणं मन्ता वेति । चतुर्थ्यपीति कथमिति–भक्तिरपशाकादौ तृणमिदम । “ कर्मणि कृतः ” इत्यनेन

१ ४-१-१८ । २ १-११६ । ३ ? १-१३ । ४ ? ? ५२ । ५ १-२-८१ । ६ ? ? १-८५ ।

षष्ठीप्राप्तौ " बहुव्रीहयोः " इत्यस्य तु पक्षे सिद्धेवेति । न त्व सुखो मन्यसे । अत्र विप्रपणविप्रप्यभावेनोभयमपि कम उक्तम् । यथा कटः क्रियन्त वीरणानि ।

'हितसुखाभ्याम्' । २ । २ । ५४ ॥ इति आतुरायपि, 'तुर' त्वरणे, पठितो त्वरोत्यादौ गृह्यन्ते ।

'मद्रभद्रायुष्यक्षेमार्थार्थेनाशिषि' । २ । २ । ५६ ॥ मद्रक्षेमार्थयोरन्यत्रैकार्थ्ये ऽपि क्षेममापदोऽभावो भद्रं सम्पदुत्कर्ष इत्यर्थभेदाद् द्वितयोपादानम् । आयुष्यमस्तु चैत्रायेति—आयुः प्रयोजनमस्य घृतादेरायुष्यं घृतादि । तच्च दायमायुरस्तु चैत्रायेत्यादौ चतुर्थी न प्राप्नोति । यत आयुःशब्देन जीवितमयाऽभिधीयते न तु जीवितकारणं घृतादिक, उच्यते—कार्ये कारणोपचारात्, यथेन्द्रः स्थूणा । यदा त्वायुरव भेषजादि स्वार्थे ष्यण्यायुष्यशब्दो निष्पाद्यत तदा निर्विवाद सिद्धमेव । तद्ग्रहणमिति—तर्हि प्रागप्यर्थग्रहणमस्तु, सत्यम्; तदर्थानामाशिषि नियमार्थमिदम् ।

'परिक्रयणे' । २ । २ । ५७ ॥ वेतनादीति—आदिशब्दान्नाटकादिपरिग्रहः । करणाश्रयणं किमिति करणाश्रयण विना परिक्रीयतेऽस्मिन्नित्यनया व्युत्पत्त्या मासा दपि स्याच्चतुर्थी । एताय परिक्रीतो मासमिति—क्रीत इति रूप कर्मणि कर्तरि वा, तथा- हि—परिक्रीयते स्म परिक्रीतः कः ? कर्मतापन्नश्चैत्रः, क मासं ? कोऽर्थो मासे; यद्वा परि क्रीणीते स्म कर्तरि क्तः कर्मणोऽविवक्षितत्वात् । अथाऽत्र मासमिति कर्म विद्यत तत्कथ कर्तरि क्तः ? उच्यते, मासमित्यत्र ' कालाध्वभाव० " इत्यननाऽऽधारस्य युगपत्कर्म संज्ञाऽकर्मसंज्ञा च, तत्र कर्मसंज्ञायां कर्मणि द्वितीया, अकर्मसंज्ञायां तु कर्तरि क्तः ।

'शक्तार्थवषड्नमःस्वस्तिस्वाहास्वधाभिः' । २ । २ । ६८ ॥ पृथग्योगा दादेति निवृत्तमिति—अत्र कश्चित् सामस्त्येन पृथग्योगाः कश्चिदेकदेशेन सम्भवति । अत्र तावदेकदेशेन, तथाहि—हितसुखाभ्यामित्यनेन स्वस्तिशब्दस्यैकयोगाकरणात् । एकयोग च कृतेऽन्वादेशमार्यां हितसुखस्वस्तिभिरित्यनेन आशंसायां तु तद्भद्रेत्यनेन, तदिति पूर्वसूत्रपरामर्शेन क्षेमद्वारेण मा विकल्पः सिद्ध एव, तदकरणादिति विकल्प मित्यर्थः । ननु कथमत्रैकदेशेन पृथग्योगा न सामस्त्येन ? उच्यते—तद्भद्रेत्यत्र व्य भिचारात् । तथाहि तद्ग्रहणमत्रत्यप्राऽर्थपरो निर्देशोऽयं तु शब्दपर एवेति । " परिक्रयणे " इत्यनेन त्वेकयोगत्वं न व्याख्येयमधस्ताऽभ्यन्तः । तत्र हि परिक्रयण वर्तमानामाम्न इत्युक्तम् । अनेन त्वेकयोग वषडादिवत् परिक्रयणशब्दस्वरूपपरिग्रहः स्यादिति । परस्ताभित्यमवेति ननु " स्पर्धे " परः समानविषयो स्वप इति समानविषयत्वं,

१ १-१-८५ । २ १—२-११ । ३ १-१-६० ।

“ चतुर्थ्या० ” इत्यस्य दर्शयति, तथाहि—स्वस्ति वाक्यायेत्यत्र वाक्यसत्वेनाऽऽशीरता पाचक्यस्यानमिदमिति स्वस्तिचतुर्थ्यां अवकाशः। क्षेमं भूयात् सङ्घायेत्यत्र तु क्षेम चतुर्थ्यां अवकाशः। स्वस्ति प्रजाभ्य इत्यत्रोभयप्राप्तौ परत्वादाशिष्यपि नित्यं स्वस्ति चतुर्थी भवतीत्यर्थः। नमसेति—यत्राऽस्तु नमसा योगः तत्रापि नमः शब्दस्याऽर्थवतो ग्रहणादनर्थकयोगे न भवति। अत्र हि नमस्यधातुरर्थवान् तु तदेकदेशो नमः शब्द इति। अथवा पदान्तरसम्बन्धानपेक्षणादन्तरङ्गया द्वितीयया कारकविभक्त्या उपपद विभक्तिस्तदपेक्षणाद्बहिरङ्गा चतुर्थी बाध्यते। ‘उपपदविभक्तेः कारकविभक्तिर्बलीयसी’ ति न्यायात्। ननु कारकविभक्तिरपि क्रियापदापेक्षणीति कथमन्तरङ्गा? नैष दोषः कारकस्य क्रियामात्रसम्बन्धाव्यभिचारात्। यथैवमिति—कारकविभक्त्या द्वितीयया बाध्यमाना कथमत्र चतुर्थीति प्रश्नार्थः।

‘ आङाऽवधौ ’। २। २। ७० ॥ प्रवृत्तस्य यत्र निरोधः स मर्यादा। मर्यादाभूतमेव यदा क्रियया व्याप्यते तदाऽभिविधिः। पाटलिपुत्रमवधीकृत्येति—एतावानर्थ आङा द्योत्यते।

‘ अपपरिभ्यां वर्ज्ये ’। २। २। ७१ ॥ वर्ज्यवर्जकसम्बन्धः अपपरिभ्यां द्योत्यत इति, “ वर्जनस्य परिवर्जने ” इत्यनेन परिपरीत्यत्र द्वित्वम्। अपशब्दो मैत्रस्य—अपगतः शब्दात्। तत्पुरुषस्य पूर्वपदप्रधानत्वात् पूर्वपदेन अप इत्यनेन सह मैत्रशब्दस्य योगोऽस्तीति, न वर्ज्य इति व्यावृत्तेस्तत्रविवक्षता। अत्र मैत्र शब्दात् मा भूत्।

‘ यतः प्रतिनिधिप्रतिदाने प्रतिना ’। २। २। ७२ ॥ प्रतिनिधीयत इति—प्रतीतः सन् मुख्यस्थाने निधीयत—आरोप्यते—सदृशः क्रियते इति तात्पर्यार्थः। तुल्यजातीयेनाऽतुल्यजातीयेन वा विशोधनमिति शेषः। प्रद्युम्नो वासुदेवात् प्रति। पुम्भिर्मीयते पुंस्त्वनिम्नो भाक्तो रित्’ प्रद्युम्नः सदृशः क्रियते, केन सह? वासुदेवे नति “ तुल्यार्थे ” इति तृतीयाषष्ठ्योः प्राप्तिः। भेषीः कापति प्रसभचक्षुवेति भेषिक स्वस्मात् प्रतिना पञ्चम्याः ” इति तत्। तिलेभ्यः प्रतीति—प्रयच्छति प्रददाति, कान् माषान्? कथम्भूतान् प्रति? प्रतिदानभूतान्, केषां तिलानामिति प्रतिशब्दात् द्वितीयैकवचनम्। प्रति सिञ्चति—सिचिरिह दाने, नाऽत्र सिचः प्रतिना योगोऽपि तु सर्पिष इति “ सेवाक्षेनि इत्यनेनोपसर्गत्वाभावान्न षत्वम्।

‘ आख्यातर्युपयोगे ’। २। २। ७३ ॥ नियमपूर्वकेति—नियमो विद्याग्रहणार्थं

१ ७-४-८ । २ कथा २६६ । ३ १-२-११६ । ४ ७-१-८७ । ५ १-१-४ ।

गुरुशुश्रूषादिकं शिष्यसमाख्यायते न तूपयोगमात्रं, यत उपयोगमात्रं नटादपि भवत्यतस्तस्मादपि स्यात्पञ्चमी । आगमयतीति–आगम गृह्णाति णिज् यदुक्तं, आग च्छन्तं वा प्रयुङ्क्ते । प्रत्ययमिति–प्रतीयमेक निमित्त तेन युक्तः ।

'गम्ययपः कर्माधारे' । २ । २ । ७४ ॥ एवमिहाऽपीति–अयमर्थः–प्रासादा भिःसृत्याऽपक्रम्य चक्षू रश्मिद्वारा प्रेक्षते, प्रासादाभिःसरता चक्षुषा कृत्वा देवदत्तः प्रेक्षते वा; ततोऽपक्रामति । अयमर्थः–ततः प्रासादेस्तच्चक्षुरादि अपैति निस्सर तीति तस्याऽपायेऽवधिभूतत्वादपादाने पञ्चमी सिद्धैव । अनपक्रामतीति–एतच्चैया यिकमतामिप्रायेणोक्तं, ते हि प्राप्यकारीणीन्द्रियाणि मन्यन्ते । ईक्षेर्वर्तनादिति–ईक्षेरिति कोऽर्थः ? दृशिसमानार्थस्य ईक्षेरित्यर्थः ।

'प्रभृत्यन्यार्थदिक्शब्दबहिरारादितरैः' । २ । २ । ७५ ॥ दिशि दृष्टाः शब्दा "मयूरव्यंसक०" इति दृष्टलोपः । दिशि ये वाचकत्वेन दृष्टास्ते इह दिग्शब्दा इति विज्ञायन्ते, न तु दिशि वर्तमाना एव तेन दिशो वाचकत्वेन दृष्टस्य शब्दस्य देशे काले आदिशब्दात् भावे द्रव्ये च वृत्तावपि तद्योगे पञ्चमी । ग्रीष्मादारभ्येति–आरभ्येति क्रान्तमक्रान्तमव्यय वा । प्रागेव "क्षेपिरक्षिवाम्" इति स्वार्थे ईनः नपुंसकत्व तु सामान्यभावेन, तथा वर्तते किं तत्कम् प्राचीन किं तत् आम्रा इति । अञ्चसन्तयोगे यथा प्राग्ग्रामादित्यादौ पञ्चमी तथाऽत्राऽपीति कश्चित् सुधेत् तं प्रत्या ह–न्यग्भैक्ष्यस्येति न्यक् उपसर्जन यथा भवत्येवमस्थित इत्यर्थः । अन्यार्थात् भिद्यते इति–अयमर्थोऽन्य इति प्रकृतिविलक्षणोऽर्थ उच्यते, इतर इति च दृश्यमानप्रतियोगी त्यर्थः । छात्राणामिति–छात्राणामवयवानां योऽवयवश्छात्रस्तस्मात्पूर्वं छात्रमामन्त्रय स्वेति पूर्वत्व छात्रान्तरापेक्षं न छात्राणामिति समुदायापेक्षम् । कायस्य पूर्वमिति–का यस्याऽवयविनो यद्वायान्तरं किं विशिष्टं पूर्वं कस्याः सकाशाभावेः । कायस्य सम्ब न्धि पदवयवान्तरं पूर्वं तस्य नाभिरूपेणाऽवयवान्तरम सह सम्बन्धः ।

'गुणादस्त्रियां नवा' । २ । २ । ७७ ॥ जडस्य भावो द्व्यादित्वात् टयण्, परिस्पावस्य भावः "पैतिपजान्त०" इति टयण् ।

'आरादर्थैः' । २ । २ । ७८ ॥ दुरान्तिकार्थैरेव योग इति–कथं पठते, किं तत्, कर्ते दूरं, कस्य ग्रामस्य ? किम्भूतं दूरं स्थितं, दूरशब्दनेन ग्रामस्य सम्बन्धो विवक्षितो न तु स्थितशब्देन, असत्त्ववचनैरिति धर्ममात्रवाचिभिः, कारकद्वयत्वात् षष्ठी प्राप्तौ वचनम् ।

---

१ १-१-११६ । २ ७-१-१ ७ । ३ ७-१-१ ।

'स्तोकाल्पकृच्छ्रकतिपयादसत्त्वे करणे'। २। २। ७९॥ यतः स्तोकत्वादेर्निमित्तस्याद्रव्ये विशेष्ये स्तोकादिशब्दप्रवृत्तिः, स गुणोऽसत्त्वं शब्दस्य प्रवृत्तिनिमित्तमित्यर्थः। तेनैवेति–असत्त्वरूपेणाऽयमर्थस्तिरोहितधनादि विशेष्यं स्तोकादिरूपेणैव सामान्यात्मनाऽभिधीयमान धनादिरूपव्यापृत्तं स्तोकादिरूपापन्न द्रव्यं गुणः क्रिया वा यदा प्रतीयते तदा द्रव्यापसत्त्वमिति। स्तोका मुक्त इति–"असत्त्वे ङसेः" इति पञ्चम्यलुप्। असत्त्ववाचित्वादिति–द्रव्यस्यैव विशेषसंस्यायोगित्वादिति शेषः। द्वित्वबहुत्वासम्भवे इति–एकत्वनिबन्धनैकवचनस्याऽप्यसम्भवे औत्सर्गिकमेकवचनम्, स्तोकादिशब्दानां स्तोकार्थाभिधायकत्वेनाऽसत्त्ववाचित्वात् क्रियां प्रति साधकतमत्वाभावात् करणत्वाभावे कथमनेन पञ्चमीत्याशङ्कायाममीषां पूर्वाचार्यप्रसिद्ध्या करणत्वमाह–यद्वा स्तोकेन शत्रुणा मुक्तः पञ्चीत्यादौ मोचनामोचनलक्षणं क्रियाद्वयं विद्यते। यदा स्तोकेन मुक्त इति–कोऽर्थः ?, किञ्चिन्मुक्तः किञ्चिदमुक्त इत्यर्थः। तत्र कस्याचाः क्रियाया अपेक्षयाऽत्र करणसंज्ञेत्याह स्तोकस्यादि, स्तोकस्याऽभिनिर्वृत्ति निष्पत्ति स्तोकस्य चाऽनिर्वृत्तिमनिष्पत्तिमाश्रित्य स्तोकादीनां करणत्वप्रसिद्धिमाचक्षते पूर्वाचार्याः।

'अज्ञाने ज्ञः षष्ठी'। २। २। ८०॥ वेति निवृत्तम्। मिथ्याभिमतिविधानादिति शेषः। सर्पिषो जानीते॰ "कः" इत्यात्मनेपदम्। अत्र करणस्य सम्बन्धविवक्षया सर्पिष इदं ज्ञानं नाऽन्यस्येति षष्ठी सिध्यतीति किमर्थोऽयं योग इत्याह तृतीयापवादो योग इति–अयमर्थः, सिध्यति षष्ठी किन्तु करणविवक्षायां तृतीया मा भूदित्यय योगः। सर्पिषामिति–माक्षगव्यमाहिषाणां घृतानामित्यर्थः।

'शेषे'। २। २। ८१॥ क्रियाकारकपूर्वक इति–क्रिया च कारकं च क्रियाकारके ते पूर्वे यस्य स तथा यथा राजपुरुषः। राजा कर्ता पुरुष बिभर्ति अतो राजपुरुष इत्युच्यते। कर्मादिविवक्षालक्षण इति कर्मादिभ्योऽन्य इति तु विशेषेभ्योऽन्यत्वं विवक्षितं न तु सामान्यादनाभिन्नविशेषात् कारकादपि। अश्रूयमाणक्रियो यथा राजपुरुष इत्यादि, श्रूयमाणक्रियो यथा न मापायामश्नीयादित्यादि। अस्येदं शब्दस्य यो भावः प्रवृत्तिनिमित्तं स भावो रूप यस्य स सम्बन्धविशेष इति–अर्सव धातु भिद्यमानः सम्बन्धः सम्बन्धविशेष उच्यते, यावता सम्बन्ध इत्युक्तेऽपि सिध्यत्, विशेषज्ञापनायोक्तम्। प्रथमापवाद इति–एकद्विबहुष्विति संख्यामात्रमुपादाय नाम्नः प्रधानाद प्रधानाच सामान्येन प्रथमा विधीयत तत्राऽय षष्ठीविधिर्बाधिकेति, विशेषमुपादाय प्रवर्तमानत्वदपवादो भवति।

'रिरिष्टात्स्तादस्तादसतसाता'। २। २। ८२॥ परस्तादिति–परा परा वा

१ ३-१-१। २ ३-१-४२।

प्रकृतिस्ततः " परोऽवरास्त्यात् " " सर्वोभयोऽस्यादौ " इति पुम्भावः । दक्षिणपश्चादिति–दक्षिणा च साऽपरा च दक्षिणाऽपरा तस्यां वसति । रिप्प्रभृतयः प्रत्ययाः स्वार्थिका दिक्शब्देभ्यो विधीयन्तेऽस्तस्तदन्ता अपि दिक्शब्दा एवेति ' क्षेपे " इत्यस्याऽपवादः । " मैत्रसम्न्यार्थ० ' इति पञ्चमी विधीयते । अत एव दक्षिणा ग्रामाद्रमणीयं, दक्षिणाहि ग्रामाद्रमणीयमिति " षष्ठी० " इति प्रत्ययद्वयप्रयोगे षष्ठी न लभ्यते इत्याह पञ्चम्यपवाद इति ।

' कर्मणि कृतः ' । २ । २ । ८४ ॥ द्वितीयापवाद इति, " कर्मणि " इत्यनेन प्राप्तायाः । पुत्रपौत्राणामिति–पुत्रस्याऽपत्यमनन्तरं " पुनर्मूपुत्र० " इति अण् । पुत्रस्य पौत्राः पुत्रसहिताः पौत्रा वेति विग्रहः, द्वन्द्वे तु ' गवाश्वादिः ' इति समाहृतिः स्यात् । पिबतीति पिबः, " घ्राध्मा० " इति शः । कृत इति किं ? अयमर्थः, ननु कर्म कारकं तच्च क्रियामन्तरेण न सम्भवति । यतः क्रियायाः कारकं कारकं भवति । क्रिया च प्रत्ययसहितं धातुमाक्षिपति, धातोश्च द्वये एव प्रत्यया विधीयन्ते त्यादयः कृतश्च । तत्र "न यन्ति०" इत्यादि ज्ञापकात् त्यादिप्रयोगे द्वितीयाविधानात्कृत् प्रयोग एव षष्ठी भवति किं कृद्ग्रहणेनेति ? नैवम्, कृद्ग्रहणमन्तरेण तद्धितप्रयोगेऽपि यत्कर्म तत्राऽपि षष्ठी स्यादित्यभिप्रेतार्थं कृद्ग्रहणम् । कृतपूर्वीकटमिति–वर्तते कः ? कर्ता कृतपूर्वी पूर्वे कृतवानित्यर्थः । कः ? कृतपूर्वी कटम् । तत्र यथा चित्रगुरित्यादौ बहुव्रीहिणा स्वामिसामान्येऽभिहिते विशेषाभिधानाय चैत्रादिः प्रयुज्यते तथाऽत्राऽपि सामान्यकर्मण्यभिहिते विशिष्टकर्माभिधानाय कटादेः केनाऽनभिहितस्य द्वितीयान्तस्य प्रयोगः । कथमिति–त्यागोऽस्याऽस्तीति इनि तद्धित–प्रत्ययेऽर्थस्येत्यादि कर्मणि षष्ठी न प्राप्नोत्याशङ्कार्थः । ' पुंसनुज " इति विनम् । ' "क्षीण् दधि० " इति ' मैत्स्वरोरिम् " इति यथाक्रमं त्यागीत्यादिषु प्रत्ययाः ।

' वैकत्रद्वयोः ' । २ । २ । ८५ ॥ द्वयोः कर्मणोरिति–ननु कृत इत्यस्यैव षष्ठ्यन्तस्य द्वयोरिति कस्मान्न विशेषणं, तत्राऽपि हि द्वयोः कृदन्तयोरेकं यत्कर्म तत्र षष्ठी वा भवतीत्ययं सूत्रार्थो घटते, तथा च अपां स्रष्टा भेत्ता च भेत्र इत्यादावेव विकल्पः स्यादिति, नैवम्, एवं सति कर्मणि कृतो द्वयोश्च वेत्येकमेकयोगं कुर्यात् । एवं च सति एकस्य कृतः कर्मणि नित्यं षष्ठी भवति द्वयोस्तु कृदन्तयोर्वा भवतीति सूत्रार्थे मम स्वार्थस्य सिद्धत्वात् । तस्मात् पृथग्योगात् कर्मण एव विशेषणं न कृत इत्यस्य ।

---

१ ७-२-११६ । २ ३-२-११ । ३ २-२-७५ । ४ ७-१-११ । ५ १-२-८१ । ६ १-१-४ । ७ १-१-३१ । ८ १-१-१४७ । ९ ४-१-३८ । १० १-४-१६१ । ११ ५-२-५ । १२ ५-१-७२ । १३ ५-१-७१ ।

अन्यत्रेति–यतः “ कर्मणि कृतः ” इत्यनेन द्वयोरपि कर्मणोः षष्ठी प्राप्ता यथेऽनेन निषिध्यते । अपाया नगास्पृश्यमिति, एकत्रेति सामान्येन निर्देशात् प्रधानाप्रधानकर्मणोरविशेषेण ग्रहणमित्युभयत्रैवोदाहरति । ननु कर्मणीत्यविवक्षितत्वादेकवचनस्य च सद्वितीयपञ्चम्यपेक्षत्वादेकत्रेत्युक्तेऽपि द्वयोः कर्मणोरेकतरस्मिन्निति गम्यत एव किं द्वयोरित्यनेन ? नैवम्, एवं सति ‘ प्रधानाप्रधानसन्निधौ प्रधाने कार्यसंप्रत्यय ’ इति न्यायात् प्रधान एव कर्मणि स्यात् । यद्वा गौणादित्यधिकाराद् कर्मणिपक्षेऽपि गौण कर्मण्येव स्यादिति द्वयोरपि प्रधानाप्रधानकर्मणोः पर्यायेण षष्ठीविकल्पार्थं द्वयोरित्युपादानमित्यदोषः ।

‘ कर्तरि ’ । २ । २ । ८६ ॥ आसितुं पर्यायः, “ पर्यायात् ” इति णकः, आसिका । आसनं, आसना “ णिवेत्ति ” इत्यनः ।

‘ द्विहेत्तोरकस्पणकस्य वा ’ । २ । २ । ८७ ॥ नित्यं प्राप्त इति–“ कर्तरि ” इत्यनेन । सक्तिवमिति–सक्त संघने च सक्तीति “ सर्पेः ” इति बहुवचनादुः । संपृक्तन्ते स्तोकयम्यैर्वद्भ्योऽर्था अस्यामिति, “ सम्भ ” इत्यधिः । अगोपालकेनेति–पालयतीति णकः, गवां पालकः ‘ येन जीविकाजीवे ” समासः । अन्तर्धौ येनाऽदर्शनमिच्छतीति–पञ्चमीविधायकं पाणिनिसूत्रमिदम् । अस्य चाऽयमर्थः–अन्तर्धौ अन्तर्धिनिमित्ते सति चाऽऽत्मनः कर्मतापन्नस्य येनोपाध्यायादिना कर्तृभूतेन यददर्शनं तदिच्छतीत्यर्थः । भिन्नकर्तोरिति–ननु पाक इत्यत्राऽपि “ भावाकर्त्रोर्घञ् ” प्रादुर्भाव इत्यत्राऽपि स एव तत्कथं भिन्नकर्तोरित्युच्यते ? सत्यम्, धातुभेदापत्त्याऽपि भेद इत्यदोषः । भेदिका चैत्रस्य मैत्रस्य काष्ठानामिति–भेदयितु पर्याय इत्येव कार्ये, भावे तु “ भि वेत्ति ” इत्यनेनाऽनप्रत्यय एव स्यात् ।

‘ कृत्यस्य वा ’ । २ । २ । ८८ ॥ गेयो माणवको माधानामिति–अत्र ग्या इत्येर्माधानामित्यत्र कर्मणि साफल्यं, माणवकस्तु अमौणत्वात् प्राप्तिरेव नाऽस्ति ।

‘ नोभयोर्हेतोः ’ । ९ । २ । ८९ ॥ ननु द्विकर्मकेषु धातुषु तावदयं प्रतिषेधस्तत्रैवोभयप्राप्तिसम्भवात् । तत्र प्रधानकर्मणः कृत्येनैवाभिहितत्वात् षष्ठ्यविषयत्वाद ‘ प्रधानाप्रधानसन्निधौ प्रधान एव सम्प्रत्यय ’ इति न्यायात् तस्यादिषु अप्रधानादप्यप्रसङ्गात् कर्तर्येव प्रतिषेधो न्याय्य इत्युभयग्रहणमतिरिच्यते, नैवम्; द्वितीया षष्ठ्यभावि हि कृत्ययोगे षष्ठी विधीयते । द्वितीया चाऽप्रधानाद्यथा भवति तथाऽत्र षष्ठ्यपि

१ २-२-३ । २ ५-१-१२ । ३ ५-१-१११ । ४ २-२-८६ । ५ उच्च १६ । ६ उच्च १३८ । ७ १-१-४१ ।

भविष्यति । उपस्थानीयः पुत्रः पितुः—उपतिष्ठते " प्रवचनीयादयः " इति कर्त्तर्यनीयः, अत्र पितुः शब्दात् कृत्यस्य वेति कर्त्तरि षष्ठी, द्वितीये तु उपस्थीयते मैत्र्यादेवार्थेति आत्मने इति कर्मणि तव्यानीयौ ' कर्मणि कृतः " इति पुत्रात् षष्ठी ।

' तृन्नुदन्ताव्ययक्वस्वानातृश्शतृङिणकचखलर्थस्य ' । २ । २ । ९० ॥ " कर्मणि कृतः ", " कर्त्तरि " इति च प्राप्तायाः षष्ठ्या अपवादः । पायं पायं—" ख्णम् चाऽभीक्ष्ण्ये ", ' भृश० " इति द्वित्वं च । भोक्तुं व्रजतीति—अत्र हेतुहेतुमद्भावे तृतीया, ' तुमोऽर्थे० " इत्यनेन चतुर्थी वा । सम्बन्धविवक्षायां षष्ठी वा । आहरिष्यतीति ' क्रियायां० " इति णकचि आहारकः ।

' कृयोरसदाधारे ' । २ । २ । ९१ ॥ ननु सन्मात्रार्थस्तत्र धातुरेव वर्तते कृत्प्रत्ययस्तु " कर्त्तरि " इत्यादिना कारके भावे च विधीयते । तत्र सति प्रत्यय विधिरेव नाऽस्ति कथं प्रतिषेधः ? सतोऽन्यस्मिन्नर्थे इति, नैष दोषः, सदर्थसहचारी प्रत्ययोऽपि सन्नित्युच्यते । यद्वा धात्वर्थोऽपि सन्निति प्रत्ययत एव विज्ञायते । नहि धातुतः क्रियालक्षणो धात्वर्थो भूतो भवन् भविष्यन्निति वा ज्ञातुं शक्यः । धातुर्हि क्रियामात्रमाह न त्वस्य विशेषम् । स तु प्रत्ययादेव प्रतीयत इति कालविशेषकारकैरपि प्रत्ययः सतीति विज्ञायते । कथमिति—शीलितो मैत्रेयेत्यादावपि " ज्ञानेच्छा० " इति क्तो वर्तमानताप्रतीतिरप्यस्ति तत्कथं निषेध इत्याशङ्कार्थः । भूतेऽप्य क्त इति—यदयं भूत क्तः कथं वर्तमानताप्रतीतिः ? उच्यते—वर्तमानमध्ये भूतो भविष्यंश्च कालोऽस्ति, अतो भूते क्तः । यथा कटं करोतीत्यत्र कटस्य येऽवयवा निष्पन्नास्तदपेक्षयाऽतीतत्वं ये च निष्पद्यमानास्तदपेक्षया वर्तमानत्वं ये च निष्पत्स्यन्ते तदपेक्षया भविष्यत्त्वम् । अहेः सुप्तमिति—सदाधारादन्यत्र धातुः शब्द भवति, यदा कर्त्तरि क्तस्तदा इममहिः सुप्तो देश यदा कर्मणि तदाऽयमहिना सुप्तो देशः । भावे तु ' षा क्लीबे " इति वा षष्ठ्यामहेः सुप्तमहिना सुप्तमिति । अक्रमवाराणसीमिति—वरणा चाऽसिश्च वरणासी नद्यौ ते विद्येतेऽस्यां " अभ्रादिभ्योऽप् " । पृषोदरादित्वात् ह्रस्वदीर्घव्यत्ययेऽसन्नत्वात् स्यात् । यद्वा वराण इति वीरणाख्या वरणास्तृणविशेषाः सन्त्यस्यां " तृणादेः सल्, " " सिध्मन्त्वनि " इति ङीत्वे वराणसाया अदूरभवा ' निवाससादूर० " इत्यण् ।

' एष्यदृणेनः ' । २ । २ । ९४ ॥ शतं दायी—शतं धारयन् ददाति । " णिन् चाऽऽवश्यका० " इति णिन् करोषीति हरसीति पूर्ववद् णिन् ।

---

१ २-२-८३ । २ २-२ ८६ । ३ ५-४-४८ । ४ ७-४-७२ । ५ २-२-६१ । ६ ५-१-११ ।
७ ५-२-९१ । ८ २-२-९१ । ९ ६-२-८७ । १० ६-२-८३ । ११ ६-२-९६ । १२ ५-४-११ ।

तेन दामाम सप्तमी । नहि दाम्नार्या छपनक्रियेति । द्वीपिनमिति–द्विधा गता आपो यत्र “ ऋक्पूः० ” ‘ द्व्यन्तरुपसर्गे० ” द्वीपमस्याऽस्ति इन् । अत नन्तः पुलिङ्गः । यदा तु द्वीपमाचष्टे णिचि ‘ ‘चिपिना० ” इति निपात्यते तदाऽकारान्तः, अभिधानद्वीपि नामिति प्रतिपदपाठात् पुंद्वीपः । कुञ्जौ दन्तावस्य स्तो ‘ मेध्यादिभ्यो र० ” । पुष्प छादीति ब ज्ञातायां विवक्षायां क च । वृक्षस्य पादाविति–अत्रत्यत्र पादलक्षणेन कर्मणा वृक्षस्य योगो हेतुत्व नाऽस्तीति ।

‘ अप्रत्यादावसाधुना ’ । २ । २ । १०१ ॥ इहाऽऽदिशब्दस्य व्यवस्थावाचि त्वात् प्रति परि अनु अभि इत्येत एवाऽप्रत्यादावित्यनेन ग्राह्याः । ननु साधुशब्देन सदाचार उच्यते । आचरणं च क्रियाविषयमिति मातृशब्देन तस्या परिचर्यादिक्रिया उच्यत इति मातृपरिचरणादिक्रियाणां सम्यगाचरिता मातरि साधुरित्युच्यते तथैपरि त्वनाऽसाधुर्मातरीति । ततश्चाऽसाधुर्मैत्रो मातरीति मातृशब्दस्य साधुत्वस्य निषेधा ख्यप माता साधोर्योगादन्तरङ्गत्वादुत्तरणैव सिद्धा सप्तमी किमनेनेति ? नैवम् । पदान्तरसम्बन्धादेकपदवर्तित्वेन नञ्शब्दस्य चास्याऽन्तरङ्गत्वादसमर्थनञ्समासस्य च निषतविषयत्वादर्थान्तराभिधायि ना नञ्समासेनैव मातुः सम्बन्धो युक्तोऽत्रापि मानपेत्यादिवत् ।

‘ साधुना ’ २ । २ । १०२ । इत्युत्तरेण न सिध्यतीति वचनम्, नन्वभियोगे “ लक्षणवीप्स्ये० इत्यनेन प्रत्यादियोगे तु ‘ भीगिनि० ” इत्यनेन च द्वितीयाया विशेषविधानात् सप्तमी न भविष्यति किमप्रत्यादावित्यनेन ? सत्यम् असाधुशब्दा भावे द्वितीया चरितार्थेति प्रत्यादिप्रयोगे सप्तमी स्यात् ।

‘ निपुणेन चार्चायाम् ’ । २ । २ । १०३ ॥ अर्चायामिति–अर्चिम् अर्चने ‘ मीपिभूपि० ” इत्यम्, बहुवचनात्–मातरि निपुणः । अत्र मातरि सुष्ठु वर्तत इति मैत्रादेः प्रशंसा गम्यत इति ।

‘ स्वेशेऽधिना ’ । २ । २ । १०४ ॥ इधितव्य इति–यथाद विनियोज्ये । यद्येकपरिमाणस्वस्वामिसम्बन्धयोर्योगैकत्वेऽपि स्वेश इति वचनादत्र स्वस्वामिवाची गृह्यते । तत्रेति–सम्बन्धस्योभयनिष्ठत्वे युगपदुभयत्र सप्तमी स्यादित्याह–यद्यैकत्वेन ति–अधिमगधेष्वित्यादिषु ‘ विभक्तिसमीप० ” इति नाऽव्ययीभावो विभक्त्यर्थत्वा भावात् । यतो विभक्त्यर्थः कारकम् । अत्र च षष्ठ्यपवादः सप्तमीति न विभ क्त्यर्थत्वम् । यदि च समासः स्यात्तदा वाक्यं निवर्तेत नित्यसमासत्वात्, अधिस्त्रि

१ ७-१-७६ । २ ३-३-१ १ । ३ उणा २६४ । ४ ७-१-२६ । ५ २-२-१६ । ६ १-२-१७ । ७ ५-१-१ १ । ८ ३-१-१९ ।

इत्यादिवत् । यदा तु सप्तम्यर्थ एवाऽविवक्षितस्तदाऽऽऽध्ययनमपीभाव एवाऽन्वयन्ति प्रयोग इति । नन्वत्र क्रमेण परस्परमाधाराधेयभावविवक्षायां पर्यायेण सप्तम्यपि करण एव सप्तमी भविष्यतीति किमनेनेति ? सत्यम् । सम्बन्धविवक्षया षष्ठ्यपि स्यादित्याह–षष्ठ्यपवादो योग इति ।

‘ उपनाधिकिनि ’ । २ । २ । १०५ ॥ अत्र यदधिकं तदधिकिन्याश्रयि स्याधारविवक्षायां सप्तमी सिद्धैव परं पूर्ववद्विभक्त्यन्तरबाधनार्थम् । अधिके निष्कस्येति–साधुर्भूम्यो राजा इतिषभिष्कशब्दस्याऽधिकशब्देन सह सम्बन्धाभावात् “ अधिकेन भूयसस्ते ” इत्यनेन निष्कशब्दात्र पञ्चमी ।

‘ यद्भावो भावलक्षणम् ’ । २ । २ । १०६ ॥ कलापो मात्रेष्विति–कलापो मालवकप्रसिद्धोऽपमधान्यविशेषो मानमयां स्यात्, “मात्रट्” इत्यनेन मात्रट् । यत्रेति–अयमर्थो यत्र श्रद्धानां दरिद्राणां च भुक्तिक्रियामासनक्रियां च प्रति यथार्हस्य कारकत्व कोऽर्थस्तां प्रति कर्तृत्व, तद्विपर्ययोऽकारकत्व च तत्राऽपि भावो भावस्य लक्षणमित्यनेनैव सप्तमी सिद्धति यदन्यैः क्रियार्हाणां कारकत्व तद्विपर्ययो वा यत्र क्रियानर्हाणामकारकत्व, कारकत्व वेति सप्तमीविधायकं सूत्रद्वयं कृत तन्नाऽऽरम्भणीयम् । यस्य भावो भावस्य लक्षणं ततो भाववतः सप्तमीष्यते यद्ग्रहणमन्तरेण चेतन लभ्यते इत्याह–यद्ग्रहण प्रकृत्यर्थमिति–यो जटाभिरुपलक्षितस्तस्य भोजनमित्यत्र न भावो भावस्य लक्षणमिति तु द्रष्टव्यम् । तृतीयापवाद इति–इत्थम्भूतलक्षणेऽर्थे ।

‘ गते गम्येऽध्वनोऽन्तेनैकार्थ्यं वा ’ । २ । २ । १०७ ॥ कुशामिवपर्यमवीधुमत इत्यादिलक्षणाद्विवक्षितस्य यथापरिच्छेदस्य योऽध्वनोऽवसानं साङ्काश्यायन्तः । यद्भाव इति यस्याऽध्वनश्चतुर्योजनरूपस्य भावेन गमनरूपयाऽपरो भावः साङ्काश्यभवनरूपो लक्ष्यते तस्मात्यर्थः । यत्रोऽर्थो द्रष्टव्यम् क्रमेदोऽभिधानं यस्य स एकार्थस्तस्य भाव एकार्थ्यम् । तद्विभक्तिरिति–अन्यथैकविभक्तिमन्तरेण सामानाधिकरण्यं न घटते । यथामी भीस्तां दधाति ‘ पृक्तादपि इति किमु । सोऽत्राऽस्ति मतुः । अम्युत्सयो वा मतीधुमच्छब्दः । गव्यूतिरत्राऽस्ति विषयतयाऽपयविषया वा, ‘ गोर्भ्यादिभ्यः ऊः, गव्यूतं क्रोशयुगम् । नन्वन्तनति–चतुष्पु योजनेषु यत्साङ्काश्यं तत्त्वारि योजनानि ।

‘ षष्ठी वाऽनादरे ’ । २ । २ । १०८ ॥ सप्तम्यामनादरप्रतीतिरपरकरणा दरिद्रधनदत्ताम याच्यपाठकमासोऽस्तीति किं ? पक्षे सप्तम्यर्थेन न वा शब्देनेति ? उच्यते–यथाऽनादरादन्यत्र मात्यतः सप्तम्यस्ति । एवं “ स्वे ” इत्यनेन षष्ठ्यपि,

---

१ ३-२ १११ । २ ७-१-१८५ । ३ उज ११ । ४ ७-२-४६ । ५ ३-१-८१ ।

तत्रोभयत्राऽपि प्रभवन् स्वधाऽपि लोकेन निवर्त्यमानस्तत्रोद्वनमनादृत्य ग्रामाज्जीवेदित्यनादरः प्रकरणादेः प्रतीयत इति समानेऽर्थे षष्ठी सप्तमी चाविहितेति पक्षे तदर्थं वा वचनम् ।

'सप्तमी चाविभागे निर्धारणे'। २। २। १०९॥ क्षताद्त्रायते “ सोपा० ” इति कः पृषोदरादित्वाद्धलोपे क्षत्रं तस्याऽपत्यं “ क्षत्राद्घः ” क्षत्रियः पुरुषाणामित्यादिषु क्षत्रियत्वजातिरस्यं जात्या कृष्णत्वगुणेन, धावनक्रिययाऽविशुम्भात् युधिष्ठिरः प्रभृतिसंज्ञया च निर्धारणम् । ननु निर्धार्यमाणस्याऽवयवस्य समुदायाभ्यन्तरत्वात्तत्र समुदायस्याऽधिकरणविवक्षायां वृक्षे शाखेतिवत्सप्तम्याः सिद्धत्वात्, सम्बन्धविवक्षायां त्ववयवस्य वृक्षस्य शाखेतिवत् षष्ठ्या अपि सिद्धत्वात्किमनेनेति ? नैवम् विभागे प्रतिषेधार्थत्वादस्य, ननु सर्वत्रैव निर्धारणस्य विभागरूपत्वेनाऽविभागपूर्वकत्वादविभागग्रहणस्य निरर्थकत्वादविभागग्रहणसामर्थ्यादवधारणमाश्रीयते । अविभागो यत्र शब्दत एव प्रतीयते तत्र निर्धारणे सप्तमीषष्ठ्याविति । यथा क्षत्रियः पुरुषाणां पुरुषेष्वित्यत्र निर्धार्यमाणस्य क्षत्रियस्य पुरुषशब्दात्पुरुषत्वेनाऽविभागप्रतीतिः । तेन माथुराः पाटलिपुत्रकेभ्य आढ्यतरा इत्यत्र न भवति । न ह्यत्र केनचित्प्रकारेण माथुराणां पाटलिपुत्रकेभ्योऽविभागः शब्दतः प्रतीयते । नहि पाटलिपुत्रका माथुरा नाऽप्याढ्यतरा इति शब्दाद्भेद एव प्रतीयत इत्याह—शब्दाद्गम्यमान इति—गवां कृष्णेत्यादौ विभज्यमाना गौर्गोत्वेन समुदायादविभक्ता कार्ष्ण्येन तु विभक्ता तस्माद्विभज्यमानस्यैकदेशस्य विभागाश्रयस्य च समुदायस्य यत्र विभागाविभागौ स एवाऽनयोर्विषयः । यत्र तु तयोर्विभाग एव न कथञ्चिदैक्यं तत्र पञ्चम्येव भवति अत एवाऽऽह—पञ्चमीबाधनार्थमिति । अयमर्थनिर्धारणस्य विभागरूपत्वादस्य हि यतो विभागस्तस्य तदपेक्षयाऽवधिरूपत्वादपादानत्वात् ' पञ्चम्यपादाने ” इति पञ्चम्यां प्राप्तायां यत्राऽविभागोऽपि तत्र तदपवादो योग इत्यर्थः ।

' क्रियामध्येऽध्वकाले पञ्चमी च ' । २ । २ । ११० ॥ इहस्थोऽयमिति—नन्विष्वास इति धनुरुच्यते । यथाऽक्रूरात्रो महेष्वास इति । महानिष्वासो यस्येति व्युत्पत्तेः । धनुष क्षेपणे करणं कर्ता तु मैत्रादिस्तत्कथमुक्तमिष्वासो विध्यतीति ? उच्यते—इष्वास इति क्रियाशब्दोऽयमिति । यः कमिदिषूनस्यति क्षिपति स मैत्रादिरप्युच्यते, यद्वा करणत्वेऽपि करणस्य स्वातन्त्र्यविवक्षायामिष्वासो विध्यतीत्युपपद्यत एव । यथा स्थाली करणस्य कर्तृत्वविवक्षायां स्थाली पचतीत्युच्यते । अथ युक्तेति—नन्विहस्थोऽयमिष्वास इत्यादि क्रियाभवात् युक्तमिदमुदाहरणम् । इदं त्वयुक्तमिदमुदाहरणम् । इह स्थयुक्तमऽयमक्रा मुनिरभ्यहाक्राकति भुजिक्रियाया एकत्वात् ?

१ ४-१-१४१ । २ ६-१-९१ । ३ २-३-२९ ।

सत्यम् । गमिक्रियाया एकस्या अपि कालभेदाद्भेदस्य सिद्धत्वादाधारो हि तस्या भिद्यते । अधिकरण एव सप्तमीति-क्रियाश्रयस्यावस्थितस्याऽऽत्मनोऽधिकरणत्वात् सप्तमी सिद्धा क्रोशैकदेशस्याऽधिकरणत्वात् क्रोशस्याप्यधिकरणत्वस्य वक्तुं शक्यत्वात्, ग्रामे पूर्वं इत्यत्र तु पूर्वशब्दस्य वस्तुपरिच्छेदकस्तत्र मोकेस्त्वर्थाभावात्पक्षे विकल्प्य सप्तमी सिद्धा । पञ्चमी त्वात्मनोऽपादानत्वात्, क्रोशाभिर्यन्त्रकैः शरैर्लक्ष्यं विध्यतीत्यर्थावगमात् । कालात्तु " गम्यस्यापः० " इति क्रोशमतिक्रम्य मोकेरर्थ-प्रतीतेः किमर्थोऽयं योग इत्याशङ्कार्थः । यथा च नगरनिर्गमनस्य धनुरपादानं तथा क्रोशोऽपि तस्मादपि हि ते निर्गच्छन्ति । यद्वा क्रोशस्थं धनुरपि क्रोशेनाऽभिधीयते उपचारात् मञ्चाः क्रोशन्तीतिवत् ।

अस्यैवेति-अपादानस्याऽऽधारस्य चेत्यर्थः । फलभूतेति क्रियाकारकसम्बन्धो हि कर्तृ करोतीत्यादावप्यस्ति, तद्व्यवच्छित्त्यै शेषसम्बन्धलक्षणा फलभूता कार्यभूतेव ताऽवस्था इत्युक्तम् । षष्ठी मा भूदिति वचनमिति-अयमर्थो यदा मोचनभवनयोः कालाध्वनोः क्रियाकारकत्वं शेषसम्बन्धित्वमेव केवलं विवक्ष्यते न त्वपादानाधि-करणत्वे तदा ताभ्यां षष्ठ्येव स्यादिति सूत्रारम्भः । किञ्च यदा ग्रामक्रोशशब्दौ ग्रामक्रोशावेव न तदेकदेशविषयौ तदा नाऽपायो नाऽप्याधारस्तेति षष्ठी प्राप्नोति, किञ्च क्रोशं वाहयित्वा विध्यति, ग्रामं वाहयित्वा मोचेति वा प्रतीतेर्द्वितीया प्राप्नोति तद्बाधनार्थोऽयं योग आरभ्यते । इतौ तु षष्ठी मा भूदिति षष्ठीग्रहणमुपलक्षणार्थम्, तेन द्वितीयाऽपि मा भूदित्यर्थः सिद्धो भवति ।

' अधिकेन भूयसस्ते '। २। २। १११ ॥ भूयस इत्युपादानादधिकशब्दे नाऽल्पीयानपोह्यत इत्याह-सामर्थ्यादिति-अत्राऽधिकाधिकिसम्बन्धस्य विद्यमानत्वात्तादीयत्वात् "शेषे" इत्यनेन षष्ठी प्राप्नोति तथाऽधिकशब्दस्य कर्मसाधना-व्याप्यार्थत्वात् कर्मणीति द्वितीया च । अतस्तयोर्बाधिके सप्तमीपञ्चम्यावनेन विधीयेते ।

' तृतीयाऽल्पीयसः ' । २। २। ११२ ॥ सामर्थ्यादिति अल्पीयस इत्युपादानात्कर्मसाधनो भूयोऽर्थोऽधिकशब्दः प्रतिपत्तव्य इति । कर्तरि तृतीया सिद्धैव षष्ठीबाधनार्थं तु वचनम् ।

' भास द्वितीया च '। २। २। ११४ ॥ न घट विक्रियत इति-विपातिभिः कर्मभिरित्यर्थः । विक्रियत इति कर्मण्येव प्रयोगः । कर्मकर्तरि तु ' भूषार्थ ' इति किरादित्वात् यक्प्रतिषेधः स्यात् ।

---

१ ३-३-७४ । २ २-२-८१ । ३ १-४-११ ।

'विना ते तृतीया च'। २। २। ११५॥ विनेति तृतीयान्तमव्ययम्। आयः करणविन्यासः प्राणस्योर्ध्वं समीरणम्।

स्थानानामभिघातश्च, न विना शब्दभावनाम्" ॥ १ ॥

'तुल्यार्थैस्तृतीयाषष्ठ्यौ'। २। २। ११६॥ न तुल्यार्था इति-तुल्यादयो हि धर्मिमात्रवाचकाः, तुला उपमादयस्तु तुल्यत्वादिधर्मवचना इति न तुल्यार्थाः। गौणाधिकारादिति-प्रधानाद्गोशब्दाच्च भवतीत्यर्थः। तुल्यार्थताऽपि नाऽस्तीति चकारेण परिहारान्तरं समुच्चीयत इति ज्ञेयः। नन्वनन्तरात्पूर्वसूत्राचृतीयाऽनुवर्तते एव स्तुल्यार्थैरिति तद्विकल्पे कृते "शेषे" इत्यनेन शेषलक्षणा षष्ठी सिद्धैव किमर्थं तद्विधानमित्याह-तृतीयेत्यादि। गवां तुल्यः स्वामीति-गवां स्वामी गवां तुल्य इत्यर्थः। यदास्मत्स्वामी गवां तुल्य इत्यर्थो विवक्ष्यते तदा गोशब्दस्य स्वामिशब्देनाऽयोगात्सप्तमीप्राप्तिरेव नाऽस्ति।

'द्वितीया चञ्चाबेनेनानञ्चेः'। २। २। ११७॥ पूर्वेणेति-पूर्वस्यामदूरवर्तिन्यां दिशि "अदूरे एनः"।

'हेत्वर्थैस्तृतीयाद्याः'। २। २। ११८॥ प्रत्यासत्तेरिति-हेत्वर्थैस्तु व्यधिकरणाद्धेतुसम्बन्धे पञ्चम्येवाऽस्ति। न तत्र तृतीयाद्या इति सामर्थ्याल्लभ्यतेऽर्थः समानाधिकरणाद्धेतोरपि तृतीयाद्या भवन्तीति। न तु परसूत्रेण सर्वा विभक्तय इति सर्वविभक्त्यन्तर्गतत्वात्तृतीयाद्या अपि सिद्धाः किमर्थमिदमित्याह? असत्यार्थमिति-हेतोस्तृतीयायां, "अंशाद्धेतोः" "गुणादस्त्रियां०" च पञ्चम्यां प्राप्तायामयं विधिरारभ्यत इति।

'सर्वादेः सर्वाः'। २। २। ११९॥ प्रियाः सर्वे यस्येति बहुव्रीहौ इत्यर्थयोगेऽपि न सर्वा विभक्तयः,अन्यपदार्थप्रधानत्वेन सर्वादेर्गौणत्वात्। गौणे शब्दे च मुख्ये कार्यसंप्रत्ययः। कर्मधारये परमसर्वं हेतु यतीत्यादि तु भवति। '<u>ग्रहणवता नाम्ने</u>'ति नोपतिष्ठतेऽत्र।

'असत्त्वारादर्थाट्टाङसिङ्यम्'। २। २। १२०॥ असत्त्व आरादर्थः, न विद्यते सत्त्वं यस्य स चाऽसौ आरादर्थश्च वा। गौणादिति निवृत्तम्-विभक्तिसम्बन्धस्यावधिप्रत्ययावित्यर्थः। अत्र हि यदीनि वचनान्युपात्तानि, न तृतीयाद्या विभक्तयः। दूरेण ग्रामस्य ग्रामाद्वा-इत तदिति सर्वनामप्रत्ययमर्थयोग्यार्थाभिधायकत्वे ऽप्येतेषां धर्ममात्रेण प्रयोगाद्नसत्त्वरूपार्थाभिधायकत्वं न विरुध्यते। तथाऽत्र ग्रामशब्दात् "कार्यैः" इति वा पञ्चम्यां पक्षे "शेषे" इति षष्ठी। अन्तिकार्थे

१ १-१-८१। २ ७-१-११२। ३ २-१-७६। ४ १-१-७७। ५ १-१-७८।

गोदौ खलतिक वनानीति—खलतीति “ कृदिक० ” इत्यादिना निपात्यत इत्याम्नायः। खलतिकाख्यपर्वतसमीपवर्तिवनानामपि खलतिक इत्याख्या । हरति रोगानिति “ हृश्याभ्यामि० ” इति के हरीतकी । पञ्चालाश्च मथुरा च पञ्चालमथुरे । श्रीयत उपश्रीयते कुमैरिति चञ्चा । “ चिमेर्वोऽश्चैश्चौ ” अभिमत रूप यस्याऽभिमत रूप्यते वा मभि रूप्यो मनुष्यश्चञ्चेव अकिञ्चित्करत्वात् । अनुपतीति—अनुयास्यनुमन्यतीत्यर्थः । अनुसर्तव्येति—लिङ्गानि च संख्याश्च तास्ताश्च लिङ्गसंख्याश्च तासामुपादानं तस्य व्यवस्था साऽनुसर्तव्या । नन्वाप इत्यकस्यामपि अलकणिकायां बहुवचनान्तोऽपशब्दः प्रयुज्यते, दाराशब्दश्चैकस्यामपि योषिति पुलिङ्गो बहुवचनान्तः । एव गृहशब्दोऽप्ये कस्मिन्नपि गृहे । एवं वषा इत्येकस्मिन्नपि ऋतौ । एव पञ्चाला इति बहुवचनान्तेनै कोऽयं उच्यते जनपदस्तत्र बहुत्वाभावाद्बहुवचनायोगः यद्यसौ बहुत्वसंख्यायोगी स्यात् तदैकवचनानुपपत्तिर्जनपद इत्येकत्वाभावात् । न चैकोऽयं एको भवति अनेकश्च विरोधात् । कथञ्चित्तयाऽभावे तूभयमप्युभयसंख्यायोगि स्याच्च चैतदिष्यत इति ।

एवं गोदौ ग्राम इति द्वित्वैकत्वनियमायोगः । खलतिक वनानीत्येकवचनान्तेन बहुमिधानमनुपपन्नम् । तथा हरीतक्यः फलानीति स्त्रीनपुंसकयोर्लिङ्गयोरयोगः । तथा पञ्चालमथुरे इत्यनुत्तरपदस्य देशद्वयेर्बहुविषयस्य बहुवचनाभावप्रतिषेधानुपपत्तिः । एवं चञ्चाभिरूप इत्यादावपि चञ्चादिलिङ्गता स्यादित्यत्र यत्नः कर्तव्यः । येन सर्वं समञ्जसं स्यादित्याशङ्कायामाह—सर्वलिङ्गसंख्यं वस्तुनीत्यादि—सर्वाणि त्रीण्यपि लिङ्गानि सर्वाश्च एकत्वद्वित्वबहुत्वलक्षणाः संख्या एकस्मिन्नेव वस्तुनि सन्ति । तथा हि वस्त्वर्थो मात्रेति शब्दाः सर्वत्र वस्तुतश्च घटवस्तु घटार्थो घटमात्रेति प्रवर्तन्त इति लिङ्गानि दृश्यन्ते । गुणगुणिद्रव्यपर्यायावयवावयविरूपं वस्तुनि घट इत्यमेदविवक्षा यामेकत्वसङ्ख्या । गुणगुणिनौ द्रव्यपर्यायौ अवयवावयविनौ घटौ नैकैकमात्र इति द्वित्वसंख्या । गुणपर्यायावयवानां बहुत्वाच्चद्भेदविवक्षायां गुणाश्च गुणी च गुणगुणिनो घट इति बहुत्वसङ्ख्या । न चैतदेकस्मिन् वस्तुनि स्याद्वादानुपातिनि विरुद्धं स्यात् । यतः कथञ्चिदिति वादः स्याद्वादलक्षणादि—स एवाऽयं मैत्र इत्याजन्ममरणमविच्छेदः प्रतीयत एव मेवमात्र वस्तु । बालोऽप न युवा युवाऽप न बाल सुप्तोऽप्य नोत्थित उत्थितोऽयं न सुप्त इति विच्छेदश्च प्रतीयत, तथाऽमदमात्र, न च तयोर्भेद एव । मैत्रो बाल्ये मैत्रो युवेत्येकत्वेन प्रतिभासनात् । गौरश्च इतिवद्भेदप्रतिभासाभावादेकान्तेन चाऽमेदेऽन्यतरविलोपः । तथा च भेदाभेदप्रतिभासायोगः । न चाऽन्यतरस्य मिथ्या त्वमितराविनाभावात् तस्मादन्तरालावस्थं वस्तु तदतस्याद्वादानुपातीति नाऽत्राऽनेकरूपता

---

१ उणा ५ । १ । २ उणा ७६ । ३ उणा १२१ ।

विरुध्यते यदेवं क्रमाक्रमभाव्यनेकभेदात्मके वस्तुनि सर्वमुपपद्यते । तत्राऽत्र इति नैकस्यां व्यक्तौ प्रवर्ततेऽपि तु बहुव्यक्तिविषय एव । एवं दारादयोऽपि पुंलिङ्गाः । यथा द्वौ व्रय इति भेदविषया एव । नकैकविषया, एकविषयत्वेऽपि गुणपर्यायापेक्षभेदोपादाना द्वस्तुसामर्थ्यात् बहुत्वोपपत्तिः । एवं पञ्चालाः इति वस्तुशक्तिसामर्थ्यात्स्वपरव्यवहारेण प्रवर्तते । जनपद इति समुदायद्वारेण । एवं गोदौ ग्राम इत्यादावप्येकानेकत्वस्योपपत्तिः । हरीतक्यः फलानीति लिङ्गभेदश्च सर्वलिङ्गत्वाद्वस्तुनः । पञ्चालमधुरे इति पञ्चालादीनां बहुत्वविषयाणां समासे उत्तरपदादन्यत्र समुदायाभिधानं न त्ववयवाभिधानमिति बहुत्वाभावः । नियतविषयाश्च शब्दशक्तयो भवन्ति । यथा राज्ञः पुरुष इति वाक्ये राजशब्दो विशेषणादियोगिनमर्थमाचष्टे वृत्तौ तु तद्विलक्षणं राजपुरुष इति । पञ्चाभिरूपो मनुष्य इति-सारूप्यान्मनुष्यशब्देन तद्रूप यत्र विशेषणयोगि । पञ्चालादिशब्दानां च क्षत्रियाद्यर्थवृत्तीनामपि सोऽयमित्यभिसम्बन्धादुपचाराज्जनपदाद्यर्थेऽपि वृत्तिरित्युक्तं, युक्त्योपचरितार्थानुपातिनीत्यादि-अत्र च रूढिः प्रमाणम् । यतो वृद्धव्यवहाराच्छब्दार्थव्युत्पत्तिरिति उच्यते-रूढिरित्ति इति रूढिः शिष्टव्यवहारे प्रसिद्धिः, तदभिव्यक्तिस्यो पादानव्यवस्थेति । सा सा वेदानीं प्रदर्शितेति ।

॥ इति अवचूर्णिकायां द्वितीयस्याऽध्यायस्य द्वितीय पादः समाप्तः ॥

' नमस्पुरसोगतेः कखपफि रः सः ' । २ । ३ । १ ॥ नमस्कृत्येति-अनमो नमःकरणं पूर्वं " डाचादिः इति गतिसंज्ञायां गतिक्वन्य० " इति सः । नमः कृत्वेति अत्र नमः शब्दान्तरं न त्वव्ययमिति अमः । " वेनतो कप् " पुर इति-पूर्व पिपर्तीति भ्रावादिनिपातनात् क्विपि दीर्घत्वे च " ओर्ष्वाद्रुर् इत्युरि पूः ततः श्रम् ।

' पुंसः ' । २ । ३ । ३ ॥ ननु पुंसोऽशिट्यघोषे इत्यत्र रसपक्षाय सत्वमेव विधीयतां किमनेनेति ? सत्यम्, एतद्विना पुमरः पुंस्विक्रम इत्यादयो न सिध्यन्तीति भारभ्यते । न च वाच्य " सोरुः इति रुत्वे तस्य असत्परत्वादौ च कृते उत्वाविसेत्स्यन्तीति, विधानसामर्थ्यात् । पुंस्काम्यति-अत्र " रोः काम्ये " इति नियमात् " शषसे शषसं वा " इति सत्वं न । पुस्कः पुंस्पाश इत्यत्र तु कथमपि सत्वं परस्मिन् " पुंस " इति सत्वे कर्तव्ये पदमसत् " इत्यनेनाऽसिद्ध, यतः सप्तमपादे सत्वापेक्षया परमपि सत्व अपमित्यत्र ज्ञातव्यमतः सत्वमर्वाचीनं सत्व तु परविधिरिति ।

' शिरोऽधसः पदे समासैक्ये ' । २ । ३ । ४ ॥ पदग्रहणं पर इति-न च

१ ३-२-१४ । २ ३-२-४२ । ३ २-१-६ । ४ ४-४-११७ । ५ १-१-१ । ६ २-१-७१ । ७ १-१-७ । ८ १-१-८ । ९ २-१-६ ।

वाच्य ' स्वरूपं शब्दस्ये 'ति कृत्रिमाकृत्रिमयोरित्यनेन वा । " येनविधिस्तदन्तस्य " इत्या-दिसूत्रैः परिभाषितस्य ग्रहणं प्राप्नोतीति । समास इति वचनादुत्तरपदमन्तरेण च समासस्याऽसम्भवात्तस्य सामर्थ्यं लभ्यत्वात् पदग्रहणानर्थक्यप्रसङ्गादिति स्थितपदम् स्थान, अत्र ' सप्तमी शौण्डैः " इति सः, षष्ठीतत्पुरुषो वा । अथ पदमपत्तनं पदमिस्यत्र । ' सम्प्रिय मयूरव्यंसकादिभिः " इति नित्ये स प्राप्ते वाक्यमपि । " द्विगु चेति समासे " इतिवत्समास इत्युक्तेऽपि तौ यथामिमतनिमित्तिनाकेन समासे सः इति लभ्यते, पेक्ष्यग्रहणे तु ' विचित्रा सूत्राणां कृति 'रिति न्यायप्रदर्शनार्थम्। मतः क्वाऽप्यार्थ्यां वृत्त्या क्वापि क्षाम्या वृत्त्या निर्विकल्पत इति न कोऽपि दोषः ।

' अतः कृकमिकंसकुम्भपात्रकुशाकर्णीष्वनव्ययस्य ' । २ । ३ । ४६ ॥ अयस्कार इत्यत्राऽयः करोतीत्यर्थकथनमिदं यतोऽयम् अयस् कृ अण् इति समासः । ततोऽप्ययोगे कर्मनिमित्ता षष्ठी न भवति । ' नेतर्नापेकस्यापत्र० " इत्यत्र षष्ठ्योऽस्त्वसमासविधानात् । पयस्काम इति-पिको विकल्पेन विधानात्कृमिर्भवति । वाक्य तु विकल्पस्यैव कार्ये यतोऽसविषये स विकल्पः । क्षविषये तु नित्यमेव । अयस्कुशेति-अयोविकारस्याऽविवक्षितत्वात् " भाजगोण " इति ङीन । अयः प्रधानं यस्याः सा अयः-प्रधाना सा चाऽसौ कुशा चेति कर्मधारयः । अयस्कर्णीति-अय इव कर्णौ यस्या इति बहुव्रीहौ ' नासिकोदर० " इति वैकल्पिको ङीः । समुदायस्य तु जातिवाचित्वे प्रतिपाद्ये ' पाककर्ण० " इति नित्यः । अय इव कर्णोऽस्या इत्यपि कृते गौरादित्वात् ङीः । न त्वयस्कृतमित्यादौ कृधातुरुत्तरपदं नाऽस्ति तत्कथं सकार इत्याह इह कृकम्योरिति । कथं पयस्कामेति कर्मणि ' शीलिकामि० " इति णे पयस्कामा भिज्ञमाचे तु कर्मणोऽपि पयस्कामीति प्राप्नोति । तत्कथं पयस्कामे स्यात्-कमनमित्यादि, अयस्कुम्भीति गौरादित्वात् ङीः । शुनस्कर्ण इति शुनः कर्णा-विव कर्णावस्य ।

' प्रत्यये ' । २ । ३ । ५ ॥ अत इतीह नाऽभीयते तेन वा स्कन्येत्यादि सिद्धम् । इह प्रत्ययेन समासासम्भवात् समास इति तत्सम्बन्धमेकम् इति च नाऽनुवर्तते । प्रत्यय इति किमिति-अत्र प्रत्ययग्रहणाभावे " रोः काम्ये " चेति कार्ये तस्य चाऽपकर्षः । रोः स्थाने काम्ये चकारात् कखि पफि च सो भवति । तर्हि नियमः कथमिति ! उच्यते-कसपकमध्यपठितत्वात् काम्यग्रहणे ठभ्ये यत्काम्यग्रहणं करोति तज्ज्ञापयति रोरेव काम्ये ।

---

१ १-१-२ । २ १-१-८८ । ३ १-१-४८ । ४ १-२-८ । ५ १-२-१ । ६ १-४-१ । ७ २-४-१३ । ८ २-४-५५ । ९ ५-१-७१ ।

' रोः काम्ये '। २। १। ७॥ नियमार्थमिति–विपरीतनियमस्तु सर्वत्रेति-निर्देशात् प्रत्यये रोः काम्ये चेत्सेकयोगामावाद्वा न।

' नामिनस्तयोः षः '। २। १। ८॥ अत्राऽन्यस्येति वर्तते यतः पूर्वं सूत्राभ्यां सकार प्राप्तेऽस्य ष इति। सार्पिष्क इति–" प्रत्यये " इति सूत्रे पाद्यकल्पयोः इत्युपलक्षणत्वात्किमोऽपि ग्रहणम् यद्वा इकारे लुप्तेऽयमपि क इत्यनेनाऽत्राऽपि सर्वं सर्पिषा संस्कृतः संस्कृते " इतीकण्। सप्तमी याच्ये तु ' संस्कृते भक्ष्ये " इत्यन नाऽण् स्यात्। चातुष्क इति चतुः प्रहरणमस्येति " प्रहरणम् " इत्यण्।

' निर्दुर्बहिराविष्प्रादुश्चतुराम् '। २। १। ९॥ चतुष्कण्टकमिति–अत्र बहुव्रीहिः समाहारो वा। समाहारे तु पात्रादित्वात् स्त्रीत्वप्रतिषेधात् ङीर्न भवति। कथ-मिति?–अयमाशयः निर्दुरोः षत्वमुच्यमानमन्यत्वात् कथमत्र, यथा अत्र परत्वात् षकारात् पूर्वं " द्वारादीनाम्  " इति प्रत्युतः अपि वृद्धिमेति।

' सुचो वा '। २। १। १०॥ सुच इति रेफस्य विशेषणं तेन चतुष्पदी त्यत्राऽपि विकल्पः। न ह्यत्र सुचः स्थाने रेफः। ' रोऽस्यः " इति सुचो लोपादता सुचिति प्रकृतिविशेषणं, तत्र च तदन्तविज्ञानमित्याह–सुजन्तानामिति पूर्वं। हि विज्ञाय माने सुचो लोपेऽपि स्थानिवद्भावेन सुचन्तं एवाऽर्थं चतुःग्रहणम् इति। न चैवं त्रिष्क-रोतीति विशब्दरेफस्याऽपि सुजन्तसम्बन्धित्वात् कस्मान्न भवतीति वाच्यमनन्तरे कृतार्थत्वादिति।

' वेसुसोऽपेक्षायाम् '। २। १। ११॥ प्रत्यययोर्ग्रहणादिति–इह प्रत्ययाप्रत्यययोः उभयप्रतिपदोक्तयोः अर्थवद्ग्रहणेनाऽनर्थकस्येत्यनेन च इसुसोः प्रत्यययो रेव ग्रहणादिह न भवतीत्यर्थः। फेनापत इति–फेनमुद्गमति फनोप्मेति क्यङ्।

' समासेऽसमस्तस्य '। २। १। १२॥ इदमेवेति–ननु परमसर्पिष्करोति परम-चतुष्करोतीति परमसर्पिःपरमचतुःशब्दयोरिसुसन्तत्वाभावान्मा भूत्षकारः उत्तरपदार्थप्रधानत्वात्समासस्य, सर्पिश्चतुःशब्दयोरिसुसन्तत्वात्तदाश्रयः षो भविष्यति किं तद र्थेन ज्ञापकेन? न चैव सति परमसर्पिःकुण्डमित्यत्राऽपि प्राप्नोति। सर्पिःशब्दस्य कुण्डेनाऽसमासात् किन्तु परमसर्पिःशब्दस्य? उच्यते, यद्यपि परमं सर्पिः परमसर्पिः करोतीत्युत्तरपदार्थप्रधाने समासे प्रधानस्यापेक्षाया योगात् षत्वं सिध्यति। तथापि परमं सर्पिर्यस्य सर्पिषः समीपं सर्पिषो निष्क्रान्तमिति परमसर्पिष्करोति उपसर्पि

१ २-१-६। २ ६-४-१। ३ ६-२-१४। ४ ६-४-६२। ५ ७-४-११। ६ २-१-५।

ष्करोति निःसर्पिष्करोत्यत्र न सिध्यति, सर्पिः शब्दस्य करोतिक्रियायाश्च व्यपेक्षाया असमासादिति तदर्थमिदं ज्ञापकमिति भावः ।

'भ्रातुष्पुत्रकस्कादयः' । २ । ३ । १४ ॥ सायस्क' सद्यस्कीशब्दादेव प्रत्यये सायस्कस्य सिद्धत्वात् पृथगुपादानं प्रत्ययान्तरनिवृत्त्यर्थं तेन सद्यस्क्रिया भावः सद्यस्कीत्यत्र न सत्वम् । कौतस्कुतः-गणपाठादयम् । अन्यथा " केशो भात्र० " इति त्यण् स्यात् । किञ्च तसन्तस्य प्रथमान्तत्वेन तत इति पञ्चम्यन्ताद्विधीय मानो न प्राप्नोति, कश्चित् त्यपञ्चम्यन्तादप्यणमिच्छन्ति । ततस्तन्मत न " तेन भागते " इत्यनेन चाण् । ननु द्वित्वे कृते एकपदत्वाभावात् कथ " तेन भागते " इत्यण् ? सत्यम्, भूतपूर्वकन्यायाद्भविष्यति । अहस्करः-अहः करोति सिद्धावधितिकार्ये कृगस्तु " धेवः कर्मणि० " इति सिद्धमेव । अयस्कान्तेति-कने इत्यस्य रूप कामयते तु " धेवः कर्मणि " इति सिद्धमथ कामयतेवा समस्तार्थमिह पाठः तन परमायस्कान्त इत्यपि भवति । कस्क इति-यथर्थं कः कः कुत्र न घुर्घुरा(यित)यति घुरीघोरो घुरे स्तुकर इत्यादि कथं ? यतस्तत्राऽपि कस्क इति स्यात् ? सत्यम् परमतामिप्रायेण । ते हि भ्रातुष्पुत्र० इद सूत्र सन्धिविधौ विदधति ततो विराम विवक्षिते सति "न सन्धिः" इत्यस्य प्रवृत्तेर्न सत्वम् ।

'नाम्यन्तस्याकवर्गात्पदान्ताःकृतस्य सः शिड्नान्तरेऽपि' । २ । ३ । १५ ॥ अनुस्वारभवनामित्यत्वादन्तरङ्गत्वादेत्यर्थः, विसमिति-सम्युसभो ग्राह्यः ।

'समासेऽग्नेः स्तुतः' । २ । ३ । १६ ॥ असत्र इति वचनात् सकारस्य पदमध्यत्वं नाऽस्तीति वचनम् ।

'ज्योतिरायुर्भ्यां च स्तोमस्य' । २ । ३ । १७ ॥ ज्योतिः स्तोम दर्शयतीति ज्योतिः प्रदीपादिरर्थसमूह दर्शयतीत्यर्थः ।

'मातृपितुः स्वसुः' २ । ३ । १८ ॥ अकृतत्वात् पदादित्वाच्चाऽप्राप्त विधानम् । समस्तत्वात् " भातेन्द्र " इति न प्रवर्तते ।

'अलुपि वा' । २ । ३ । १९ ॥ पूर्वेणाऽप्राप्त विभाषेयमारभ्यते । मातुःष्वसेति-" स्वसे स्वस वा ' इति पाक्षिक रस्य सत्व चातुरूप्यम् ।

'निनद्याः स्नातः कौशाले' । २ । ३ । २० ॥ निष्ण इति, "उपसर्गोऽत्रोऽत्र्यः"

---

१ ६-१-३६ । २ ६-१-१४१ । ३ १-१-५ । ४ — -१११ । ५ ३-२-२१ । ६ ३-१-६ । ७ ५-१-५६ ।

इति डप्रत्ययः, नदीष्ण इति नद्यां स्नातीति " स्थापास्नात्रः कः " इति कप्रत्ययः। नदी ष्णातः प्रतरणे इत्यादिष्वनयनयोर्वाक्यं ष्णुत्वस्यपर्यमेवाऽभीष्टम्। कुशलत्वेन, स्नानं क्रियासु तात्पर्येणाऽनुष्ठातोच्यते।

' प्रतेः स्नातस्य सूत्रे '। २। ३। २१॥ प्रत्ययान्तरनिवृत्त्यर्थमिति, अन्यथा पूर्वसूत्रात् स्नातिरनुवर्तिष्यत एव किं तदुपादानेनेत्यर्थः।

' वेः स्त्रः '। २। ३। २३॥ विष्टर इति विस्तृणातीत्यच्, विस्तीर्यत इत्यच् विष्टार पङ्क्तिरिति–विस्तीर्यत " छन्दो नाम्नि " इति घञ्, विस्तरस्य पङ्क्तिर्विस्तरस्य वृत्तीति वाक्ये तु न घञ् संज्ञाया अभावात् समुदाये नहि संज्ञामन्यते।

' अभिनिष्ठानः '। २। ३। २४॥ अत्रोपलक्षणत्वादभिरोऽपि ग्रहः।

' गवियुधेः स्थिरस्य '। २। ३। २५॥ अनयोः सप्तम्यन्तानुकरणयोरपि पूर्वशब्दस्य यथा प्राप्तः " अदृश्यजनीत् " इत्यनेनैवाऽलुप्।

' एत्यकः '। २। ३। २६। विष्वक्सेनः–विषुवति परसेनां विषुः प्रेरकस्तमञ्चति क्विपि स्त्रियां विषूची विषुशब्दोऽव्ययं वा नानात्वे वर्तते तदञ्चति। यद्वा विष्वगि-त्यव्ययं सामस्त्ये वर्तते यथाविष्वपि बहुव्रीहिः।

' मावितो वा '। २। ३। २७॥ विसर्गेः करणेऽनटि " त्र्यर्थः " इत्यादयो वा भरणिः। रोहिण्य इव, रवत्य इव, भरण्य इव कल्याणिनी सेना यस्येति। पुनर्व स्वनयोराराधितयोः पुनर्वसु। शतभिषक्–शतभिषा नक्षत्रमसौ म इति व्याकृतेन रूपमेकन्यम्।

' विकुशमिपरेः स्थलस्य '। २। ३। २८॥ नाम्नीति निषेधम्–विष्ठलादि शब्दैः संज्ञाया अप्रतीतेः। अत्र विकुशब्दाव्ययानन्तयोः विशेषणापादानादपि गृह्यते, तत्राऽव्ययपक्षे " गतिक्व० " इति मार्त्यम " इति च तत्पुरुषोऽन्यत्र षष्ठीसमासः इत्याह–विगतं वीनां वेति–वीर्योऽभ भवतीति–बाहुलकात्म ह्रस्व इत्यर्थः॥

' कपेर्गोत्रे '। २। ३। २९॥ गोत्रमिहेत्यादि–ननु स्वापत्यसन्तानस्यत्यादि लक्षणं यातीय।

' गोऽम्बाम्बसव्यापद्वित्रिभूम्यग्निशेकुशङ्कुकङ्गुमञ्जिपुञ्जिपर्हिपर

१ ५-१-१४१। २ ५-१-७०। ३ १-२-१८। ४ उणा ६१८। ५ १-१-४१।
६ १-१-४०।

मद्विधेः स्थस्य '। २ । ३ । ३० ॥ गोष्ठमिति—गावस्तिष्ठन्त्यस्मिन्निति " स्थादिभ्यः कः " इति कप्रत्ययः । अन्यत्र अपह्नवकारितया यत्रि अम्बोऽपह्नवकता तस्याऽप कार्यभूतोऽपि आम्बोऽपह्नवरूपो धर्मस्तत्र तिष्ठतीत्यधिकरणे तु सर्वत्र "स्थादिभ्यः कः" शीर्षघ्नभूवमित्यनयोः " क च्छीड्स्मि० " इति, कौशेय उक्तिविशेष । " दृढः पत्र-शिराजाले, संस्थाकीलकस्तम्भयुः " समनीयः सम्यः " च दैवाऽयः " मञ्जैः सौत्रस्य ' पैदिपठि० " इति इप्रत्यये मञ्जिः । पुञ्ज्यवने इत्यस्माद् "पुंस पुल च" इति पुञ्जः । स इवाऽऽचरति । " कर्तुः क्विप् " तस्य लुप् पुञ्जतीति " स्वरेभ्य इः " पुञ्जिः ।

' निदुस्सोः सेधसन्धिसाम्नाम् ' । २ । ३ । ३१ ॥ निर्गतः सेधात् । दुष्षेध इति दुष्टः सधः, अत्र रेफस्य सकारेऽनेन व्यवहितत्वात् परसकारस्य षत्वे पूर्व सकारस्य च " सस्य शषौ " इति षत्वे निष्षधादयः ।

' प्रष्ठोऽग्रगे ' । २ । ३ । ३२ ॥ प्रतिष्ठते प्रष्ठः । " उपसर्गादातो डः " न तु " स्थापा० " इति कस्तस्य नाम पूर्वाद्धातोर्विहितत्वाभावमग्रहणे च प्रायेणोपसर्गस्य न ग्रहणमित्यस्यार्थस्य ज्ञापयिष्यमाणत्वात् ।

' भीरुष्ठानादयः ' । २ । ३ । ३३ ॥ सम्ये तिष्ठति " स्थापास्नः " इति किति कप्रत्यये सम्येष्ठु ' बैत्तुरुपे कवि " इति सप्तम्यलुप् । असौ सम्येष्ठा सारथिः । अन्ये तु मस्थपान्तस्य च्छन्दोविषयत्वादाकारान्तः क्विबन्तोऽयमिति मन्यन्ते । तन्मते सम्येष्ठा इति विसर्गान्तः । ' वस्तुरूपे कवी "त्यलुप्, परमष्ठिमित्यत्र गणपाठसामर्थ्याल्लुप् । गौरिषक्थः—गौर्या इव सक्थिनी यस्य स " बैकथ्यक्ष्णः " इति टः । "ड्याप्पो बहुल०" इति ह्रस्वः । प्रतिस्नात्यस्यामिति " स्थादिभ्यः " इति कप्रत्ययः । कुत्सिता प्रतिष्ठा नावः सेचिका ।

' ह्रस्वानाम्नस्ति ' । २ । ३ । ३४ ॥ सर्पिष्ट इत्यत्र महीयस्त्र इति तम् । निगतो वर्णाश्रमेभ्यो ' निष्को गते " यत् प्रत्ययः । अन्तरङ्ग इति—अयमर्थः परस्मा त्पूर्वमपि प्लुत आमन्त्र्यायामयत्वेन बहिरङ्गत्वे प्लुतस्य—सर्पिस्तत्र—ननु सर्पिस्तमे स्यातौ "वेसुसोऽपेक्षायाम्" इति कस्तपक्षीति व्यापुस्यैव षत्वस्याप्रवृत्तेः सिद्धत्वात्किमनेन ? नैवम् । अपेक्षायां प्राप्तिरनेन तु अनपेक्षायामपि शङ्क्यते । यथा पश्याऽत्र सर्पिस्तत्र यजुस्तत्र इति ।

---

१ ५-१-७२ । २ ५-१-८२ । ३ ५-१-२८ । ४ उणा ६ । ५ उणा ११ । ६ ५-१-११७ । ७ उणा ६६ । ८ ५-१-१२६ । ९ ५-१-१४२ । १० उणा ४५५ । ११ २-१-१ । १२ ५-१-११६ । १३ २-४-९९ । १४ ५-१-७२ ।

' निरस्तपेऽन्नासेवायाम् '। २ । ३ । ३८ ॥ निरतपत्-अत्र पूर्वं कृतमपि षत्वं परस्मिन्नडागमे। षेपमसत् इत्यनेनाऽसिद्धम्। निस्ताप्पीति-अत्र मूर्ध्वं निष्टपतीति वाक्यं कार्यम्। आसीनस्य स्वनासेवायामिति व्याहृत्यैव निरस्तत्वात् अन्यत्वाद्प्राप्ते वचनम्।

' घस्वसः '। २ । ३ । ३६ ॥ अत्र वसो मौवादिकस्य ग्रहः वसिड् आच्छादने इत्यस्य य्वृदभावेन नामिनः सस्याऽसम्भवात्। मदाघनदायोरिति न्यायाद्वा। वहुंपीति-वसतीति क्विपि य्वृतिः उषः पदत्व उषो येषु तानि। अत्र नागमस्य स्वाविधौ प्रथमं कृतमपि षत्वं निवर्तत इति प्राप्नागमस्तस्मिन्न नामिनो व्यवधानेऽपि सिद्धान्तरेऽपीति षत्वम्।

' णिस्तोरेवास्वदस्विदसहः षणि '। २ । ३ । ३७ ॥ प्रतीषिषतीति-अत्र 'इंण्क्' गताविति लिख्यते तस्य च ज्ञानार्थत्वात् ' सेमीच्छ " इति न गम्यादेशः। 'इंक्' स्मरणे, 'इङ्क्' अध्ययन इत्यनयोस्तु अज्ञान इति विशेषण नाऽसम्भवात्। यतो ऽनयोर्गम्यादेशः प्राप्नोतीत्येतौ न लिख्येते। 'इंण्क्' गतावित्यस्याऽप्यज्ञानार्थत्वविवक्षायामादेशप्राप्तिः। इक् इत्यस्य तु ज्ञानार्थत्वविवक्षायामविवक्षायामपि नादेशः। ईगिकोर्गोः " इत्यत्र इणिकोरेवाऽनुकृतत्वात् " सनीङश्चे "ति चकारेण। सोषुपिषत इति-अत्र यङोऽकारस्य स्थानित्वेन न गुणः। तथा ' णौम्यन्त० " इत्यस्यैवाऽयं नियमः, एतद्विषय एवाऽऽरम्भात्।

' सञ्जेर्वा '। २ । १ । ३८ ॥ इकारान्तनिर्देशादिति-अत एवेह इकार उच्चारणार्थो न कश्चिदपि विहितः।

' उपसर्गात् सुग्सुवसोस्तुस्तुभोऽट्यप्यद्वित्वे '। २ । ३ । ३९ ॥ व्यन्तानामिति-चासन्नत्वादिति षपः। अभ्यषीति-विशेषविहितत्वेन पूर्वं कृतमपि षत्वं परस्मिन्नडागमेऽसिद्धं स्यादिति। सौति सुवत्योरिति-'षुङ्' प्रसवैश्वर्ययोः इत्यनयोः। षतिपस्योरिति-षूकौप् षूकोङ् इत्यनयोः।

' स्थासेनिसेधसिचसञ्जां द्वित्वेऽपि '। २ । ३ । ४० ॥ अत्र सुसिवत्ते सुस्वित इत्यादौ कथं षत्वाभावः ? उच्यते-उपसर्गप्रतिरूपकत्य निपाता एते इत्युपसर्गत्वाभावात्तस्याभावः। व्यन्तानामपीति-णिचः प्रायेणोपसर्गसम्बन्धात्। अषोपदे षार्थमिति-षोपदेशत्वं च सह इनेन वर्तत इति व्युत्पत्तौ। सेधेति साधितस्याऽपि वा व्युत्पत्तिपक्षे। स्थासञ्जोरिति-उपसर्गस्थस्य नामिनोऽव्यवधानेन द्वित्वनेनेत्यर्थः।

१ १-१-९ । २ ४-४-३५ । ३ ४-४-११ । ४ १-१-१५ ।

नियमबाधनार्थमिति–सेनेस्तु " णिस्तोरेव० " इति सिद्धं तिष्ठतेस्तु मन् पररूपो नाऽस्तीति ।

' अभ्यासाश्रयोर्जानिदूर ' । २ । ३ । ४१ ॥ समुदायानुवृत्तावपि व्यभिचाराद् ह्रस्वस्यैव ग्रह इत्याह–अके इति–दुर्गमिति–दुःखेन गम्यतेऽस्मिन्निति । " सुगदुर्गमाधारे " इति डिः । कर्मण्युत्पत्तौ तु खलः स्यात्, अनित्यार्थमिति–यद्येवं तर्हि षोपादिष्वेवविषमतः सूत्रात् पृथगेव कथं न कृत ? सत्यम्, विचित्रा सूत्रकृतिः ।

' सदोऽप्रतेः परोक्षायां त्वादेः ' । २ । ३ । ४४ ॥ उपसर्गादित्यनुवर्तते, अभ्यासादित्यनुवृत्तौ तु तयोरेव विधानात् प्रतिवर्जनानर्थक्यं स्यात् ।

' स्वञ्जश्च ' । २ । ३ । ४५ ॥ अभिषिष्वञ्ज इति–नन्वत्र ' णिस्तोरेव " इति नियमात् मूलधातुसकारस्य षत्वं न प्राप्नोति । उच्यते–स्पर्धे पर इति न्यायादिदमेव प्रवर्तते । अभिषस्वञ्ज इति अत्र " स्वञ्जेर्नवा " इति परोक्षायाः वा किस्वम् पक्षे किद्वद्भावाभावे लोपाभावः ।

*योगविभागादित्यादि–ननु योगविभागात्परोक्षायां त्वादेरिति नाऽनुवर्तत इति* कथं न विज्ञायते ? सत्यम्, व्याख्यानतो विशेषप्रतिपत्तिरिति ।

' परिनिविभ्यः सेवः ' । २ । ३ । ४६ ॥ सेव इति सामान्योक्तेऽपि षेवृङिति गृह्यते । न तु सेवृङिति । कृतस्येत्यनुवृत्तेः ।

' सयसितस्य ' । २ । ३ । ४७ ॥ स्यतेर्वा नियमार्थमिति–उद्योतकरस्य प्राक्सिनोतेरेव ग्रहणं न्याय्यं तथेत्यनेन साहचर्यात् । किञ्च स्यतिग्रहणे नियमार्थता आपद्यते, सिनोतिग्रहणे तु विध्यर्थता । विधिनियमसम्भवे च विधिरेव ज्यायान् । न च वाच्यमचेनैव सितग्रहणेन स्यतिसिनोत्युभयस्योपादानाद्विध्यर्थता नियमार्थताऽपि स्यादिति । यतोऽर्थैकत्वादेकवाक्यमिति कथंचिद्वाक्यलक्षणम् । अर्थैकत्वाच्च सयसित इति वाक्यसमाप्तौ स्यतिग्रहणार्थं वाक्यान्तरे करणीये भवतीति सितान्तरेण ग्रहणम् । मा विषसयदिति–विषयमास्यत् " णिश्रिद्रु० " अत्र द्वित्वे कृतस्य " चपम सत्० " इत्यनेन षत्वनिवृत्तावन्यस्यादिति द्विवचनम् । व्यषयीषदिति–विषयमैच्छत् क्यन्, क्यनि ईः । पर्यसितायततित्–परिषित इवाऽऽचरत् क्यङ् " दीर्घश्चि " इति दीर्घः ।

' असोङसिवुसहस्सटाम् ' । २ । ३ । ४८ ॥ सो ङ्स्यतयोर्द्वन्द्वे पश्चाद्भ्रनाऽन्यपदार्थे । " सिवुसह० " उभयं पञ्चमीहो कर्मधारये च पुनर्द्वन्द्वः ।

---

१ २-१-१७ । २ ४-१-११ । ३ ३-४-४१ । ४ ३-१-६ । ५ ४-१-१८ ।

'स्तुस्वञ्जश्चाटि नवा'। २। ३। ४९ ॥ स्तुस्वञ्जोर्नित्यं प्राप्ते इति-उपसर्गात्सुनोतीति स्वञ्जमेताभ्यामित्यर्थः।

'निरभ्यनोश्च स्यन्दस्याप्राणिनि'। २। ३। ५० ॥ पर्युदासोऽयमिति-अयमर्थोऽप्राणिनीति पर्युदासत्वाद्विधिप्राधान्यात्। सम्भवति चैकवाक्यत्वे वाक्यभेदाभावस्याऽयुक्तत्वात्। प्रसज्यप्रतिषेध तु न चेत्यादिवाक्यभेदस्याऽवश्यम्भावित्वात्। ततो यत्र प्राणी चाऽप्राणी च भवति। तत्राऽपि षत्वं भवति। प्रसज्यप्रतिषेध इति-प्रसङ्गं कृत्वा प्रतिषेधः प्रसज्यप्रतिषेधः अर्थस्य प्रवृत्त्यादिभिः" इति सः। प्रसज्य तु निषेधकृदित्यत्र तु ते लुगेति प्रतिषेधलाभः। ननु तदा अव्ययस्यति कथं सर्वं लुप्? उच्यते-समाससम्बन्धी सिरत्र नाऽव्ययस्येति न भवति।

'परेः'। २। ३। । ५१ ॥ योगविभागादिति विपरिस्यन्दौ स्कन्दोकयोरिस्येवरूपात्।

'निर्नेः स्फुरस्फुलोः'। २। ३। ५३ ॥ निस्फुरतीति निसः सकारस्य रुत्व अपदस्य " इति तस्य सत्वमनन भातुसकारस्य षत्वं, सर्वत्र षणौ' इति षत्वम्। षत्वा भावपक्षे कदाचिद्विसर्गः कदाचित् व्यंस्वपे लुप्ता" इति लोपः। मूर्धन्याभावपक्षे कदाचित्सकारद्वयस्य श्रवणं कदाचिद्विसर्गलोपौ।

'वेः'। २। ३। ५४ ॥ स्फुरस्फुलोर्निनिवेरित्यस्यकपोमाभावोऽत्र।

'स्कभ्नः'। २। ३। ५५ ॥ ननु श्नानिर्देशादत्र श्नाप्रत्ययस्यैव षत्वं प्राप्नोति न तु तदभावे विष्कम्भितस्यादौ? नैवम् श्नानिर्देशस्य श्नुनिषेधपरतया व्याख्यातत्वात्। विष्कम्नातीत्यत्र श्नुम्नादित्वात् षत्वाभावः। सम्नोर्मा भूदिति-यदाह चन्द्रो यथत्राऽपि स्यात्तदा स्कम्भ इति निर्देशत्। तस्माच्छ्नानिर्देशादन्यत्र श्निति प्रत्यये न षकार इति। शकटस्तु श्नानिर्देशः श्नुश्च स्कश्नुरिति मौढादिकनिवृत्त्यर्थमिति। अत एवोत्पत्तनाऽपि विष्कम्नाति विष्कम्नोतीति श्नुप्रत्ययेऽपि षत्वं गणपाठाभावात् षत्वं चोदाहृतम्।

'निर्दुस्सुवेः समसूतेः'। २। ३। ५६ ॥ सम इति-समतीति प्रयोगैकदेशस्य समशब्दस्याकारान्तस्य भवति। सतीत्यादावृत्तिकस्य "इकिश्तिपौ" इति श्तिपपि भवति। सतिसूपतिसूतीनां श्यन्तानां च। तत्र "वेश्च स्यः" इत्यनेन पृथग्योगाभ्यानोरेव ग्रहणं न यासोरित्याद्यनान्नोर्ग्रहणादिति-नामग्रहणे च लिङ्गविशिष्ट

१ ३-१-४८ । २ १-२-११ । ३ १-१-५६ । ४ ५-२-११८ । ५ १-१-५७ ।

स्याऽपि तत्र सुषमा इत्यादि । धातोरेवेच्छन्तीत्युक्त्वा कथं निःषूतमित्याद्युदाहृतम् ? सत्यमुक्तप्रत्ययात्प्रागेव धातूपसर्गेण योगात्सिध्यति ।

'अघः स्वपः' । २ । ३ । ५७ ॥ निःषुप्त इत्यादौ "ज्ञानेच्छा०" इति क्तः ।

'प्रादुरुपसर्गाद्यस्वरेऽस्तेः' । २ । ३ । ५८ ॥ सुष्यादित्यादिति, न्यासे तु "वेत्तुष्यादस्य षष्ठम्" वृत्तौ तु सारसंग्रहाभिप्रायेण "शुष्यादित्यः" इत्युक्तम् । विषुतमित्यादि–विसरतीति क्विपि तोन्ते 'क्विबन्ता धातुत्वं नामत्वं च न त्यजन्तीति' न्यायाद्विसुदित्येवरूपाद्धातुमात्रादमूरूप स्वरादौ प्रत्ययेऽस्तेरिति किमिति न्यायेन ज्ञापकफलता । यदा तु कस्यचिदपि असौ सति यस्वरस्य प्रत्ययस्येति न चिन्त्यते न ज्ञापकफलता ।

'न स्सः' । २ । ३ । ५९ ॥ वृषिस्यति, अत्राऽस्यपठौस्य स्सः ।

'सिचो यङि' । २ । ३ । ६० ॥ षत्वमिति "स्थासेनि०" इत्यनेन ।

'गतौ सेधः' । २ । ३ । ६१ ॥ ननु कुसरधूसरमसरकसरादिषु प्रत्ययसकारस्य षत्वप्रतिषेधो वक्तव्यः ? नैवम्, उणादयोऽव्युत्पन्नानि नामानीति, सुखबोधनार्थं व्युत्पाद्यमाना अपि उणादयो व्युत्पत्तिकार्यं न लभन्ते । इत्थं सति वृक्ष इत्यत्रापि षत्वं न प्राप्नोति ? उच्यते–तर्हि धातुत्वाद् षत्वभावः ।

'सुगः स्यसनि' । २ । ३ । ६२ ॥ अभ्यासोऽस्मादित्यत्राऽप्यभ्यपीति वचनात् "उपसर्गात्सुग्०" इति प्राप्तं निषिध्यते ।

'रघृवर्णान्नो ण एकपदेऽनन्त्यस्यालचटतवर्गशसान्तरे' । २ । ३ । ६३ ॥ ननु ऋवर्णग्रहणं किमर्थं ? यतो ऋकारमध्ये रेफ ऌकारमध्ये तु लोऽस्तीति वृद्धवादः, ततो ऋवर्णेऽपि तन्मध्यव्यवस्थितरेफाश्रयं णत्वं भविष्यति; अत एव पाणिनिनाऽपि रषाभ्यामित्येवोक्तम्, उच्यते–न हि वर्णैकदेशा वर्णग्रहणेन गृह्यन्ते तद्भिन्नत्वात् वर्ण-पृथक्त्वप्रत्यासत्त्यनाश्रयणाद्धि–मांसं न भिक्षणमिति सत्यपि निषेधे शाखो विक्रीणन्ते, तत्र मांसबुद्धेरभावात् । अपपमव्यवधानेऽपीति–अवत्यप्रतिषेधादितरव्यवधानेऽपि भवति । पुष्णातीति–अत्र "ष्वगस्य" इत्यनेनैव णत्वं सिद्धं षकारग्रहणं कृष्णमित्यादौ व्यवहितार्थं तदर्थं च सत् परत्वात् "ष्वगस्य" इति बाधित्वा णत्वं प्रवर्तयति । नृभिर्नृभिरिति द्विःप्रयोगो द्विर्वचनमित्याभयपक्षाद्विभक्त्यन्तमित्यर्थः । विरठनति–विपूषा-

---

१ ५-१-११ । २ १-१-४२ । ३ ५-१-१४३ । ४ २-३-४ । ५ २-३-३१ । ६ १-१-६ ।

ग्रमे "ग्रुरुत०" इति निपातनात्, विस्पष्टे। अग्रणीनामित्यादौ दीर्घरूपे स्यादिविधौ कर्तव्ये पूर्वकृतमपि णत्वमसिद्धं भवति।

'पूर्वपदस्थात् नाम्न्यगः'। २। ३। ६४॥ सामर्थ्यादिति-अयमर्थः स्वेन पूर्वपदशब्देन उत्तरपदमाक्षिप्यते, तदन्तरेण तस्यास्सम्भवाभावाच्च नकारस्य विशेषणम्। पुष्पयन्दीति-पुष्पक् पुष्प्यन्तीत्यपि पुष्पाणि नन्दयति अण्, ङी, पुष्पनन्दी आचार्यः। यस्त्वग्रपणकाप्पर्टेर्निमित्त्य, दिगम्बरेण तु यापान्त्यः, स च न शिष्टसम्मतः। वाग्मी पत्त -नभ्रस्येव तस्यदमण् ङीः। वैद्धिहस्वरे " इति पुंवद्भिवेषः। अग्रयनमिति-विषादिपु अग्रयनपाठादत्र णत्वनिषेध सिद्धे किमम इत्यनेन? सत्यम्, अबाधकान्यपि ज्ञापकानि भवन्ति। उत्तरपदमम्बन्धी नकारो न भवतीति-" प्रत्यय प्रकृत्यादेः" इति न्यायात्। पूर्वेणैव णत्वमिति-ननु पूर्वेणाऽपि कथ यतः स्वरपदशब्दस्याऽन्तर्वर्तिनी विभक्तिमाश्रित्य पदत्वमस्ति, तस्यत्वात्रेफस्य णस्यैकपदत्वामावादिति। अत्रोच्यते-यत्र द्वावपि निमित्तनिमित्तिनावेकपदस्य व्यभिचारतस्तत्र णत्वाभाव इह तु रफस्य व्यभिचारेऽपि नकारस्यैकपदस्यत्वाव्यभिचारः। यद्वा सित्वमेवेति नियमेनायनण्प्रसङ्गे स्वरपदशब्दस्य पदत्वस्य निरस्तत्वात् पूर्वेण भवत्येव। मनोहरा-वृक्षविशेषाः।

'निष्प्राग्रेऽन्तःखदिरकार्श्याम्रशरक्षुप्लक्षपीयूक्षाभ्यो वनस्य'। २। ३। ६६॥ निष्प्राग्रेन्तरो नौपधिवचना नाऽपि वृक्षवचनाः तेभ्यः संज्ञायां कोटरादि नियमेन व्यावर्तितत्वादप्राप्त णत्वं विधीयते। असंज्ञायामप्येकपदत्वाभावादप्राप्त मत। इक्षुप्रशब्दावौपधिवचनौ अपा वृक्षवचनास्तेषां संज्ञायां कोटरादिनियमेन णत्वस्य व्यावर्तितत्वादुत्तरणाऽप्राप्त विध्यर्थ, असंज्ञायां तूत्तरेण विकल्पे प्राप्त नित्यार्थम्। कार्श्यवर्णमिति-कार्श्यशब्दो वृक्षविशेषवाची अभ्युत्पन्नाऽथवा कृष्यते " मेम्युपाम्य " इति क ततः अणि धर्मधर्मिणोरभेदोपचारात् कार्श्यगुणयुक्ता वृक्षाऽपि कार्श्यः। पीयुक्षति-पीयुक्षाशब्दो द्राक्षापर्यायो द्राक्षाविशेषो वा। पीङ्च क्विपि पीः पिर्यं यति " पीयय० " इति किदु', पीयुं क्षायति " आतो वा " इति डः।

'द्विंत्रिस्वरौषधिवृक्षेभ्यो नवाऽनिरिकादिभ्यः'। २। ३। ६७॥ कोद्रववणमिति-क्नाऽम्भमा उपन्त-क्लियन्ते " कैरव " इति माधुः कनोद्रवन्त्युच्छन्दा यन्तऽथि वा। लता मल्लीकर्कोट्यादिका, गुल्मा ह्रस्वस्कन्धास्तरवो बहुकाण्डशाखाः कटकस्वादय, एवङ्गुणागुरूप इव वीरुधः। उस्पलकस्त्वत्र व्याख्यत्-लता गुल्मास्ताभ्यां निलधवा वीरुध। पुष्पं विना फलमव यस्य स वृक्षादिः फली। पुष्पं च

फलं चोपगच्छन्ति पुष्पफलोपगाः " नाम्नो गमः० " इति डे—वृक्षाः पुष्पफलोपगा इति। न चोभयमप्युपगच्छन्ति त एव वृक्षा किं तर्हि ? येऽप्यन्यतरत् पुष्पं फलं चोपगच्छन्ति तेऽपि वृक्षा एव। तत्र वेतसादयः पुष्पमेव प्लक्षादयः फलमेवाऽऽम्रादयस्तूभयमप्युपगच्छन्ति। तत्र वृक्षो वनस्पतित्वमपकेशित्वं च न व्यभिचरति। वनस्पतिरपकेशी तु वृक्षत्वं व्यभिचरत। यतः " फली वनस्पतिर्ज्ञेयः फलवन्ध्यस्त्वपकेशी " इति। अत एव च वनस्पत्यादिग्रहणमकृत्वा वृक्षग्रहणं कृतं तदन्तर्गतत्वाद्वनस्पत्यादेरिति। विदारी—लताविशेष ।

' गिरिनद्यादीनाम् '। २। ३। ६८॥ तूर्यमाण इति—तूर्यं मानमस्येति बाह्ये निमित्तनिमित्तिनोरेकपदस्थत्वाभावादप्राप्ते विकल्पः। तूर्यवेस्त्वानडिस्ये मागमे च " रपृवर्णा० " इति नित्यं प्राप्ते। क्षिप्रादित्वादिति—अन्यथा बहुस्वरत्वात् प्रायो बहुस्वरादिकण् स्यात्।

' पानस्य भावकरणे '। २। ३। ६९॥ सौवीरपाणमिति—सौवीरेषु प्रायो भव बाहुलकादकञ्च बाधित्वा भवेऽण्। सुवीराणामिदं " तस्येदम् " इति वा।

' देशे '। २। ३। ७०॥ योगविभागादिति—अन्यथा 'पानस्य भावकरणदेशे' इति क्रियेत। तथाऽत्र कर्मसाधनः पानशब्दो गृह्यते, भावकरणप्रधानस्य तु पूर्वेण विकल्प एव उशीनरा इति—उशयत इति " स्वादिभ्यः कः " घटीति क्विपि ङ्याति गौरादित्वाद् ङ्यामुशी नगरी तस्या नराः। गान्धारयः—गान्धारस्याऽपत्यं वृद्धमत इञ् गान्धारिः राष्ट्रक्षत्रियसरूपः ततो गान्धारीणां राजानः, गान्धारे राज्ञोऽपत्यानि वा " गान्धारिसाल्वेयाभ्याम् " ' यञञोऽश्या० " इति बहुत्वविषयो लुप्। ननु क्षीरपानादयः शब्दा मनुष्येषु वर्तन्ते। तत्सामानाधिकरण्यादुशीनरादयोऽपि तथैव तत्कथमिह देशो गम्यत इत्याह—तात्स्थ्यादित्यादि। अयमर्थः—उशीनरादयो हि शब्दाः संज्ञात्वेन पूर्वं देशेष्वेव प्रवृत्ताः पश्चात्तु तत्स्थानसम्बन्धात् मनुष्येषु तेन मनुष्याभिधानेऽपि तत्र मनुष्यदेशाभिधानं गम्यते, दाक्षीणां पानमिति—अत्र कर्तरि षष्ठी।

' ग्रामाग्रात् नियः '। २। ३। ७१॥ ननु " गतिकारक० " इति न्यायाद्विभक्त्युत्पत्तेः प्रागेव समासे निमित्तनिमित्तिनोरेकपदस्थत्वात् " रपृवर्णा० " इत्यनेनैव णत्वं सिद्धमेव किमनेनेति ? सत्यम्, नियमार्थं यदि नियो णत्वं स्यात्तदा ग्रामाग्रादेव तेन सरनीमेपनीत्यादौ पूर्वेणाऽपि न भवति।

---

१ ५-१-१३१। २ ३-३-६२। ३ ६-३-१६। ४ ५-३-८२। ५ ६-१-११५।
६ ६-१-१२६। ७ १-२-६५। ८ २-३-६३।

'**वाह्याद्वाहनस्य**' । २ । ३ । ७२ ॥ वोढव्यं वाह्यमिति–वहेरर्थे घ्यणि वाह्यं वाहनाद्यमित्यादि तेन यद्यपि वाहन वहनाद्यमित्यादि वाह्यं नाऽऽरोपितं भवति तदर्थं तु केवलमुपकल्पितं भूतलस्य तदापि भवत्येव ।

'**अतोऽह्नस्य**' । २ । ३ । ७३ ॥ दीर्घाह्नी प्रावृडिति–दीर्घाह्नी, दीर्घाह्नः, दीर्घाह्ना रूपत्रितयम् ।

'**योत्तरपदान्तनस्यादेरयुवपक्वाह्नः**' । २ । ३ । ७५ ॥ प्राप्ताप्राप्तविभाषेयम् । तथाहि–शिखितेषु प्रयोगेषु "गतिकारक०" इति न्यायात् स्याद्युत्पत्तेः प्रागेव समास इत्येकपदत्वात्प्राप्ते व्याघ्रीयत्पामा येषां तानि व्याघ्रीपामाणि व्याघ्रीपामानि वेत्यादिषु त्वदर्शितेष्वप्राप्ते । पाणिनिस्तत्प्राप्ते विभाषां मन्यते । तन्मतेऽपि माषोऽस्त्यनयोर्माषिणौ व्रीहीणां वापिनाविति यदा क्रियते तदाऽप्राप्ते । अयोग्योत्तरपदस्यान्त्यो नकारो न भवतीति–किन्तु "प्रत्ययः प्रकृत्यादेः" इति न्यायेन गगमग इत्यस्य सद्भावस्यैव । व्याहि–चतुरहीति अनयोर्मर्वेऽर्थेऽण्विषये "वर्णात०" इत्यननाङ्ग् महादेवम । मर्दमयाहिनाविति–मर्दमान् वायत इत्येवंधीलौ ।

'**कर्णैकस्वरघाति**' । २ । ३ । ७६ ॥ न वेदिति–सत्यपि त्रिवमानुवर्तने प्रतिषेधस्य प्राप्तिपूर्वकत्वात् कगगमस्मात् पकमम्दस्यैव प्रतिषेध इति । स्वर्गकामिणा विति–सुखेन पुण्यकर्मभिरर्ज्यत इति यति न्यक्कादित्वात् तं कामयेते इत्येवंशीलौ । मोक्षकामिणाविति–मुच्यन्ते प्राणिनः कर्मकलङ्केनाऽत्रेति ' मीनामपमि० " इति से । नित्यार्थमिति–अयमर्थः " मतिकारक० " इति न्यायेन निमित्तनिमित्तिनोरे कपदस्थत्वात् रेषुवर्णा० " इति नित्य प्राप्त वोत्तर० " इति विकल्पित पुनरनेन नित्य विधीयते इत्यर्थः ।

'**अदुरुपसर्गान्तरो णहिनुमीनानेः**' । २ । ३ । ७७ ॥ हिनुमीनानिग्रहणात् समासस्याऽसम्भवात् पूर्वपदस्थादित्यस्य निवृत्यावविशेषेणोपसर्गात् णत्वविधिः । हिनुमीनाग्रहण इति–अथ प्रहिणोति प्रमीणीत इत्यत्र गुणे ईकार च कृते हिनुमीनेत्येतद्रूपविरहात् स्थानीवत्स्याऽप्यसन्निधौ स्वरस्य स्थानिवद्भावप्रतिषेधात् कथं च त्वमित्याह–विकृतस्याऽपीति । प्रवपानि मांसानीति–उप्यत इति वपा विभाषया । आनीत्यर्थेवत इति–वपानीति सन्नुवापस्याऽर्थवत्त्वादानीत्यस्य पृथगर्थाभावादनर्थकत्वाद् पसमस्तामावाद्वा । अत एव प्रवपा इति विग्रहो वृत्तौ दर्शितः ।

---

१ १-२-८५ । २ ७-१-११४ । ३ न्या० ५६४ । ४ १-२-८५ । ५ २-१-११ । ६ २-१-७५ ।

‘ नशः शः ’ । २ । ३ । ७८ ॥ प्रनष्ट इति–अत्र “ नेमोऽद्युटि ” इति नाग मस्य ‘ नो व्यञ्जनस्य० ” इति लुक् । प्रनङ्क्ष्यतीत्यादि–अत्र परेऽसिद्धत्वन्तरङ्गत्वात् पूर्वं कृतमपि षत्वं पश्चाद्भावत्वात् पत्वे कृतेऽप्येकदेशविकृतस्याऽनन्यत्वात् प्राप्तमपि श इति वचनात् साक्षाच्छकारान्तत्वाभावात् निवर्त्यते ।

‘ नेर्मादापतपदनदगदवपीवहीशमूचिग्याति वाति द्राति प्साति स्यति हन्ति देग्धौ ’ । २ । ३ । ७९ ॥ न मातीत्यादि–नन्वेषां मारूपाणामाङ्गस्वाप्रयुक्ताऽपि कुतः ? उच्यते–“ मिग्मिगोऽसि लवति ” इत्यनेनाऽऽत्वविधानात् । नाऽनु बन्धनार्थ इति–यथा रीत्या धातुपाठे माङित्यपाठि तद्रीत्या यदि सूत्रेऽपि क्रियेत त- दाऽनुबन्धार्थः स्यात् । अत्र तु विशेषण ङकारस्योपलक्षितो मा इति । ननु “ सप्तम्या निर्दिष्टे पूर्वस्य ” तथाऽनन्तरस्य न व्यवहितस्येति न्यायात् प्रण्यास्यतीत्यादावाका व्यवधाने न प्राप्नोतीत्याह–माका व्यवधानेऽपीति–अयमर्थः ‘ पैवेन्तरे० ” इति च लनिषेधकसूत्र आको वर्जनादाका व्यवधानेऽपि भवति ।

‘ अकखाद्यषान्ते पाठे वा ’ । २ । ३ । ८० ॥ अत्राऽकखादिषान्त इति सिद्धे नञ्द्वय सुखार्थं, नञ्द्वये हि सति कखादेः षान्तस्य च वर्जन प्रतीयत । एक- स्मिंस्तु कखादेः किंविशिष्टस्य षान्तस्येति प्रतीतिः स्यात् । असम्भवात् न भविष्यतीति न वाच्यम् । कृपञ्चिपत्यादावेव द्विपस्याऽपि दर्शनात् । सौत्रेषु पाठादिति–ननु स्त- म्मेर्धातुप्पाठात् कथ पाठविषयत्वं ? उच्यते–सूत्राणां सूत्रमेव धातुपदस्य । प्रनिवे टेति–‘ विष्ट ’ प्रवेशने, इत्यस्य रूपम् ।

‘ द्वित्वेऽप्यन्तेऽप्यनितेः परेस्तु वा ’ । २ । ३ । ८१ ॥ प्राणिणिषतीत्यादी द्वयोरप्यनयोरेव णत्व द्वित्व इति वचनात् । हे प्राण !–अन्त “ नामन्त्र्ये ” इति न लोपप्रतिषेधात् नान्तत्वं सम्भवतीत्यामन्त्र्ये दर्शितम् । ननु द्वित्वेऽपि कृतेऽन्तेऽपीति वचनादन्तेऽपि ध्रुव्यादनन्तेऽपि भविष्यति किं द्वित्वेऽपीत्यनेन ? नैवम्, द्वित्वऽपीत्य स्याऽभावे प्राणिणिषतीत्यत्र प्रथमनकारेऽन्तेऽपीत्यस्य चरितार्थत्वाद्द्वितीयनकारस्य णत्वं न स्यात् । टवर्गेण व्यवधानात् । अन्तेऽपीत्यत्राऽपि शब्दाभावे द्वित्वेऽप्यन्त एव स्यादिति । ननु द्वित्वे सत्यन्तस्थो नकारः क सम्भवति ? उच्यत–प्राणितः सनि प्राणिणिषन्वं प्रयुक्त णिगि अल्लोप क्विपि प्राणिणिषमाचष्ट णिचि पुन “ व्यञ्जनस्य चे ” इत्यनन इसिति लोप क्विपि हे प्राणिण् ? इत्यादावाम व्यत्वाच न लोपा भावे प्राणिणिषन्तीत्याद्यनन्तेऽपि ।

१ ४-४-११ । २ ४-२-४५ । ३ ४-१-८ । ४ १-१- ।। ५ १-१-११ । ६ ७-४-४१ ।

'इनः' । २ । ३ । ८२ ॥ प्रध्नन्तीत्यादौ हन् इत्युच्यमानेऽप्येकदेशविकृतस्याऽनन्यत्वात् णत्वं प्राप्नोतीत्याह—हनोऽघ्नीति ।

'णमि वा' । २ । ३ । ८३ ॥ पूर्वेण नित्ये प्राप्ते विकल्पार्थम् ।

'निसनिक्षनिन्दः कृति वा' । २ । ३ । ८४ ॥ नित्यं भवतीति—"अदुरुपसर्गा" इत्यनेन णपः । षोपदेशत्वात् "अदुरुपसर्गा॰" इत्यनेन गतिकारकङस्युक्तानामिति न्यायादविभक्त्यन्तैः कृदन्तैः सह प्रादीनां समासे सति निमित्तनिमित्तिनोरेकपदस्थत्वात् 'रघुवर्णा॰" इत्यनेन वा नित्ये णत्वे प्राप्ते विकल्पार्थमिदम्।

'स्वरात्' । २ । ३ । ८५ ॥ "गतिकारक॰" इतिन्यायात् 'रघुवर्णा' इति सिद्धमेव किन्तु प्रयायिणी परियायिणावित्यत्र "षोपदे॰" इति वा णत्वं स्यादतस्तन्निषेधार्थमिदमारभ्यते । कृतीत्यस्येति—कृतीति विषयसप्तमीयं न निमित्तसप्तमी । तथा हि स्वरात् परस्य धातोर्नस्य कृन्निमित्ते णत्वमिति सूत्रार्थः स्यात् । न चैतदसम्भवाद् भविष्यतीति वाच्यम्, प्रेण्वनमित्यादावेतन्निमित्तस्याऽपि दर्शनात् । तथा च सति न क्यापूय इत्यादि प्रतिषेधेऽनर्थकः प्राप्तेरभावादिति क्यादीनां कृति निमित्तभूते स्वरात् परो धातुनकारोऽस्ति येन प्राप्तौ प्रतिषेधोऽर्थवान् स्यादिति स्वरादिति कृत्प्रकारस्य विशेषणं, न "अदुरुपसर्गान्तर" इत्यस्य धातोर्वा "देशेऽन्तरोऽयनहनः" इति प्रतिषेधेन हि प्राप्तस्य स प्रतिषेधः । न चाऽन्तःशब्दो धातुर्वा स्वरान्तो वा येन प्रतिषेधोऽर्थवान् स्यादिति । उपसर्गविशेषणे प्रमुण इत्यत्राऽपि स्यात् । कृद्विशेषणमपि न । तस्मिन्नपि कृत कृतो यः स्वरस्ततः परस्य नकारस्येति स्थिते प्रयाणीयमित्यादौ प्राप्तिः । प्रहीण इत्यादौ न स्यादिति । प्रकल्प्यमानमिति—वर्णैकदेशस्य वर्णग्रहणेन ग्रहणात् समुदायव्यापारे चाऽवयवस्याऽपि स्वव्यापारानुच्छेदेन व्यापारात् लकारे उच्चार्यमाणे तदवयवस्य लकारस्याऽप्युच्चारणमित्यलघटति प्रवर्तत एव ।

'नाम्यादेरेव न' । २ । ३ । ८६ ॥ प्रेङ्खणमित्यादौ षोपरेति नागमस्य विकल्पो नाम्नामिति बहुवचनेन बाधितत्वात् ।

'व्यञ्जनादेर्नाम्युपान्त्याद्वा' । २ । ३ । ८७ ॥ दुगूहन इति—दुर्दुःखेऽन्नेनाऽस्मिन् वा केरव्यापारे" अनट् दुर्गूहतीति नन्द्यादिभ्यो वा—दुगूहन इत्यत्र "गोहः स्वरे ऊत् ।

'णेर्वा' । २ । ३ । ८८ ॥ ण्यन्तेभ्यस्त्विति—नामगरादितेभ्यः ।

---

१ २-१-७७ । २ २-१-६१ । ३ २-१-७५ । ४ २-१-९१ । ५ ५-३-१२१ । ६ ४-२-४१ ।

'निर्विण्णः' । २ । ३ । ८९ ॥ गतिकारकेतिन्यायात् "रेपूर्वणो०" इति सेद्धमेव किमनेन ? सत्यम्, अनेन न्यायेन निर्विण्णवानित्यत्राऽपि स्यात् तन्निवृत्त्यर्थमेतम् । एते त्रयोऽपि धातूनामनेकार्थत्वाद्वैराग्ये वर्तन्ते । निर्विण्ण इति-विदक् ज्ञाने इत्यस्य सेट्त्वात् । अलघटेति क्याघ्रस्या धाऽप्राप्तौ क्तनकारस्य णत्वं निपात्यते, धातुनकारस्य तु "तवर्गस्य०" इति ।

'न ख्यापूग्भूभाकमगमप्यायवेपो णेश्च' । २ । ३ । ९० ॥ ख्या इति निरनुबन्धोपादाने ख्यादेशस्य ख्यांङ् प्रथने इत्यस्य च परिग्रहार्थम् । नित्यमिति-"स्वरात्" इत्यनेन । वेपो विकल्पेनेति-'ण्यन्तादेनोन्मुषा०" इत्यनेन ण्यन्तेभ्य श्चेति-"णेर्वा" इत्यनेन ।

'देशेऽन्तरोऽयनहनः' । २ । ३ । ९१ ॥ स्वरादिति हन इति च यथासंख्य प्राप्ते प्रतिषेधः । अन्तर्घण इति-"हनोऽन्तर्घनाम्च०" इत्यलन्तो निपात्यते । वाही केषु देशविषयस्यैव संज्ञा । प्रायघोदय इति-इंद्, इण्ङ् वा, प्रैयतेऽस्मिन्नित्यनटि "स्वरात्" इति णत्वे । अघतौ तु 'उपसर्गस्याऽयौ" इति लत्व स्यात् ।

'षात् पदे' । २ । ३ । ९२ ॥ सर्पिष्पानमिति-नन्वत्र पकाराभिव मा भूण्णत्व सर्पिस्परेफाभिवे कथ नहि ? उच्यते-यत्रोत्पद्यमानस्य णत्वस्य निमित्तद्वय भवति तत्र प्रत्यासत्त्याऽनन्तरमेव गृह्यत इति । सर्पिष्कमेति-सर्पिष्कामयतीति सर्पिस्, अम् का धातुः आप्रे इति स्थिते क इत्यस्याऽपिभक्त्यन्तत्वात् पदत्वाभाव इति नाऽनेनत्वप्रतिषेधः । ननु उत्तरपदमपि पदमुच्यते यथा "वेर्दूणोऽनम्बम" इत्यत्र पदे इत्युक्तेऽपि उत्तरपदे इति वृत्तिकृता व्याख्यातम्, तद्वदिहाऽपि पद इत्युक्त उत्तरपदमपि लभ्यते तत्कथ सर्पिष्कामेत्यत्र व्याहृतिः ?, सत्यम्; 'नाऽनिष्टार्था शास्त्रप्रवृत्तिः' इतिन्यायादेवविध व्याख्यानं न सर्वत्राऽपि युक्तं किन्त्वभिप्रेतसिद्ध्यर्थं कचिदेव । यदा तु कुत्सितार्थे कप् तदा निर्विवादमेव ।

'पदेऽन्तरेऽनाङ्यतद्धिते' । २ । ३ । ९३ ॥ चतुरङ्गयोगेन-अत्र 'केव गैकः' इति प्राप्त निषिध्यते । माषकुम्भस्य वापः माषस्य कुम्भवाप इत्यस्मिन्नर्थे वा क्ये "इत्यम्बोऽसप" इति पदसंज्ञानिषेधेऽपि भूतपूर्वक पदत्वमाश्रीयते । कवर्गैकस्वरवतीति-कवर्गैकत्वेन विकल्पविहितत्वात् तु "गोर्वर" इति विकल्पः ।

'क्षुम्नादीनाम्' । २ । ३ । ९४ ॥ क्षुम्नति तुप्वादिनिर्देशेन धातुग्रहण न तु

१ १-१-११ । २ १-१-६ । ३ १-१-६५ । ४ १-१-६० । ५ -१-१४ । ६ १-१-१ ।
७ २-४-१८ । ८ २-१-७६ । ९ १-१-१५ । १० २-१-७५ ।

षत्वमुच्चितमित्यर्थम् । अनुबन्धनिर्देशे हि क्षोभणमित्यत्राऽपि स्यात् । षत्वं तु प्रत्युत इत्यत्राऽपि । यद्येवं तर्हि क्षुम्नीत इत्यादौ षत्वप्राप्तस्य परेऽस्यासत्वादीकारादौ कृते क्षुम्नेति–रूपाभावाश्च प्राप्नोति ? उच्यते–स्वरादयस्य स्थानिवद्भावादेकदेशविकृतस्यानन्यत्वाद्वा भविष्यतीत्यदोषः । बहुवचनेन चाऽस्याऽऽकृतिगणता द्योत्यते । तेनाऽन्योऽप्यविहितलक्षणो षत्वप्रतिषेधः क्षुम्नादिषु द्रष्टव्यस्तेन धनदवाषकनरवाहनप्रभृतस्य न षत्वम् । नूनमित्येक इति–अविभक्तिको निर्देशः । अकारान्तस्त्वयं ज्ञातव्यः ।

‘पाठ धात्वादेर्णो नः’ । २ । ३ । ९७ ॥ नन्वादिग्रहणं किमर्थं तमन्तरे णाऽपि णोपदेशबलाण्णत्वं न भविष्यति, अन्यथा मनिस्यत्र पठ्यते ?, नैवम्; णोपदेशस्य । ‘ अदुरुपसर्गा० ” इति णत्वे फलमस्ति, तथाऽप्युपसर्गपूर्वस्य प्रणयति अन्यत्र तु मनतीति स्यादित्यादिग्रहणं कर्तव्यमेव । पाठ इति किमिति–पाठ इत्यनेन धातुपदेशस्य ग्रहणाण्णकारीयतेरनुपदेशत्वाभावः । अथैवं नादय एव पठ्यन्तां तथा च सति नदमारभ्यन्म भवतीत्याह–णोपदेशमेवेति–एवमुत्तरत्र षोपदेशेऽपि ।

‘षः सोऽष्ट्यैष्ठिवष्वष्कः’ ।२।३।९८॥ नन्वत्राऽप्यादिरित्यधिकाराभावेऽपि पाठबलादेव सपतीत्यादौ षत्वं न भविष्यति किं तेनाति ? सत्यं, परोक्षायामसिद्धत्वात् सस्य षत्वं ष्वष्कपुरित्यत्र फलम् ।

‘ष्ठरलाले कृपोऽकृपीटादिषु’ । २ । ३ । ९९ ॥ “ऋतोऽममन्वस्य०” इत्यत्र ऋग्रहितस्य प्लुतत्वं वदन् स्वरद्वारेणैव सिद्धे पुनरपि यत्र लृकारग्रहणं करोति तदेव बोधयति ऋत्प्रतिषेधे लृतोऽपि प्रतिषेधप्रसङ्ग इति ‘ ऋकारापदिष्टं कार्यं लृकारस्याऽपीति’। यथोक्तत्वात् मत्र “ईदूदेवस्य,” ‘ ऋतोऽत् ” चलीकृप्यत इत्यत्र “रिरौ च लुपि ” इति सिद्धम् ।

‘ग्रो यङि’ । २ । ३ । १०१ ॥ निजेगिल्यत इति–अत्र स्वादेरित्यस्य परे लत्वेऽसत्त्वम् । यदेव नाऽस्तीति–‘ न गृणाशुभरुचः ’ इति निषेधात् ।

‘नवा स्वरे’ । २ । ३ । १०२ ॥ निगार्यत इति–अत्र निपूर्वात्तुतो णौ ञ्यौ लकारे णिलोपमेत्त्वभयप्राप्तौ नित्यत्वात् पूर्वं णिलोपः । न च ‘ प्रत्ययलोपे प्रत्ययलक्षणम् ’ इतिन्यायेन लत्वस्याऽपि प्राप्तौ तस्याऽपि नित्यत्वं वर्णाश्रये प्रत्ययलक्षणस्य प्रतिषेधात् ।

‘परिघाङ्कादीनां लत्व लः’ । २ । ३ । १०४ ॥ अर्थोपादुत्कत्वात् किंचत्र

१ ३-१-७७। २ ७-४-९९। ३ ४-२-३७। ४ ४-३-२८। ५ ४-१-५६। ६ १-४-११।

स्यये क्षपितः । अर्चेरेव क इत्यादौ क अतकः । तूपौ च "सेणीकास्तीक०" इति त-र्येरीकं । कपिरसम्बन्धात् क-कपिरकं । नञ्पूर्वात्रायतेः 'गेमिथमि०" इति बहुवचनात् कि स्यपि भरम् । लिखेः समानार्थात् रिखेर्भिदायाकि रेखा । भद्रः सौत्रात् "ऋज्रेन्द्राग्र०" इति अमे गौरादित्वात् च नवमी । भटेः सौत्रात् " कुम्बिकेनि० " इति किम्पि चरिष्ठे । किम्बिमिति ध्वनिमततीति 'कैम्बित्' इति के किम्बिमः ।

'जपादीनां पो वः' । २ । ३ । १०५ ॥ विष्टपी " विष्टपोळप० " इति । तृतीयं विष्टपं प्राम्याशिविष्टपमिति पठन्ति ।

इत्याचार्यश्रीहेमचन्द्रानुस्मृते शब्दानुशासनेऽवचूरिकायां

तृतीयः पादः ॥



'स्त्रियां नृतोऽस्वस्रादेर्ङीः' । २ । ४ । १ ॥ अतिराज्ञीति-पूजितो राजा स्त्री चेदतिराज्ञीति । " पूजास्वतेः० " इति समासान्तप्रतिषेधः । राजानमतिक्रान्तेत्यपि कृते समासान्तविधेरनित्यत्वमिति काशिका ।

'अधातूदृदितः' । २ । ४ । २ ॥ गोमदादिदन्तोऽप्युदिदिति-अवयवधर्मेण समुदायोऽपि व्यपदिश्यते-अत्राऽवयव उदित्, तद्धर्मेण समुदायोऽपीत्यर्थः । भुकभित्यादि " भ्सहतोः " इत्यत्र महत्साहचर्यात् क्विबन्तस्य कंसो न ग्रहणमित्यर्थस्य ज्ञापित त्वादत्र न दीर्घः । प्रत्ययस्योदित्यादिति-अजादेरित्यत्राऽऽप्तवित्याख्यानेन तदन्तस्य ग्रहणे सिद्धे यदिदं व्याख्यानं तद्युत्पन्तरस्याऽपि दर्शनार्थम् । यत एकस्याऽपि साम्यस्य सिद्धयर्थं बहवोऽपि युक्तय उपन्यस्यन्ते ।

'अञ्चः' । २ । ४ । ३ ॥ अञ्च इति कृतनलोपाभावस्य धातुरूपस्याञ्चेर्निर्देश-स्तेनाऽर्चाविवक्षये नलोपाभावे तदविवक्षये लोपेऽपि ङीः सिद्धः । अच इति निर्देशे तु 'अच्च् प्राचीर्थम" इतिवत् कृतनलोपस्यैव स्यात् । इत्थं च प्राञ्चीप्रत्यञ्चीत्यादौ ङीर्नाऽऽप्नुयात् ।

'णस्वराऽघोषाद्वनोरश्च' । २ । ४ । ४ ॥ ननु 'निरनुबन्धग्रहणे न सानुबन्ध-कस्य' इति क्वनिप्ङ्वनिपोर्ग्रहणं न प्राप्नोति ? उच्यते-'निरनुबन्धग्रहणे कचित्सानुबन्धस्य ग्रहणम्' इति न्यायात् न दोषः । वनोऽन्तस्येति-ननु प्रत्ययस्येति सर्वस्याऽपि प्राप्नोति

१ उणा० ९ । २ उणा० ५२ । ३ उणा० ३११ । ४ उणा० ५१५ । ५ ५-१-१७१ । ६ उणा० १७ । ७ ७-३-७२ । ८ १-४-४६ । ९ २-१-१४ ।

तत्कथमुक्तमन्तस्येति ? उच्यते, गात् न् धन् इति कृते भविष्यति। अतिधनुनीति-पूजितः भाऽतिभा स्त्री चेदतिधनी। नियमार्थमिति-यत्स्वरापोपादेव यतो ङीर्भवति। तेन सह मुक्तेत्यादौ पूर्वेणाऽपि न भवति। विपरीतनियमस्तु "स्त्रियां नृतो०" इत्यस्याऽऽरम्भात् न। विपरीतनियमे हि राज्ञीत्यादौ स्वरात् परस्य नकारस्याऽभावात् "स्त्रियां नृतो०" इत्यनेन ङीर्न स्यात्।

"या बहुव्रीहेः" ।२।४।५॥ बहुमरुत्कतरीति-अन्ये चन्द्रगोम्यादयो "नोपोम्मवतः" इति प्रतिषेधमिच्छन्तो बहुमरुत्केत्येव रूपयन्ति, स्वमते तु व्यक्त्या सूत्रस्य प्रवर्तनाच्च निषेधः।

'ऊघ्नः'।२।४।७॥ ऊघ्निस्यादेश इति-अयमर्थः, यदि समासान्तविधौ ऊघ्निस्यादेशं न कुर्यात् किन्तु न इत्येव तदाऽन्नो वेत्यनेन विकल्पः स्यान्न तु "स्त्रियां नृतो०" इत्यनेन नित्यं ङीरिति। पञ्चकुम्भोधेति-ननु तुपः पित्वात् 'क्यङ्मानि" इत्यनेन पुंवद्भावः कथं न भवति ? नैवम्, "स्त्रियामूधसोऽन्" इत्यत्र स्त्रियां विधेः व्याख्यानात्। विषयव्याख्याने हि निर्निमित्तत्वार्थम्। ततो यदि पुंवद्भावोऽभिमतः स्यात्तदा स्यामूधसोऽनिति सनैमित्तिकमेव कुर्यात्। ननु कुम्भामिति कृते ङीरपि कथम् ? उच्यते-तदा गौरादौ पठ्येत। निमित्तव्याख्याने हि "मूर्त्तेः ङीवे" इत्यपि तत्त्वपि "स्त्रीवे" इति ङीनिवृत्तौ तन्निमित्तकसमासान्तस्याऽपि निवृत्तिः प्राप्नोति। ततश्च पञ्चकुम्भोधा इति विसर्गान्तं रूपं प्राप्नुयादिति समासान्तविधौ तन्निमित्तक आदेशो नाऽकारि।

'अशिशो'।२।४।८॥ ननु ऊधन्शब्दस्याऽशिशुशब्दस्य च बहुव्रीहिविशेषणत्वेन समानाधत्वादेकयोग एव क्रियताम् ? उच्यते-बहुव्रीहावव्यूधन इति तदन्तस्य विधिः, अशिशोरिति च स्वरूपस्येति योगविभागः।

'संख्यादेर्हायनाद्वयसि'।२।४।९॥ इकमि तत्त्वपि चेति-"वर्षे-काळेभ्यः" इत्यस्य। शब्दाभिप्रायमेतदुक्तम्। तन्त्रोपोतस्तु हायनशब्दस्य काल-वाचकत्वाभावे "घन ङीव" इत्यनेनाप्येवेच्छति।

'नोपान्त्यवतः'।२।४।११॥ उपान्त्यलोपो नाऽस्तीति-"वं वम्य संयोगात्" इति निषेधनस्वर्थः। स्त्रियां नृत इत्यस्यापीति-अन्यथाऽन्नोऽनुपान्त्य वतो वेत्येकयोगः क्रियेत। अतिपर्वणीत्यत्र वाक्युत्पत्तिपक्षाभयमात् पर्सीन्पोपा"

---

१ २-४-३ । २ २-४-११ । ३ ३-२-२ । ४ ७-१-११९ । ५ १-४-१६ । ६ ९-४-१६ । ७ ६-१-८ । ८ ६-१-१४ । ९ २-१-१११ । १ २-४-४ ।

इति ङी एव न भवति, किन्तु नान्तत्वात् " स्त्रियां नृतो० " इत्यनेन । सखिप्रभृतीनीति-अनेनः कप् प्राप्तः, " सहाद्युत्पयोगे " इति निषिध्यते ।

' मनः ' । २ । ४ । १४ ॥ ङीर्न भवतीति-बहुव्रीहौ मन्नन्तोऽप्यमन्नन्तद्वारा ङीर्भवत्येव । यथा ' दातुं प्रदानोचितभूरिधाम्नी ' इति । अतिमहिमेत्यत्राऽतिक्रान्तो महिमा यमेति बहुव्रीहौ-" अनो वा " इत्यस्य " मनः " इत्यस्य च द्वयोरन्यत्र चरितार्थत्वात् परत्वात् प्राप्तमपि प्रतिषेधं बाधित्वा विशेषविहितत्वादनो वेति विकल्प एव । योगविभागादिति-न मन्नुपान्त्यवद्भ्यामित्येवंरूपात् ।

' ताभ्यां वाऽऽपूडित् ' । २ । ४ । १५ ॥ पूर्वाभ्यामिति-" मनः ", "नोपान्त्यवतः " इत्येताभ्याम् । " महत्त्वयोगाय महामहिम्नामाराधनीं तां नृपदेवतानाम् । दातुं प्रदानोचितभूरिधाम्नीमुपागतः सिद्धिमिवाऽस्मि विद्याम् " ॥ १ ॥ किरा० ३ श्लो २१ । त्रैरूप्यमिति-" वो बहुव्रीहेः " इति वचनाद् वनन्तस्याऽपि त्रैरूप्यं तेन सुधीवे सुधीवानौ सुधीवर्यौ ।

' अजादेः ' । २ । ४ । १६ ॥ विपूर्वात्प्रातेः के विव्रातेति न्यासः । पूर्वापहाणेति-अपहीयतेऽस्यामनया वा " कैरणाऽऽधारे " अनट् । अपहानशब्दोऽपि टिद्द्वारेण ङीप्रत्ययाभावार्थमजादौ द्रष्टव्यस्तेन पूर्वा च साऽपहाना चेति भावन्तेन वाक्यं कार्यम् । क्रियासम्बन्धाच्चेति "पूर्वपदस्था०" इति णत्वाभावः । <u>नामग्रहणे न तदन्तस्येति</u> न्यायाद्बाधन्ताद्दापः प्राप्तिरेव नाऽस्ति किमाद्यतिव्याख्यानेनत्याह-अत एव चेति ।

' ऋचि पादः पात्पदे ' । २ । ४ । १७ ॥ ननु ऋचि पादो वा क्रियताम् । ऋचि अभिधेयायां टाप् भवतीति सूत्रार्थः, नः विकल्पपक्षे ऋच्यभिधेयायामपि " वा पादः " इति ङीः स्यात् । ' वा पादः " इति प्राप्तेऽयमारभ्यते ।

' आत् ' । २ । ४ । १८ ॥ ननु याच्ञेत्यादीनामनेकलिङ्गानां यः स इत्याद्यकारान्तप्रयोगदर्शनादकारान्तत्वनिर्णयादस्तु तत्र आप्, खट्वादीनां तु नित्यं स्त्रियां वर्तमानत्वादकारान्तप्रयोगादर्शनादनिश्चयात् कथं तेभ्य आबित्याशङ्क्याऽऽह-खट्वादीनामिति । उपदेशाच्चेति-यद्यकारान्तो न स्यात्तदा नाऽऽबन्त इति तस्याऽऽप्द्वारेण ह्रस्वोऽपि न स्यादित्यर्थः । आदिति किमिति-अवर्णादिति क्रियतामित्यर्थः । सोमपा स्त्रीति सोमं पिबतीति विच्, आदितिवचनादत्राऽऽप्न भवति । ननु पाऽत्राऽऽभावात्

---

१ १-४-३ । २ ७-३-१७४ । ३ १-४-११ । ४ १-४-१२ । ५ १-४-५ । ६ ४-२-११९ । ७ २-१-१४ । ८ १-४-६ ।

मान्योराकारश्रुतेस्तथैव विद्यमानत्वात् किं तदभावेन विनश्यतीति ? उच्यते—यदि सति ' दीर्घज्जसात् " इति सेर्लोपः स्यात्तथा सोमपाः कन्याः पश्येत्यत्र " लुगातोऽनापः " इति शसि लुक् स्यात् ।

' गौरादिभ्यो मुख्यान्ङीः ' । २ । ४ । १९ ॥ कयोः शिवेरपस्य कुमारिदुनाटीति ध्ये-काम्य ध्येभ्यस्ततो ङ्यां ' व्यञ्जनात्तद्धितस्य० " इति यलोपे भावे क्यङी ध्येषी । अनडुहीमार्य इति अत्राऽनडुहीशब्दो व्यक्तौ प्रवर्तितो जातिवाचित्वे तु ' स्वाङ्गाद् ङी " इत्यनेनैव पुंवन्निषेधः सिद्धः । ननु तथापि पृथिवीशब्दस्याऽऽग्रहायणीशब्दस्य च स्वतः स्त्रीत्वा " नेरतः श्री " इति पुंवद्भावो न भविष्यति किमर्थमनयोस्तथा पाठः ? उच्यते—नहि समस्यपाठस्य पुंवद्भावप्रतिषेध एव प्रयोजनं किन्तु तद्धितलोपे लुगभावोऽपि । तत्र कश्चिदयं कश्चिदेकं यथासम्भवमूहनीयं ।

' अणाञेयेकण्नञ्स्नञ्टिताम् ' । २ । ४ । २० ॥ काम्बान् लपिष्यामीति काम्बलावी " कर्मणोऽण् " पाणिनीयमिति—पणत पणः ' पणिमनि " अच् सोऽस्याऽस्ति पणी तस्याऽपत्यं वृद्धं " ङसोऽपत्ये " अण् पाणिनस्याऽपत्यं युवा " अत इञ् " । पाणिनिना प्रोक्तं " तेन प्रोक्ते " इति विषये " वृद्धे ञ्णीयः " इति इञो लुक्, अन्यथा " ञिञोऽनः " इति स्याद्धतो दोषीयः । बहुकुम्भकारा नगरीति—अत्र बहवः कुम्भकारा यस्यामिति कार्यम् । यदा तु बह्व्यः कुम्भकार्यो यस्यामिति क्रियते, तदा " नौधिस्त्वदितः " इति कपि बहुकुम्भकारीकेति भवति ।

' वयस्यनन्त्ये ' । २ । ४ । २१ ॥ शिशुर्वा इत्यादि—द्वे वर्षे भूता " प्राणिनि भूते " इत्यः । उत्तानशयेति—उत्तानाः शेते " शीङ्धौविभ्यः " अः ।

' द्विगोः समाहारात् ' । २ । ४ । २२ ॥ सम्यगाहरणमेकीकरणं समाहारः । समाहारद्विगुर्यस्येति—समाहारविशेषितेन द्विगुना नाम विशिष्यते । अयमर्थः—समाहारं विना पञ्च राजयः प्रिया अस्य पञ्चराजप्रिय इत्यादावपि ङीः स्यात् । ननु द्वन्द्वसमाहारस्य द्वन्द्वैकत्वेति नपुंसकत्वविधानेन स्त्रीत्वाभावात् समाहार इत्युक्तेऽपि द्विगोः समाहारादिति उच्यते किं द्विगुग्रहणेन ? अयोग्यार्थमित्यपि न वाच्यम् । तद्धितलुकीति करणात्, नैवम् ; समाहारादित्युक्ते समाहारान्तात् नाम्न इत्यायातं च । ततश्च वाक्समयमतिक्रान्ता अतिवाक्त्वचीति स्यात् । इदं चाऽतिवाक्त्वचेति ।

१ १-४-२५ । २ २-१-१ । ३ ३-४-८ । ४ १-१-५६ । ५ १-२-४९ । ६ ५-१-७२ । ७ ५-१-११ । ८ ६-१-२८ । ९ ६-१-३१ । १० ६-१-१४१ । ११ ६-१-११ । १२ ६-१-२८ । १३ ७-१-११ । १४ ६-४-११२ । १५ ७-३-११६ ।

'परिमाणात्तद्धितलुक्यबिस्ताचितकम्बल्यात्' । २ । ४ । २३ ॥ परिच्छित्तिक्रियाकरणमात्रं परिमाणं नेह प्राह्यं मानादिस्वरूपमादित्याह-तथेति । तदन्तादिति-अर्थे कार्यासम्भवात् । परिमाणवाची यः शब्दस्तदन्तादित्यर्थः । द्विकुडवस्यादि-" श्रेयाः " इत्यस्य विधानसामर्थ्यात् न लुप् तस्य च विकल्पेन प्रवृत्तेः पक्षे " संख्यायाः० " इति कः, 'अनोऽम्यढिः स्तुप्' । द्विपण्यति-" पर्णपार० " इत घे तस्य विधानसामर्थ्यादलुपि । ननु बिस्तादय उन्मानवचनास्तथाहि बिस्तशब्दन पटिः पलयतान्युच्यन्ते । आचितशब्देन तोलकम् । कम्बल्यशब्दनाऽप्यूर्णापलशतम् । तथाऽपरिमाणात् ङीप्रसङ्गाभावात् किं निषेधेन ? नैषमनर्थकानि हि नामानि भवन्ति, यत्र देशविशेषे परिमाणवाचान्यप्यसानि सन्ति, तदर्थं पुन्यत एव निषेधः ।

'काण्डात् प्रमाणादक्षेत्रे' । २ । ४ । २४ ॥ क्षिपन्ति निवसन्त्युप्तानि बीजानि वृद्धिं वा गच्छन्त्यस्मिन्निति " हुयोमा० " इति त्रे क्षत्रम् । षोडशहस्तप्रमाणं काण्डम् । भक्तिग्रहणं सहितार्थस्य स्त्रीत्वार्थम् । क्षेत्रसंभिताभ्यामिति-पञ्चाभ्यां का ण्डाभ्यां क्षेत्रं परिच्छिन्नं ते काण्डे अपि क्षेत्रसम्भिते ।

'पुरुषाद् वा' । २ । ४ । २५ ॥ द्विपुरुषीति-मात्रटो " हस्तिपुरुषादण् " इत्यणो वा " द्विगोः संशये च " इति लुप् ।

'रेवतरोहिणाद् भे' । २ । ४ । २६ ॥ रेवत्यां जाता रेवतीति अत्र वाच्या । ततो गौणोऽपि रेवतीशब्दो नक्षत्रे वर्तते । ननु गौरादिभ्य इत्यतो मुख्याधिकारे मुख्यादेव प्राप्नोति तत्कथमत्र गौणात् ? उच्यते-मुख्याधिकारेऽपि कोऽपि शाब्दा वृत्त्या कान्याभ्यां वृत्त्या प्राधान्यं प्राप्तम् । अत्र शाब्दाभ्यां वृत्त्या प्राधान्यम् । नक्षत्रलक्षणोऽर्थो यदि वाच्यो न भवेत्, तदा कथं तद्विशिष्टः कालो वाच्यः स्यादयुना प्रकारेणेति । कथं रोहिणशब्दस्याऽनक्षत्रावात् ङीन प्राप्नोतीत्या शङ्का । प्रकृत्यन्तर मिति-अर्थमेदात् प्रकृतिभेद इत्यर्थः ।

'नीलात्प्राण्यौषध्योः' । २ । ४ । २७ ॥ जातिशब्दादपि जातौ नित्यस्त्री त्वाज्जातेरित्यप्राप्तेऽनेन ङीः । ये तु नीलः पट इत्यावान्तरेऽप्यर्थस्याऽपि दर्शनादनि त्यं स्त्रीत्वमभ्युपगच्छन्ति, तेषां गुणशब्दस्यैवेदमुदाहरणम्, जातिशब्दात्तु " जातेः० " इति ङीः सिद्ध एव ।

'क्ताच्च नाम्नि वा' । २ । ४ । २८ ॥ प्रवृद्धा चाऽसौ विलूना चेतीति-

१ १-४-१३५ । २ १-४-११ । ३ १-४-१४१ । ४ १-४-१४८ । ५ उणा ४५१ । ६ ७-१-१४१ । ७ ७-१-१४४ । ८ १-४-५४ ।

मर्थकथनमिदं प्रशुद्धमाऽसौ विघ्नम ङीषेवेति तु काप, अन्यथा गौषस्वाभावाद् ' गोश्चाऽन्ते० " इत्यप्रवृत्तौ विघ्नशब्दस्याऽकारान्तस्याऽभावाद् ङीन स्यात् ।

' केवलमामकभागधेयपापापरसमानार्यकृतसुमङ्गलभेषजात् ' । २ । ४ । २९ ॥ केवलीति–केव्यते सेव्यते केवलिमिरिति " मृकिकन्दिवृण्डि० " इत्यलः । मामकशब्दादिति–ननु कथं मामकग्रहणं नियमार्थं शोभनो मामकोऽस्याः सुमामके-त्यत्र तदन्तविधेरिष्टत्वादित्यर्थताऽप्युपपद्यत एव । विधिनियमसम्भवे हि विधिरेव ज्यायस्त्वात् । सत्यामपि वा नियमार्थतायां विपरीतनियमः कस्मान्न भवति । मामक-शब्दस्यैव नाम्नीति ? अत्रोच्यते–इह प्रकरणे तदन्तविधेरिष्टत्वेऽपि मुख्याधिकारात् मुख्यमामकशब्दान्तान्न ङीः । कल्पेतरेव पैत्रैः संज्ञाप्रतीतिन स्वमुख्यतदन्तैः । अत एव कल्पता एव कल्पतादय उदाहृता न कृतसमासा इत्युपपद्यत एव नियमार्थता । विपरीतनियमोऽपि न भवति । तथाहि–कल्पतादीनामपि संज्ञायां ङीर्निवर्तितः स्यात् । वचनारम्भसामर्थ्यात् संज्ञाऽपि बोध्यतेति तेषां वैयर्थ्यं स्यात् । यथोक्तनियमे तु न किञ्चिदनुपपद्यत इति । अपरीति–पिपर्तीत्यपि परस्तस्य समासेऽपरी । भेषजीति–'भेषृ ग्' भये, भजि भेषं जयति " कंचित् ' इति डे ।

' भाजगोणनागस्थलकुण्डकालकुशकामुककटकबरात् पक्वावपन-स्थूलाकृत्रिमामत्रकृष्णायसीरिरंसुश्रोणिकेशपाशे ' ।२।४।३०॥ कुण्डीति, इह कुण्डशब्दस्य ङीविधानं विसदृशार्थमेव । जातिवचनात् " जाते० " इत्यनेनैव सिद्धत्वात् । कुशान्येति–काष्ठमयी तदाऽऽकृतिर्यस्याः । नागेति–न अगः "नञोऽस्य० ।

' नवा शोणादेः ' । २ । ४ । ३१ ॥ चण्डीति–कोपनायामने न विकल्पो गौर्यां तु गौरादिपाठात् नित्यं ङीः । अरालशब्दो नकारोऽत्र इष्टव्यः, पक्षिविशेषे तु गौरादौ । मरीचिपर्यायो मरुत्र ऋषिविशेषो मरुत्वति तु पाठान्तरम्, ' मृखेड् ' मर्दने, विमन्था इषि । अत एव पाठाद् रेफात् परतो दीर्घ ऊकारागमे मरूजाः स्नेहमुच्चः किन्तु तण्डुला । हस्तिनीति–कनलस्य हनुशब्दस्याऽप्रयोगाच्चदन्तमुदाहरति ।

इतोऽस्त्यपधात् ' । २ । ४ । ३२ ॥ भवतेर्भार्या, अभद्रोपचारेणाऽसतीति भविभाया अप्राप्तमपि भवयोगात् ङीत्वम् । भद्रविपायुभवाऽग्निस्तेषां भार्याऽभेदोप-चारेण भद्रली । रूपमिति–मत्राऽपि क्तिप्रत्ययोऽस्तीत्याशङ्काथः । अन्येत्विति–पाणिनः पूर्वे । 'ननु कन्छपा उपास्य' इति न्यायात् कदन्तस्यभेस्पननैवाऽस्ति प्रभृती-

---

१ १-४-९६ । २ उणा. ४९५ । ३ ५-१-१ १ । ४ २-४ ५४ । ५ ३-३-१२८ ।

नाम्गुणादीनां ङीर्भविष्यति, किं तेषां पृथगुपादानेन ? सत्यम्, तन्मते उणादीनामत्र तिप्रभृतिभोम्यन्तानामेव भवति; तेनाञ्गीत्यदित्यादिषु ङीर्न भवति ।

'पद्युतेः' । २ । ४ । ३१ ॥ पादाम्यो इन्यत "ङ्यादिभ्यः", "विभेहवि०" पदादेशः ।

'पाक्तेः पाक्ते' । २ । ४ । ४ । ३३ ॥ शक्तिशब्दस्य त्र्यप्रत्यावप्रत्ययत्वादिति प्रतिषेधे प्राप्ते प्रतिषिनो विकल्प आरभ्यत एव ।

'स्वराद्युतो गुणादखरो' । २ । ४ । ३५ ॥ अर्थे कार्यासम्भवादुत इत्या दिविशेषणायोगायोपधारानुभवमनः शब्दो गुण इत्युच्यते । ङीत्वायोगादिति–उकारान्तस्य पुंस्त्वविधानादित्यर्थः । यद्यपि महत्त्वरूपस्याऽऽकारगुणस्याऽस्यैतीयि विशेषण न घटते, तथाप्यत्राविस्थितनीलादिगुणस्य घटमानक सर्वस्याऽपि विशेषण भवति; यथा–कस्यचिद्गोश्चन्द्रक इति विशेषणं चिह्नं कृतं चन्द्रकोऽयं गौरिति, पश्चाद्गोस मूहेऽपि चन्द्रकोऽयमित्युच्यते तथाऽत्राऽपि भविष्यति ।

'श्येतैतहरितभरतरोहिताद् वर्णात्तो नश्च' । २ । ४ । ३६ ॥ वाऽधिकार प्रधानत्वात् प्रत्ययविधिनैव सम्बध्यते ।

'असहनञ्विद्यमानपूर्वपदात्स्वाङ्गादक्रोडादिभ्यः' । २ । ४ । ३८ ॥ सहनञ्विद्यमानशब्दानां पूर्वपदरूपाणां वचनात् मध्यपदेन स्वाङ्गस्य व्यवधानेऽपि ङीप्रतिषेधो यथा विद्यमान कल्याण मुख यस्याः सा विद्यमानकल्याणमुखेति ।

'नासिकोदरोष्ठजङ्घादन्तकर्णशृङ्गाङ्गगात्रकण्ठात्' । २ । ४ । ३९ ॥ सह नासिकेति–सहस्य सो विकल्पेन भवतीत्यत्र न ।

'नखमुखादनाम्नि' । २ । ४ । ४० ॥ संज्ञाशब्दा एते इति, न तु यौगिका इत्यर्थः ।

'पुच्छात्' । २ । ४ । ४१ ॥ नासिकादिनियमात् नित्यौ वचनम्, यद्येव नासिकादि सूत्र एव कुतो न पठ्यते ?, किमर्थं पृथगुपादत इति ?; उच्यते–पुच्छादि त्यस्मैयोगाऽनुवृत्त्यर्थम् ।

'कबरमणिविषशरादेः' । २ । ४ । ४२ । "न सप्तमीन्द्वादिभ्यश्च" इत्यनेन मणिपुच्छीत्यादिषु मण्यादिशब्दानां पूर्वनिपातः ।

---

१ ५-१-२१ । २ ३-२-११ । ३ ३-१-१११ ।

‘पक्षाच्चोपमादेः’ । २ । ४ । ४३ ॥ ‘कबरमणिविषशरादेः’[१] पक्षाच्चोपमादेस्तु इत्येकयोगाकरणात् स्वाङ्गादिति निवृत्तम् । उलूकस्येव पक्षावस्या इति–अत्र उलूकशब्द उलूकपक्षे उलूकपुच्छे च वर्तते । यथोष्ट्रमुखे उष्ट्रशब्दः, अतश्चोलूकशब्द उपमानं भवतीत्युलूक इव पक्षावस्या इत्यादिविग्रहः । उलूकस्येव पक्षावित्यादि स्वार्थकथनम् ।

‘क्रीतात्करणादेः’ । २ । ४ । ४४ ॥ केचिदिति–अन्यमतेऽपि प्रत्ययोत्पत्तेः प्रागिति समासो बहुलाधिकाराल्लभ्यते । अन्यमतेऽपि बहुलाधिकाराश्रयणादेव ।

‘क्तादल्पे’ । २ । ४ । ४५ ॥ अभ्रविलिप्तीति–पूर्वपदस्य क्तान्तेन समासः । सूपविलिप्तीति–क्तान्तेऽल्पार्थस्य गम्यमानत्वादल्पशब्दस्याऽप्रयोगः ।

‘स्वाङ्गादेरकृतमितजातप्रतिपन्नाद् बहुव्रीहेः’ । २ । ४ । ४६ ॥ पूर्वपदस्यादिमाधिकं स्वाङ्गम् । क्तान्ताद्बहुव्रीहेरिति–कृतादिवर्जितो यः क्तान्तोऽविशेषणमिति न्यायस्य सोऽन्ते यस्य बहुव्रीहेः । हस्ताभ्यां पतितेति–कार्यमन्यथाऽनन्वयस्याभावेनैव ङीप्राप्तिर्नाऽस्ति ।

‘अनाच्छादजात्यादेर्नवा’ । २ । ४ । ४७ ॥ मासयातेत्यादिषु–माससंवत्सरशब्दयोः कालवचनत्वात्सुखदुःखानां च गुणवचनत्वाज्जातित्वाभाववचनत्वा द्बहुसमासादेरिति व्याख्या निषिध्यते ।

‘पत्युर्नः’ । २ । ४ । ४८ ॥ पत्युरिति पञ्चम्यन्तमधिकृतस्य बहुव्रीहेर्विशेषणं तेन च तदन्तविधिरित्याह–पत्यन्तादिति । बहुस्थूलपतिः पुरीति–स्थूलाः पतयो यासां ताः स्थूलपतय इति कृते पत्युर्न इति न विकल्पनाद्बहवः स्थूलपतयो यस्याः । ङ्यो न भवतीति–द्वितीयेन बहुव्रीहिणा बाधितत्वात् । पत्यन्तो न भवतीति–किं तर्हि ? स्थूलपत्यन्तः ।

‘सादेः’ । २ । ४ । ४९ ॥ सह विद्यमानवचनो, न तु तुल्ययोगवचनः सपत्न्यादाविति निर्देशात् । तुल्ययोगे हि पूर्वेण पत्येन सह पतिशब्दस्य नकारो न भवति तत्रार्थे सपत्नीति निर्देशो न स्यात् । ननु सादेः पत्युर्न इत्येकयोगो विधीयतां सादित्वेन बहुव्रीहावपि अन्यस्मिन् वा भविष्यति ? नैवम्, मुख्यादित्यधिकाराद् सादावेव स्यान्न तु बहुव्रीहौ । पृथग्योगे तु पूर्वसूत्रे मुख्यादिति बहुव्रीहिसमासस्यैव विशेषणं न पत्युः ।

‘सपत्न्यादौ’ । २ । ४ । ५० ॥ समानार्थमिति–धर्मादिषु पत्नीशब्दस्याऽ-

१ २ ४-४२ ।

ाठादिरपर्थः । पुंवद्भावप्रतिषेधार्थं चेति–" परंतः स्त्री० " इति " जातिश्च णि० " इति न प्राप्तस्य ।

'पाणिगृहीतीति' । २ । ४ । ५१ ॥ पाणिगृहीतीति–इति–प्रकारो येषां ते तथा म् बहुत्वात् लुप् ।

'पतिवत्न्यन्तर्वत्न्यौ भार्यागर्भिण्योः' । २ । ४ । ५३ ॥ अधिकरणप्रधा नादपीति–"तदस्यास्त्यस्मिन्०" इत्यत्र तदिति प्रथमान्ताद्विविवक्षनाऽप्राप्त इत्यर्थः ।

' जातेरयान्तनित्यस्त्रीशूद्रात् ' । २ । ४ । ५४ ॥ जातिः सामान्य मभिन्नबुद्धिध्वनिप्रसवनिबन्धनमर्थस्तत्र च कार्यासम्भवात्तद्वाचिनो ग्रहणमित्याह– जातिवाचिन इति । सकृदुपदेशव्यङ्ग्यत्व इति–उभयोरपि सम्बध्यते । पात्रीति– मव्युत्पन्नोऽयं " इवामा० " इति प्रत्ययान्तो वा । प्रत्ययान्तस्य तु टित्त्वात् ङीः सिद्ध एव । भ्रामणीति–अयमप्यव्युत्पन्नः निकषेति निपातो वा । मम अथवि कर्मणोऽपि पृषोदरादिनिपातो, मपरस्यापि माऽपान्तत्वात् ङीः सिद्ध एव । मालुषीति– " नोऽपत्यवाचो " इत्यनेन न पुंवन्निषेधः । तत्र पूरण्यन्तस्य ग्रहणात् । यद्यपि कठाद योऽपि ब्राह्मणविशेषास्तथापि कठादीनामत्रिलिङ्गत्वं न, यथा कठेन प्रोक्तं वेदमधीते या कठ ब्राह्मणकुलमिति तुर्ये जातिलक्षण विधेयमेव । कुटीति–मतान्तरेण कुटीशब्दस्य नित्यस्त्रीत्व स्वमते तु ' गृह कुट ' इति लक्षणेन पुंस्त्रीत्वमिति, मतान्तरेणैव दर्शितम् । कथं सुपर्णीति–सुपर्णशब्दस्यैव जातित्वं तस्य च कृते समासे मुख्यत्वमित्यभिप्रायः ।

' पाककर्णपर्णवालान्तात् ' । २ । ४ । ५५ ॥ आखुकर्णीति–आखोः कर्ण इव कर्णपत्रं यस्याः । ' सल ' गतौ सलत इति घञि सालो दन्त्यादिः ।

' असम्भस्त्राजिनैकशाणपिण्डात् फलात् ' । २ । ४ । ५७ ॥ पिण्डफलेति– पिण्डाकाराणि फलान्यस्याः, पिण्डफला कटुतुम्बी । यमिचन्द्रः–" कटुकालापुती तुम्बी, तथा पिण्डफला तथा । "

' धवाद्योगादपालकान्तात् ' । २ । ४ । ५९ ॥ मन्वन्तादिति–सम्प्रत्यथ सम्बधिनमपेक्षते, स च प्रत्यासत्त्वात्प्रकृत्यर्थस्यैव विज्ञायते, तेन धवन स्त्रियाः सम्बन्धा दित्यर्थः । कौमारीति–कुमार्येव प्रतीयते । मागात् सोऽयमिति–अत्र सोऽयमित्यभि सम्बन्धेन पृथिवी दिवम्या । न ह्ययमेषाऽभिसम्बन्धस्तस्येदमिति, किन्तु सोऽयमित्यपि।

---

१ १-२- १ । २ १-२-५१ । ३ ५-२-९ । ४ उणा० ८५१ । ५ १-१-५१ । ६ सिद्धा कौमुद प्र० श्लो. १ ।

अभेदाच्च भेदस्य निवृत्तत्वात् तद्विषयानुपपत्तिः । व्यतिरेकविवक्षेति–प्रवृत्तस्यैवमिति भेदविवक्षेत्यर्थः ।

‘ पूतक्रतुवृषाकप्यग्निकुसितकुसीदादै च ’ । २ । ४ । ६० ॥ ननु कुसिदादै चेति–पञ्चमीनिर्देशादैकारः प्रत्यय एव विज्ञायते । ततश्च ङीः, ऐकारश्च प्रत्ययौ भवत इति सूत्रार्थः कथं न लभ्यते ?, कथमुक्तमैकारश्चाऽन्तादेश इति ?, नैष दोषः; “ पत्यैऽध्यायी ” इति निर्देशात् । न चैकारस्य प्रत्ययत्वेऽध्यायीति भवति । वृषो धर्मः कपिर्वेदः इत्याद्युत्पत्त्यात् पृषोदरादित्वादीर्घे वृषाकपिः । वृषं दानधर्मादिकं कम्पितवान् वा, “ कमिकुष्ठि० ” इति इः ।

‘ मनोरौ च वा ’ । २ । ४ । ६१ । प्रत्ययसंनियोगार्थमकारोऽनुवर्त्तते । वा शब्दः प्रथमं विषयतया प्रधानेन ङीप्रत्ययेन सम्बध्यते, न त्वौकारेण तत्संनियोगविधानेनाऽप्रधानत्वादिति ।

‘ वरुणेन्द्रभवशर्वरुद्रमृडादान् चान्तः ’ । २ । ४ । ६२ ॥ आनन्त आगमो भवतीति–आनितिदीर्घोच्चारणं मतसङ्ग्रहार्थम् । अन्तग्रहणाभावे तु आनपि भिन्नप्रत्ययः स्यात् । किञ्चाऽन्तग्रहणाभावे “ अनेकवर्णः सर्वस्य ” इति स्यात् ।

‘ सूर्याद्देवतायां वा ’ । २ । ४ । ६४ ॥ सूर्यस्याऽऽदित्यस्येति–यथा कुन्ती ।

‘ यवयवनारण्यहिमाद्दोषलिप्युरुमहत्त्वे ’ । २ । ४ । ६५ ॥ यौवेरपि यवः नन्द्यादित्वादने च यवनः । यवाद्योगादिति च निवृत्तमिति–दोषाद्यर्थविशेषोपादानादिति शेषः, उरुमहत्त्वयोरेकार्थत्वेऽपि पृथगुपादानं यथासंख्यार्थम् । अन्न् न भवतीति–तद्विषय ङीविधानादित्यर्थः ।

‘ यञो डायन् च वा ’ । २ । ४ । ६७ ॥ डायन् चेत्यत्र डित्करणमाद्युपथ मीत्यत्र प्रयोजनाभावम् । डायन् चान्तो वा भवतीति–साक्षान्निर्दिष्टस्य डायन एव चान्वय न सम्बन्धो नानुमितेन ङीप्रत्ययेन प्रत्यासत्तेः । चावटा इति पक्षकरणाद् वा ।

‘ लोहितादिशकलान्तात् ’ । २ । ४ । ६८ ॥ व्यायतः ‘ हृपिरुचि० ” इति किरपत आकारलोपे च कृतः ।

‘ षावटाद्वा ’ । २ । ४ । ६९ ॥ अत्र ङीडायनोरुभयोरनुवर्त्तनात् प्राधान्याद् ङीप्रत्ययनैव चाशब्दस्य सम्बन्धो नाऽन्वाचीयमानेन डायनस्याद–स्त्रियां वा ङीर्भवति ।

---

१ १-२-५१ । २ उणा ६१४ । ३ ७-४-१७ । ४ उणा १८ ।

'कौरव्यमाण्डूकासुरेः' । २ । ४ । ७० ॥ कौरव्यायणीति–यदा कुरोर्गोत्रापत्यमपत्यं तदा "कुर्वादेर्ञ्यः"। यदा तु कुरो राज्ञोऽपत्यं तदा "दुनादि०" इत्यनेन । अयं चाऽनयोर्विशेषः दुनादीत्यस्य द्विर्बहुत्वादबहुषु लुब्भवति । मण्डूकस्याऽपत्यं "ङीबोढास्या०" इत्यण् । असुरस्य अपत्यस्य स्त्री चाक्षादीम् ।

'इञ इतः' । २ । ४ । ७१ ॥ पूर्वसूत्रे आसुरिग्रहणात् । ज्ञायमाऽनुवर्तते, अन्यथेञन्तद्वारेण सिद्धम् ।

'नुर्जातेः' । २ । ४ । ७२ ॥ अवन्ती, कुन्ती–"दुनादि०" इति ञ्यः । "कुन्त्यवन्तेः०" इति लुप् । तैकायनी–'तिकादेरायनिञ्' । स्तुबुकायनी– "अवो यञिञः०" तस्य लोपे इति–"राष्ट्रक्षत्रियात्०" इति विहितस्य 'द्रेरञणः०' इत्यननस्यपः । एवं दरदिति–"पुरुमगध०" इति विहितस्याञ्य एवं चाऽस्य गोत्र च चरणैः सहेति जातित्वम् । यद्वा मनुष्यपर्यायस्मात् स्वयमेव जातित्वम् । अवन्तीः स्त्रीति–अवन्तेरपत्यं बहवो माणवकाः "दुनादि०" इति ञ्यः । "बहुष्व०" इति लुप् । अवन्तीनिच्छति या स्त्री क्यन् । अवन्तेरपत्यं या स्त्रीति तु कृत दुनादिञ्यस्य "कुन्त्यवन्तेः" इत्यनेन लुपि क्यनः प्रागेव ङीः स्यात् ।

'उतोऽप्राणिनश्चायुरज्ज्वादिभ्य ऊङ्' । २ । ४ । ७३ ॥ ऊङिति दीर्घनिर्देश उत्तरार्थस्तेन "नारीसखी०" इत्यत्र श्वश्रूरिति दीर्घो निपातः सिद्ध । तत्र बहुलाधिकारादिति–समासप्रकरणे इत्यर्थः । यद्वा ऊमाऽऽश्वश्रू पति ज्ञिर्निपातनात् कैयटमतम् ।

'उपमानसहितसंहितसहशफवामलक्ष्मणाद्यूरोः' । २ । ४ । ७५ ॥ लक्ष्मणाद्यूरोरिति कृते सहिता ऊरुः, ह संहित ऊरुर्यस्य इत्यादावपि स्यात् । आदि शब्दः पूर्वावयववचनस्तेन च समासलाभादूरोरुत्तरपदस्य गम्यते, अत आह–उपमानादिपूर्वपदादिति–रूपमिति ? यथाऽऽदिग्रहणमकृत्वाऽन्तग्रहण क्रियत । तदा ऊरन्तादिति विज्ञायमानेऽप्याऽपूर्व प्रसज्यत । अस्ति चात्रोपमानात् परोऽप्यूरुन्तः स्यामूरुशब्दः । हस्तिन इवेत्यादि–यथा हस्तिनः सम्बन्धित्वेन स्याम्यूरू मायावत्तथा वक्ष्यापा अपि । एतावतोचैस्त्वं वक्ष्यापा निवेदितम् ।

'नारीसखीपङ्गूश्वश्रू' । २ । ४ । ७६ ॥ पङ्गुशब्दादप्राणित्वाद्भिति–

---

१ ६-१-१ । २ ६-१-११४ । ३ ६-१-५४ । ४ ६-१-१२१ । ५ ६-१-९७ ।
६ ६-१-११३ । ७ ६-१-११४ । ८ ६-१-१२१ । ९ ६-१-११६ । १० ६-१-११८ ।

यद्यप्ययं गुणवचनस्तथापि नाऽस्यैकवर्णव्यवहितः स्वरात् पर उकार इति " स्वराद्युतो " इत्यमनुष्यजातित्वादप्राणिजातित्वाभावाच्च ' उतोऽप्राणिन " इति चाऽप्राप्तेऽनेनोङ् । यदा श्वशुरशब्दः संज्ञाशब्दस्तदाऽपि श्वश्रूरित्येव भवति ।

' यूनस्तिः ' । २ । ४ । ७७ ॥ युवतिरित्यत्र ङीरिति 'नातिप्रश्ने सकृद्बाधित' इति न्यायात् पश्चात् " इतोऽक्त्यर्थात् " इत्यपि न ।

' अनार्षे वृद्धेऽणिञो बहुस्वरगुरूपान्त्यस्यान्त्यस्य ष्यः ' । २ । ४ । ७८ ॥ अन्तस्य ष्य इति—अणन्तमिञन्तं च बहुस्वरं नाम निर्दिष्टमिति निर्दिश्यमानानामिति न्यायेन अकारस्याऽऽदेशे प्राप्तेऽन्त्यग्रहणं, उत्तरार्थं च तेन ' भोजसूतयोः० " इत्यत्र " अनेकवर्णः सर्वस्य " इति न्यायात् न सर्वयोर्भोजसूतयोः ष्यादेशः । दैवदत्येति—अत्र शक्तिसामान्यात् ष्यादेश आबन्तसहित एव स्त्रीलिङ्गमभिव्यनक्ति । एवं कारिषगन्ध्येत्यपि । कान्यकुब्जीत्यत्र—कन्या कुब्जा यत्रेति " ङ्यापो बहुलं " इति ह्रस्वः । यदा कन्याशब्दं केचित्स्वरतः स्त्रीलिङ्गं मन्यन्ते । आर्षमाणीति—ननु च ऋषिवचन एवाऽत्र श्रुतमार्षशब्दस्ततोऽनार्षत्वमपि नाऽस्तीति ष्यप्रवृत्तिविकलत्वम्, सत्यम्; शास्त्रेऽस्मिन् प्रदेशान्तरेऽपि ऋषिभूत्या विहित " ऋषिवृष्ण्यन्धक " इति अस्यैव आर्ष इति रूढः । अयं तु विशिष्टेभ्य इत्येव विहितत्वादनार्ष इति प्रत्युदाहृतम् । पटुकारिषगन्ध्या निर्वाराहिरित्यत्राऽपि अणन्तस्य स्त्रीवृत्तित्वेऽपि मुख्याधिकाराद्यस्याऽन्यपदार्थे गुणीभूतत्वेन मुख्यत्वाभावान्न भवति । नन्वेते ङ्यादयः स्त्रीप्रत्ययाः स्त्रीत्वस्य द्योतका न तु वाचकास्तत्र यथा विप्रुडादयः शब्दाः स्त्रीप्रत्ययमन्तरेण स्वमहिम्नैव स्त्रीत्वं प्रतिपादयन्ति, तथा खट्वादयोऽपि प्रतिपादयिष्यन्ति; किमेभ्यः स्त्रीप्रत्ययविधानतः ? उच्यते—विचित्रशक्तयो हि भावा भवन्ति । तत्र यथा घनतरतिमिरनिकरनिरुद्धपदार्थे सार्थेऽपि निशीथे गगनतलप्रसृमरांशुरविरंशुरितरनिरपेक्षयैवाऽऽत्मानं प्रकाशयति । न चैवं स्तम्भादयस्तेऽपि चाऽस्मदादीनां प्रदीपादिप्रकाशकसव्यपेक्षा आत्मानं प्रकाशयन्त्येव । संश्लिष्टानां तु प्रदीपादिनिरपेक्षा एव । यथा वा सूर्योपलमध्यग खरांशुकरनिकरसम्पर्कसमासादितमाहात्म्यः स्वयं शीतोऽपि सान्तरमन्तःस्थितं दारु दहति न तु प्रत्यासन्नं प्रस्तुतं तत्र शैत्यमुपदर्शयति । तथा शब्दा अपि शक्तिवैचित्र्यात् कश्चित्सत्त्वेन पदान्तरसापेक्षया पदान्तरानपेक्षेण च स्त्रीत्वं प्रतिपादयन्ति । तत्र पदान्तरसापेक्षेण यथेयं गौरित्यादि । अत्र गवार्थस्योभयलिङ्गत्वादियमिति पदान्तरापेक्षेण गवादिशब्देन स्त्रीत्वं प्रतिपाद्यते । तस्य स्त्रीत्वाप्रतिपादने इयमिति न स्यात् । पदान्तरानपेक्षेण नाममात्रेणाऽऽवेशप्रत्ययाभ्यां च ।

---

१ २-४-३५ । २ २-४-७३ । ३ २-४-३२ । ४ २-४-८२ । ५ २-४-९९ । ६ ६-१-६१ ।

तत्र नाममात्रेण यथा स्वस्रादुहितेत्यादयः । अत्र नाममात्रमेव स्त्रीत्वप्रतिपत्तौ समर्थमिति स्त्रीप्रत्ययाभावः । आदग्रन सप्रत्ययनाऽप्रत्ययन च, सप्रत्ययन क्रोष्ट्री कारिषगन्ध्येति; अप्रत्ययेन तिसृश्चतस्र इति, प्रत्ययनैकनाऽनकन च, तत्रैकन राज्ञी स्त्रूपेति, अनकेन सान्तरेण निरन्तरेण सान्तरनिरन्तरण च, सान्तरण कालितरा हरिणितरेति, निरन्तरेण आर्याणी भवानी, सान्तरनिरन्तरण आर्याणितरा भवानितरेति । तदेवमनेकप्रकाराणां स्त्रीप्रतिपत्तौ नैकः प्रकारः शक्या नियन्तुम् । शब्दशक्तिस्वाभाव्यात् ।

' कुलाख्यानाम् ' । २ । ४ । ७९ ॥ गौरादित्वात्तु मौरिकी-मौलिकी । अथ मर्थः-प्रथममनन प्राप्तावस्य बाधनार्थं गौरादौ पाठः । ततस्तत्र पाठात् ङीरेव केवलो मा भूदिति क्रौड्यादौ पाठः ।

' भोजसूतयोः क्षत्रियायुवत्योः ' । २ । ४ । ८१ ॥ जातेरिति ङीप्रत्ययापवादोऽनेन ष्यादयः ।

' दैवयज्ञिशौचिवृक्षिसात्यमुग्रिकाण्ठविद्धेर्वा ' । २ । ४ । ८२ ॥ दैवयज्ञेति, देव एव यज्ञः पूजनीयो यस्य स तथा । सात्यमुग्र्यपि सत्यमुग्र यस्याऽसौ सत्यमुग्रः अत एव निर्देशात् मोन्त' । मान्तमव्यय वा । सत्यमुग्र रातीति वा ड । काण्ठेविद्धेति-यदा कण्ठे विध्यत स तदा " तत्पुरुषे कृति " इत्यलुप् । यदा तु कण्ठे विद्धमनेन तदा " अमूर्धमस्तकात्० " इत्यलुप् ।

' ष्यापुत्रपत्योः केवलयोरीच् तत्पुरुषे ' । २ । ४ । ८३ ॥ ष्याद्भ्यां ङीषवाप् तत्स्थाद्वा सेर्लुप् । पुत्रपत्योरित्यत्र सौत्रनिर्देशात् " लघ्वक्षरा० " इति पतिशब्दस्य न पूर्वनिपातः ।

' अस्य ङ्या लुक् ' । २ । ४ । ८६ ॥ इत्यधिकारे समानदीर्घत्वेनैव प्रयोगनार्थे सेत्स्यति किं लुग्ग्रहणेन ? सत्यम्, यदा पञ्चभिः क्रीत इति इकणो लुपि 'उभयोः स्थाने' इति न्यायादीर्घोऽपि ङीप्रत्ययस्य ङीनिवृत्तौ व्यञ्जनान्तता ईकारान्तता स्त्रीकारान्तता मा भूदिति लुग्ग्रहणम् ।

'मत्स्यस्य यः' । २ । ४ । ८७ ॥ मत्सीति-ननु ङ्यामिति-"सप्तम्या निर्दिष्टे पूर्वस्य" तथानन्तरस्येति न्यायात् मत्सीत्यत्र " स्वरस्य परे प्राग्विधौ " इत्यकारलुचः स्थानिवद्भावाद् ङ्यां निमित्त यकाराभावात् कथं लुगिति ? नैवम्, वचनादकन

१ १-१-१ । २ १-२-११ । ३ १-१-१६ । ४ ४-४-११ ।

“ यस्येति च ” इति ईपाऽकारलोपे ततो बिल्वकीयादेरित्यनेनाऽधिकारागतस्य छ कारमात्रस्य लोपे पुनः “ यस्येति च ” इति ईकारलोपे बिल्वकीयादेरित्यनेन यकारलोपे कर्तव्ये “ स्वरस्य० ” इति परिभाषयाऽकारलोपस्य स्थानिवत्त्वम् । ‘ न पदान्त० ’ इति यविधौ स्थानिवत्त्वनिरासात् ? सत्यम्, यविधौ स्थानिवत्त्वनिषेधेऽपि ईकारलोपे स्थानिवत्त्वमस्त्येवेति ईपग्रहणम् । ननु तर्हि बिल्वकीयादर्थस्येति क्रियताम् ? एवं कृते च कारादिकारे पुनर्यत् ग्रहणं करोति तदेव ज्ञापयत्यत्र सस्वरस्यैव यस्य लुक्, सस्वरस्य लोपे च स्वरव्यञ्जनसमुदायत्वात् “ स्वरस्य० ” इति स्थानित्वाभावे सर्वं भविष्यति, सत्यम्; एवं कृते यथाऽप्याशङ्का स्यादनेन यकारलोपे ईकारस्य लुग्भवतीति । यदी कारलोपोऽपि सम्मतः स्यात्तदा ईयस्येति कुर्यादिति ।

‘ स्यादेर्गौणस्याकिपस्तद्धितलुक्यगोणीसूच्योः ’ । २ । ४ । ९८ ॥ लुगिति-लुप यथोपलक्षणं तेनाऽगोमती गोमतीभूता गोमतीभूवत्यत्र च्वेरभावेऽपि लुभभावात् ङीनिवृत्तेरभावः ।

‘ गोश्चान्ते ह्रस्वोऽनंशिसमासेयो बहुव्रीहौ ’ । २ । ४ । ९६ ॥ अंशिसमासवर्जनात् समासस्याऽन्त एव ह्रस्वः । नन्वर्धपिप्पलीति-अनंशिसमासयो बहुव्रीहावितिं व्याहृतौ किमिति दर्शितम् । यतो ह्रस्वत्वे कृतेऽपि ‘परलिङ्गो द्वन्द्वोऽंशीति’ वचनात् पिप्पलीलिङ्गे ‘ इतोऽक्त्यर्थात्० ” इति ङ्यां रूप तदेव, सत्यम्; इतोऽक्त्यर्थादिति नैकस्विकस्मा ङीः ततोऽर्धपिप्पलिरर्धपिप्पलीति रूपद्वय स्यादिष्यते चाऽर्धपिप्पली त्येव । ननु तर्हि तुर्यभिक्षेति किमर्थं दर्शितम् ? यतोऽत्राऽपि ‘परलिङ्गो द्वन्द्वोऽंशीति’ वचनात् भिक्षेत्युत्तरपदस्य स्त्रीत्वे ह्रस्वत्वे कृतेऽपि पुनरापि सति तुर्यभिक्षामतिक्रान्तो यः सोऽतितुर्यभिक्ष इति । पूर्वपदार्थप्रधानत्वादंशिसमासस्य ‘ गौणो ङ्यादिः ” इति न्यायोपस्थापनात् “ गोश्चान्ते० ” इति ह्रस्वत्वे स्यादतितुर्यभिक्षा इति च साधुः ।

‘ क्लीबे ’ । २ । ४ । ९७ ॥ काण्डे कुड्ये इति-नन्वत्र पदं वाक्यमव्ययं चेति वचनात्क्लिङ्गत्वे ह्रस्वत्वप्राप्तिरेव नाऽस्ति तत्कथमुक्तमसिद्धत्वादिति ? सत्यम्, यद् स्याऽलिङ्गत्वेऽपि काण्डकुड्ययोरवयवयोर्मध्यस्थिं तयदा समुदाय काण्डकुड्ये इत्येव रूपे उपचर्यते तदा प्राप्तिः । यद्वा काण्डकुड्ये इत्यत्र योऽस्य स्थाने यश्चैका रेव तद् यकारः स कश्चित्पुनरकारसम्बन्धी कश्चित्तत्सम्बन्धी कल्प्यते-‘उभयोः स्थाने ’ निष्पन्नत्वात् ।

‘ वेदूतोऽनव्ययय्वृदीच्ङीयुवः पदे ’ । २ । ४ । ९८ ॥ इन्द्रहुत इति-

१ ६-४-१४८ । २ ६-४-१५३ । ३ ६-४-१११ । ४ १-४-१२ । ५ ६-४-११६ ।
६ १-६-६९ ।

इन्द्रं द्रुयति " कंसरूपोऽपवादे " इत्यपपपाद् क्विपि " धात्वादेः०" इति णुति " दीर्घैमैबोऽन्त्यम् " इन्द्रद्रुः पुत्रः । प्रकड्र इति–अकस्याऽस्यानि ' पुंवद्भाष० " इत्यण् " छेभ्यादिभ्यो रेऽच्" प्रकरान् द्रुयति, शेषं पूर्ववत् । ह्रपलीभूतमिति–अभूतवं हृतकं भूत मतान्तरेणेद वाक्यम्, अन्यथा अभिलिङ्गत्वाम प्राप्नोति । अभिलिङ्गान्या इति च वातिलक्षणे लिखितत्वादस्याऽभिलिङ्गत्वम् ।

' ङ्यापो बहुलं नाम्नि ' । २ । ४ । ९९ ॥ ङीसाहचर्यादापः प्रत्ययस्य ग्रहणं न तु क्विबन्तस्याऽऽन्नातरित्याह–आबन्तस्य चेति–नन्देः पचिपठि० " इति इः । बाहुलकादीर्घे नान्दी तस्या मुखम् । विटापुरमिति–विटं वायते क्विपि, " वो प्यमूभ्यवानेऽलूऽ " पृषोदरादित्वात् हस्वाभावे विटा विटा पूः ' ऋक्पूः " अत्समासन्तः ।

' भ्रुवोऽच्च कुसकुदृयोः ' । २ । ४ । १०१ ॥ भुकुसभृकुटिशब्दावपि नारायणकण्ठी ।

' मालेषीकेष्टकस्यान्तऽपि भारितूलचिते ' । २ । ४ । १०२ ॥ मालादिभिः प्रकृतस्य नाम्नो विशेषणात्तदन्तलाभात् कबलस्य व्यपदेशिवद्भावात् इस्वमिद्धौ किमर्थमन्तग्रहणमित्याशङ्कायामाह–इहमेवेति ।

' गोण्या मेघे ' । २ । ४ । १०३ ॥ विनैव तद्धितेन गोणीशब्दो गोणीप्रमितस्य प्रीत्यादयुपचाराद्वर्तते, यथा प्रस्थप्रमितं प्रस्थ इति । तस्य ह्रस्व इत्यर्थः । तस्यामपि या तद्धितलुचि अगोर्णीसूच्योरिति प्रतिषेध " गोण्याऽन्ते " इति च समासे ह्रस्वस्य विधानादिह ह्रस्वो नाऽस्तीति तदर्थमिदमारम्यते ।

' ङ्याब्रीदृता के ' । २ । ४ । १०४ ॥ सोमपिकल्पादौ ह्रस्वस्य दारादिकल्पादौ च पिति पुंवद्भावस्य सावकाशत्वात् पट्विकल्पादौ चोभयप्राप्ती परत्वात् पुंवद्भावे पट्विकल्पादि न सिध्यतीत्याह–ङीग्रहणमित्यादि । ङीग्रहणमनवकाशत्वात् पुंवद्भाव बाधत इत्यर्थः । प्रत्ययाप्रत्यययोरिति न्यायाम भवतीति–कर्कटरचि पृषोदरादित्वादात्वं, पचन पाके पनि "खेऽनिट " इति कत्वम् । अथ कापरतः पिपठिष " भीष् प्रकिया० " इति, यदा कस्तदा ह्रस्वः कस्मान भवति ? उच्यते–उणादीनामव्युत्पन्नत्वात्, व्युत्पत्तिपक्षे तु बहुलवचनाम भवति ।

न कचि ' । २ । ४ । १०५ ॥ बहुलश्मीक इत्यत्रैव " पुमनडुहो " बहुत्वे

१ ५-२-१६ । २ ४-१- ९ । ३ ४-१ १ १ । ४ ६-१ ११६ । ५ ६-१-१२ । ६ उण १ । ७ ४ ४-१२१ । ८ ७-३-७६ । ९ २ ४-१६ । १० ४-१-१११ । ११ उणा ९१ । १२ ७-३-१ ३ ।

तु “ श्रेयोऽथ ” कप् । पूर्वसूत्रे क इति निरनुबन्धे कपि प्राप्तिरेव नास्तीत्याह–न कपीति प्रतिषेध इति । नैषादकर्षुक इति–उपर्णादिकमिति इति ।

‘ इणोऽनुसोऽनिस्त्वयाप्परे ’ । २ । ४ । १०७ ॥ आपीति कृत उपश्लेषसप्तम्येव । आपुपश्लिष्टे ककार इत्वमित्यर्थस्य सिद्धेः परग्रहणं नियमार्थमित्याह–आबेव पर इति । सर्विकेति–सर्वा नाम काचित्तस्याः स्वार्थे “ यावादिभ्यः कः ” । “ केऽणः ” इस्वत्वेऽस्याऽयत्वविकारः । सर्वादिः सर्वशब्दस्य तु स्यादित्यपरिरित्यनेनाऽन्त्यस्वरात् प्रागकि सर्विकेति न स्यात् । मातृकेति–ननु यद्यपीहाऽऽप् नाऽस्ति तथा मिमीत इति धान्यमातुरपि मातृशब्देनाऽभिधानात्पुंस इत्यपि नाऽस्ति । ततो व्यञ्जनविकलत्वादेव प्रत्युदाहरणं युज्यते । प्रत्युदाहरणं हि तदङ्गाभावे कार्याभावं प्रदर्शयच्च दङ्गसामर्थ्यप्रदर्शनार्थमुपादीयते । तत्राऽङ्गद्वयवैकल्ये कस्याऽङ्गस्य वैकल्यादिह कार्याभाव इति निर्णयाभावादकस्याऽप्यभाव इति, नैष दोषः । जननीवचनस्याऽन्यस्यैवाऽभ्युपगमस्य मातृशब्दस्य ग्रहणात् । यद्वा प्रत्युदाहरणदिङ्मात्रमिदं तेन सम्यक्त्वादि प्रत्युदाहरणं द्रष्टव्यम् ।

‘ स्वज्ञाऽजभस्त्राऽधाऽत्रुत्ययकात् ’ । २ । ४ । १०८ ॥ स्वा ज्ञातिः स्विकेति–यद्यपि स्वशब्दः ‘ स्वो ज्ञातावात्मनि क्लीबे, त्रिष्वात्मीये धनेऽस्त्रियाम् ’ इति पठ्यते तथापि कुत्सितार्थविषये ज्ञातावपि स्त्रीत्वमत एव पाठात् । भवति सुपाधिमेदाल्लिङ्गयोगस्तदन्यलिङ्गस्य च यथा पचति रूपमित्यलिङ्गस्याऽपि नपुंसकलिङ्गत्वम् । कुटीरमिति–स्त्रीलिङ्गस्याऽपि नपुंसकलिङ्गत्वम् । विचित्रा हि शब्दशक्तयः । यद्वा ज्ञातिरत्र स्त्रीरूपा विवक्षिता तेन योनिमत्त्वात् स्वशब्दस्य स्त्रीत्वम् । न विद्यते स्वा यस्या इति कृते कपि अस्विका अस्वकेति रूपे । कपि तु अस्विका अस्वकेति रूपे । कपि निमित्तभूते विकल्पपक्षे “अस्याऽयत्०” इति न विकल्पसामर्थ्यात् । कपि तु “ नैकाऽऽप ” इति ह्रस्वे कृते अस्याऽप्यनत्वस्येव । न च सूत्रविकल्पः प्रवर्तते । सूत्रं विनाऽपि अस्विका अस्वकेति सिध्यत इति । अस्विकेति रूपमेक रूपमेव गतार्थमिति । स्वा आत्मा आत्मीया चेति–स्त्रीसम्बन्धात्राऽऽत्माधिविवक्षितस्तस्य च योनिमत्ता स्त्रीशरीरस्याऽभेदोपचारात् योनिमत्त्वात् स्वा इत्यत्र स्त्रीत्वम् ।

‘ द्वेषसुतपुत्रवृन्दारकस्य ’ । २ । ४ । १०९ ॥ यदा तु न द्वे न एषेति एषद्विशब्दौ नञ्पूर्वौ निरस्तविकल्प न प्रयोजयतस्तत्राऽपि कृते नञ्समासेऽनञ्समासे वाऽपीति द्वयी गतिः । उभयोरपि च पदयोर्विभक्तेः पर आविति । यद्योऽन्तरङ्गानपि विधीन् बहिरङ्गाऽपि लुब्बाधत इति समासार्थाया विभक्तेस्तत्पदाद्यत्वात् पूर्वं लुपा

१ ७-१-१४९ । २ ७-१-११ । ३ २-४-१ ४ । ४ २-४-१ ६ ।

" भागिकर्म्य० " इत्यनेन । " अभिरभागे च " इत्यपि भाङ्गुलकात् न । वृक्षं वृक्षमभि सिञ्चतीति—वीप्सार्थेनाऽभिना योगात् " कर्मप्रवचनीय० " इति द्वितीया । भात्वय भावय इति—प्रादेरन्यपरत्वादनर्थकतां दर्शयति । धातुपाठे योऽर्थस्तदपेक्षया धात्वर्थे भावय इत्युक्तमन्यथाऽनर्थकत्वाद्धातूनामयमर्थो न स्यात् । अभ्यन्तरीकृत्येति—बुद्धिस्थीकृत्येत्यर्थः । यस्माद्विशिष्टैव क्रियेति—क्रियायाः धर्मिकत्वात् सामान्यक्रियाया उत्पत्त्यनन्तरमेव विनाशादुपसर्गयोगे न स्याद्विशिष्टत्वमित्यर्थः । अन्तरङ्गत्वादेत्त्व दीर्घत्वयोरिति—अल्पनिमित्तत्वादेत्त्वदीर्घत्वयोरन्तरङ्गत्वं तागमस्य तु अल्पतरनिमित्तत्वाद् बहिरङ्गत्वम् । कृते च यत्रादेशे एकपदत्वात्तागमस्यैवाऽन्तरङ्गत्वम् । " ल्यपि लघुपूर्वात् " इतीति—उभयोः स्थाने निष्पन्नत्वाद् यकारवकारयोर्धातुग्रहणपदे स्यात् पुनरपि "ल्यपि लघुपूर्वात्" भवति । तस्याऽधातुत्वादिति—सनादेः प्रत्ययस्य क्रियार्थत्वेऽपि न धातुत्वं भ्वादिसाहचर्याद् भ्वादयोऽप्रत्यया एव धातवोऽन्येऽपि तथा । अमनो मनः सुमनति दुर्मनति अभिमनतीति वाक्यं कर्तव्य " कर्मणि समाये स्तः " भवत्र सलोपश्च । सुशब्दस्य भवतिना सम्बन्ध इति । यदा तु असुमनाः सुमना इति मनसा सम्बन्धस्तदा सुशब्दस्य प्राक् सिद्धमेव । ननु सुकटकराणि वीरणानि दुष्कटकराणि वीरणानीत्यत्र गतिसंज्ञकस्य सुशब्दस्य धातोः प्राक् प्रयोगः प्राप्नोति ?, नैवम् ; " दुःखीयतः कष्टाकष्टार्थात् च " " कर्मणि कर्त्रोर्भ्याद् भूकृञः " इत्यत्र च सित्करणात् । तस्य वैतत्प्रयोजन सिति भोऽन्तो यथा स्यात् । यदि च सुशब्दस्य प्राग्धातोः प्रयोगः स्यात्तदा सित्करणमनर्थकं स्यादिति । सुशब्दादिना कृदादेर्व्यवधानात् । सुशब्दात्त्वव्ययत्वाच्च भवति ।

' ऊर्यादिच्विडाचश्च गतिः ' । १ । ४ । ६१ ॥ सोऽयमित्यभेदोपचारेण कथितसादृश्यात्, येनाऽनुक्रियते तदनुकरणमित्याह । अनुकरणानीति—च्विडाचोः प्रत्ययत्वात् प्रकृत्याक्षेपात् प्रत्ययमात्रस्य धातुसम्बन्धासम्भवाच्च तदन्तप्रतिपत्तिरित्याह च्व्यन्ता इति । डाजिति चित्करणात्स्वितां कृत्वेत्यादौ चित्स्वरत्वात् " ऋदुशनस् " इत्यनेन डा इति तदन्तस्य गतित्वाभावात्तयो यथादेशाभावः । डाजिति कृत्वेति—कृत्वेत्यस्येतिना सम्बन्धः । इतश्च डाजित्यनेन अतो धातोः डाटश्च परस्परं न सम्बन्धः ।

स्वधायिष्व इति श्रुतेः, कथं स्वधा देवता सम्प्रदान भवेत ? उच्यते—पितृणामपि देवतारूपत्वात्तद्योगः ।

---

१ १-४-९१ । २ १-४-९० । ३ २-३-८ । ४ ४-१-४ । ५ १-४-११ । ६ ६-१-१३६ । ७ ५-१-१४ । ८ १-४-६४ ।

‘कारिका स्थित्यादौ’। ३।१।३॥ श्लोकवार्तिकस्तु कारिकाशब्दस्य सत्यपि धातुसम्बन्धसम्भवे प्रयोगादर्शनात् ग्रहणाभाव इति ।

‘अपग्रहाऽनुपदेशेऽन्तरदः’। ३। १। ५॥ मध्ये हिंसित्वेति-अन्तः शब्दो मध्येऽधिकरणभूते वर्तते परिग्रहे च, तत्र परिग्रहे प्रतिषेधादितरत्र गतिसंज्ञा विज्ञायते इति दर्शयति । चिन्तेषानाकथापने चिन्तयतीत्यस्य स्थाने कथयतीति प्रयोगो ज्ञेयः ।

‘कणे मनस्तृप्तौ’। ३। १। ६। सूत्रेऽव्ययमित्यस्याऽनुवर्तनात्कणे मनस् इत्येते अव्यये इति स्वरूपनिरूपणमात्रमेवेति । तृप्ताविति व्याख्यानेन श्रद्धानैकस्यम् ।

‘पुरोऽस्तमव्ययम्’। ३। १। ७। पुरः कृत्वेत्यत्र-पुरःशब्दात् असि सकारान्तोऽस्त्येवेति न द्वयन्नैकस्यम् ।

‘गत्यर्थवदोऽच्छः’। ३। १। ८। अत्र समासान्तविधेरनित्यत्वादत एव निर्देशाद्वा ‘ चर्मण्वतः ” इति समासान्तो न भवति । अवतेरपि पृषोदरादित्वाद वकारस्य छकारे ‘ स्वरेभ्यः ’ इति द्वित्वे अच्छ इति अव्याश्रयार्थेऽव्ययं निर्मलताद्यापनमव्ययम् ।

‘मध्येपदेनिवचनेमनस्युरस्यनत्याधाने’। ३। १। ११॥ अनत्याधाने इति अत्र-“ विभक्तिसमीप ” इत्यनेनाऽर्थाभावेऽव्ययीभावः । तस्मिन्नपि “ संख्या वा ” इति विकल्पादव्ययीभावाभावः तत्पुरुषो वा । मध्ये कृत्वा कार्यं तिष्ठतीति-औपचारिकेऽप्याधार इति वाच्योऽनत्याधानमस्ति । वचनं हि शब्दप्रकाशनफलं न केनापि सह समवैति ।

‘उपाजेऽन्वाजे’। ३। १। १२॥ उप अनु इत्येतं पूर्वस्थजतेर्योगि पृषोदरादित्वादेकारे-उपाजेऽन्वाजे ।

‘स्वाम्यऽधिः’ ३। १। १३॥ प्रादिरुपसर्ग इति वर्तत इति-अत्रैव सूत्रे मण्डूकप्लुतन्यायेन प्रादिरुपसर्ग इति वर्तते, न कर्मादि सूत्रेषु तेन कर्मणीनां न उपसर्गसंज्ञा । तदयं कृती स्यादित्यादौ “ गोधुक्उपसर्गो• ” इति न षत्वम् । प्रायोऽध्यनिपम इति-न केवलं समास एवेत्यर्थः । नन्वधिपूर्वः करोतिर्विनियोगे वर्तते तत्कथं स्वामित्वे अभ्यमान इति ? उच्यते-सत्यम्, विनियोगोऽपि चेत्स्वामित्वविषयो भवति ।

‘साक्षादादिश्च्व्यर्थे’। ३। १। १४॥ च्व्यन्तानामिति-अर्थग्रहणाच्च्व्यन्तानां विकल्पो न भवतीति । मान्तत्वं निपातत्वत इति-तेन लवणीकृत्येत्यादौ पूर्वस-

---

१ ७-१-१८ । २ १-१-२ । ३ १-१-१५ । ४ १-१-४ । ५ २-१-५६ ।

त्रविहितगतिसमासमभियोगे न भवति । तथा लवणां कृत्वा यवागूं भुङ्क्ते । क्षीवः कृतः क्षीता कृता क्षीताः कृता इत्यादावभिभवपक्षेऽपि गतिसंज्ञाया अभावात् मान्ताभाव ।

' प्राग्वत् यन्थ ' । ३ । १ । १९ ॥ प्रन्थतुकमिति–यन्थत्वनियतमित्यर्थः । युद्धा यादिर्हि यन्थननाऽऽनुकूल्ये व्यवस्थाप्यते । यन्थ इत्युच्यत इति–कारणे कार्योपचारात्, कारणं यन्थ कार्यमानुकूल्य यन्थ एवाऽऽनुकूल्यं भवेत ।

' नाम नाम्नैकार्थ्ये समासो बहुलम् ' । ३ । १ । १८ ॥ सामर्थ्यमनुभूय भवतीति–ननु भवनक्रियायाः सामर्थ्यविशेषः कृता, अनुभवनक्रियायास्तु पदानि कर्तृणीति भिन्नकर्तृकतायां क्त्वा न प्राप्नोति, नैवम्; भवनक्रियापदया तुल्यकर्तृकत्व, भवनक्रियायास्तु पदान्येव कर्तृणि, कोऽर्थः ? पदानां सामर्थ्यमनुभूय वर्तमानानां सामर्थ्यविशेषो भवति । न च वाच्यमनुभवनक्रियाया भवनक्रियायाश्च सामर्थ्यविशेष एव कर्तेति तुल्यकर्तृत्वं, यतः परस्परव्यपेक्षा पदानामेव समभवतीत्यनुभवनक्रियायाः पदान्येव कर्तृणि । अननुभूयैवेति–नित्यसमासत्वादिति ज्ञेय । जामदग्न्य इति–प्रथमापत्यस्याऽपि पौत्रकार्यकरणात् इयत्वविवक्षायां " गर्गादेर्यञ् " विस्पष्टादयः पट्वादीनां प्रवृत्तिनिमित्तस्य पाटवादेर्विशेषणानि, न तु द्रव्यस्येति विस्पष्टमिति नपुंसकत्वम् । अत एव मुख्य सामानाधिकरण्य नाऽस्तीति कर्मधारय तत्पुरुषाभावः । काष्ठा परं प्रकर्षमिति–काष्ठाशब्दस्य स्त्रीलिङ्गस्य क्रियाविशेषणत्वात् नपुंसकत्वे " अनतो लुप् " भवति ह्रस्वत्व तु बाहुलकाच्च भवति । ऊर्ध्वमौहूर्तिकमिति–ऊर्ध्वं मुहूर्ताद्यो भवः कालस्तत्र भवः, ' अध्यात्मादिभ्य इकण् " सप्तमी चोर्ध्व मौहूर्तिके " इति निर्देशादुत्तरपदवृद्धिः । पावसी इवेति–अत्रोत्तरपदप्राधान्यात् सेः ' अव्ययस्य " इति लुप् । एष दृष्टपूर्व इति–पूर्वं दृष्टा इत्यपि क्त निपातनात् ह्रस्वत्वम्, तेन न मे श्रुता नाऽपि च दृष्टपूर्वा इति सिद्धम् । सामान्येन समास कृत्वा पश्चात् स्त्रीत्व वा । चरन्ति गावो धनमस्येति–अत्र समास चरन्तिगुरिति स्यात् । नित्यस–ख्यादिरिति–ऐकपद्यात् ' ह्रस्वोऽपदे वा " इति ह्रस्वविकल्पाप्रवृत्तेर्नित्यं यस्वादि भवतीत्यर्थः । पदस्यार्थमिति–अन्य स्वाङ्गरक्षे ह्यावित्यादिषु तुल्येऽप्येकत्वादिषु नामार्थत्वात् कवलायाश्च प्रकृतेः प्रयोगाभावात् भाष्यमत्र प्रथमैकवचनेन तस्य च " दीर्घ ङ्याब्० " इत्यनेन लुप्, ' अनतो लुप् " इति यति तन्मतप्रमाणापाऽस्य पदस्यार्थमिति । स्याद्यन्तार्थप्राधान्यादिति–स्याद्यन्तस्य माख्यायप्रधानत्वात्तदुपस्थापितत्व, अ तत्त्व च सामान्य; सामान्य च नपुंसक ततः " अनतो लुप् " ।

---

१ ६-१-७३ । २ ३ ४-५९ । ३ ६-१-७८ । ४ ५ ४-१ । ५ ३-१-७ । ६ ३-२-११ । ७ ३-४-४५ ।

‘ सुजर्थे संख्यया संख्येयाय संख्यया बहुव्रीहिः ’। ३ । १ । १९ ॥
विकल्पः संशयो वेति–ननु विकल्पसंशययोः को भेदः ? उच्यते–निर्णये सति विकल्पः, यथा–देवदत्तो भोज्यतां यज्ञो वा, यद्वा विकल्पे क्रियाप्रवृत्तिः संशये तु न। विकल्पे क्रियाप्रवृत्तिर्यथा द्वित्रिभ्यो देहि भोजनं, तत्र द्वाभ्यां त्रिभ्यो वा देहीति विकल्पो गम्यते । यतोऽस्मिन् सति क्रियाप्रवृत्तिः । संशये क्रियाप्रवृत्त्यभावो यथा पुरुषेभ्यो देहीत्युक्ते त्रिभ्यो दातव्यं चतुर्भ्यो वेति संशेते । न ज्ञायते त्रयश्चत्वारो वाऽऽगता इति च संशयः । ननु द्विदशा इत्यादौ तु सुजर्थे समासः कस्मान्न क्रियते ? उच्यते, यदि नोच्यते तदाऽनभिधानात् ।

‘ आसन्नादूराधिकाध्यर्धार्धादिपूरणं द्वितीयाद्यन्यार्थे ’। ३ । १ । २० ॥
आसन्न–पूरणमभिधेयत्वेन विद्यते यस्य प्रत्ययस्य यस्मिन् वाऽर्धादित्वादक्षरे पूरणार्थेविहितः प्रत्यय उच्यते, तस्य च केवलस्याऽसम्भवात् तदन्तशब्दस्य चाऽर्धादीति विशेषणमित्याह–पूरणप्रत्ययान्तमिति । द्वितीयादिर्यासां विभक्तीनां ता द्वितीयादयो द्वितीयादयश्च तदन्यश्च तस्यार्थः । आसन्नदशा इति–आसन्नाः संख्येयस्तस्य प्राधिकत्वादत्र दशन्शब्दः संख्याने वर्तते । परं संख्येयेन सहाऽभेदेन बहुवचनम् । यदि संख्येयवृत्तिना दशन्शब्देनाऽऽसन्ना दश येषामित्येव वाक्यं क्रियते न दशत्वमिति तदा संख्येयेऽभिधेय इति दर्शनेन निषेधाच्च स्यादनेन समासः । नवैकादश वेति पर्यायश्च विघटेत । यत इत्थं कृते एकेनविंशति–एकविंशतिसंख्याप्रतीतिः । यथा दशशब्दो दशत्वे संख्याने वृत्तस्तथा विंशत्यादयोऽपीत्याह–एवमासन्नविंशा इति । अदूरदशा इत्यादिषु “ विप्रतिषेधसर्वाणि ” इति संख्यायाः पूर्वनिपातो न भवति । “ प्रमाणीसंख्याड्डः ”–इति संख्यायाः समासान्तविधानात् । अधिका दश येभ्यो येषु वेति–एकाद्यवयवापेक्षया दशानामधिकत्वं तद् एकादशादिसमुदायापेक्षयाऽपि ज्ञेयं, तेनाऽधिकयोगे “ अधिकेन भूयसस्ते ” इति सप्तमीपञ्चम्यौ सिद्धे यच्छब्देन च बहूनामेकादीनामभिधानात् पञ्चमीसप्तम्योर्बहुवचनमित्याह–येभ्यो येषु वेति । एकादशादिषु दशानामधिकत्वं कथमित्याह–एकाद्यपेक्षमिति । ननु तर्हि कथमधिका दश यस्येत्येकवचनेन वाक्यं न कृतं ? उच्यते–बहुवचनमवयवावयविनोरभेदविवक्षया । एकादशादयोऽवयविनि एकादयोऽवयवास्तत उपचारादवयवस्यैकस्याऽवयविनां च बहुवचनम् कोऽर्थो ? । येभ्यो येषु वा एकादशादिसमुदायेभ्येकाद्यपेक्षयाऽधिका दश इत्यर्थः । अधिकविंशा इति–अव्युत्पन्नोऽयमधिकशब्दस्तेन “ [illegible] ” इति न पुनर्विधिः अन्यथा क्षेपान्त्यद्वारा नियमः स्यात् । एवमधिकविंशा इत्यपि । अद्ध

१ १-१-१५ । २ ४-१ १२ । ३ १-३-१११ । ४ १-१-५४ ।

पञ्चमर्षिका इति–"प्रत्ययः प्रकृत्यादेः" इति न्यायेन पूरणप्रत्यये सति पञ्चमीत्यस्य पूरणप्रत्ययान्तत्वात् नार्धपञ्चमत्वस्य तेन "वर्धितकको०" इति न पुंवन्निषेधः। ननु यथा बहुव्रीहिणा विभक्त्यर्थस्याऽभिधानात् षष्ठ्यादयो न भवन्त्येव लिङ्गसंख्ययोरभिधानात्तयोर्द्योतकत्वात् स्यादयो न प्राप्नुवन्ति, उच्यते–स्वार्थिकत्वात् स्यादीनां समासेनाऽभिहितेऽपि स्त्रीत्वादौ तद्द्योतनाय भवन्ति। स्त्रियां यद्वत् नाम तस्माद् स्यादयो भवन्तीति हि तत्राऽर्थः। तथा चित्रगुरिति समासेन नामार्थमात्रस्य कर्मादिशक्तिरहितस्यैकत्वादय उक्तास्ततः कर्मादिगतैकत्वादिप्रतिपादनाय वचनानि भवन्ति। चित्रगुं पश्य, चित्रगुणा कृतमिति; प्रथमा तर्हि न प्राप्नोति समासेन संख्याया अभिधानात्, नैवम्; साऽपि न केवला प्रकृतिः प्रयोक्तव्या न च केवलः प्रत्यय इति समयाद् भविष्यति। अथवा यदा चित्रगुरेकत्वविशिष्टो नामार्थः प्रतिपिपादयिषितस्तदा विभक्त्या विनाऽसौ न शक्यते प्रत्याययितुमिति प्रथमैकवचनं विषयमेव द्वित्वबहुत्वयोर्द्विवचनबहुवचनविधिः।

'एकार्थं चानेकं च'। ३।१।२२॥ समानोऽर्थोऽधिकरणमिति–यथाऽऽरूढो वानरो यस्मिन्नित्यत्र–आरूढोऽपि स वानरोऽपि स। चित्रगुश्चैत्र इति–ननु यथा चार्थे द्वन्द्वविधानाद् द्वन्द्वे चकारस्याऽप्रयोगः, एवमिहाऽपि चैत्रादेः प्रयोगो न प्राप्नोति, नैष दोषः; चित्रगुशब्देन तद्वान्मात्रं सामान्येनोच्यते न तु विशेष इति तत्राऽवश्यं विशेषार्थिना विशेषोऽनुप्रयोक्तव्यः। चित्रगुः कश्चैत्र इति वा विकल्पेन नरो वने रमते "क्वचित्" इति तु नराऽस्त्यस्याऽस्तीति वा वानरः, अन्तःस्थितीनीति–अर्थकथनमिदं विग्रहस्तु अन्तेषु स्थितीनि, अन्तःस्थितीनीति। अत्रान्तरसमासः कार्यः। अन्यथैकार्थत्वं न स्यात्। पञ्चनावप्रिय–इत्यत्राऽपि समासान्तत्वात् ङीर्न प्राप्नोति स्वार्थिकाः क्वचिदित्यतः अकारान्ताभ्यां ङीविधानात् समासस्य ङीन भवतीति न्यासकारः। यथा स माता तथा मे पितेति–स मातेत्यर्थकथनं स माता स मातेति तु विग्रहः। ततो यद्यपि स मातेति तथापि च त्रयाणां पदानां सन्निधौ सह समासः प्राप्तः। न च वाक्यमेकार्थत्वात्सामानाधिकरण्यसमासः। यतो य एष मातृशब्दः स एव सम्बन्धितत्वेऽकार्थत्वमस्ति। अस्योदाहरणस्याऽयमर्थः–यथा–कश्चिन्निरत्नविस्पृष्ट कीदृक् कुलशीलादिना तव पितेति? स आह–यथा स मातेति। अथवा स्नातीति कश्चिदुक्तः स आह यथा–स मातेति। यथा शुद्धा मे माता तथा पिताऽपीत्यभिजनशुद्धिरपि स्नाने किं साधनं स्नानेन ?, ततः सुस्नातं मो इति।

'उष्ट्रमुखादयः'। ३।१।२३॥ उपमानमुपमेयेन समस्यमानं नैकार्थता भवेत्, स एव चन्द्रस्तदेव मुखं न भवत्यतो भिन्नार्थत्वम्। सामान्यवाचिना यदि–साधारणधर्मवाचिनास्यानादिरूपमयत्वं।

---

१ १-१-१४। २ ३-१-१।

‘ सहस्तेन ’। ३। १। २४॥ तेनेति तृतीयान्तप्रतिरूपको निपातो गृहीतः। न तुल्ययोग इति–ननु तुल्ययोगविद्यमानार्थयोः को भेदः? उच्यते–क्रियागुणद्रव्यै-रुभयोः सदृशः सम्बन्धस्तुल्ययोगः। विद्यमानार्थता तु न तथा। तथाहि–सकर्मका-त्मनेपदमित्युक्ते यथा धातोरात्मनेपदं न भवति तथा कर्मणोऽपि। तथा सलोमको भोज्यतामिति यथा देवदत्तो भोज्यते न तथा लोमान्यपि। क्वचिच्च भवतीति–तुल्य-योगे तु भवत्येव। सहेति गर्दभीति–अत्र तत्पुत्राणामस्तित्वमेव विवक्षितं न तु वहन-क्रियेति विद्यमानार्थता।

‘ दिशो रूढ्याऽन्तराले ’। ३। १। ९८॥ अन्तरालस्याऽन्यपदार्थत्वेऽपि प्रथमान्तत्वात् “ एकार्थे वा ” इत्यनेन न प्राप्नोतीति वचनं कथमायार्थं च, कथ-मिति चेत्? उच्यते– “ सप्तम्या ” इत्यत्र हि सूत्रे सामान्यविहिते बहुव्रीहौ न तस्मि-न्निति व्याख्यानात्। एवं “ सुग्रार्थे० ” इत्यादिसूत्रत्रयमपि।

‘ तत्राऽऽदाय मिथस्तेन प्रहृत्येति सरूपेण युद्धेऽव्ययीभावः ’। ३। १। २६॥ ‘काकाक्षिगोलकन्यायेन’ मिथः शब्दः प्रत्येकमभिसम्बध्यते। अत एव सूत्र-मध्ये पठितः। प्रहृत्येति–इति शब्दो वाक्यस्वरूपपरामर्शार्थः। स च प्रत्येकं सम्ब-ध्यते, तत्राऽऽदाय मिथ इति मिथस्तेन प्रहृत्येति। अव्ययीभावसंज्ञस्यात्र–‘ननु संज्ञा संज्ञान्तरबाधिका भवति’ न्यायाद्बहुव्रीहिसंज्ञाऽप्यस्तु?, नैवम्; द्विगुमेवेति चकारकरणात् द्वितीया संज्ञा न। केशाकेशीति–नन्वन्यचिकीर्षितायाः क्रियाया अन्येन करणं क्रिया-व्यतिहारः तत्र च एकेन कचग्रहणमकारि तदपरो न विधत्ते परचिकीर्षितं, किन्तु स्वचिकीर्षितमिति क्रियाव्यतिहारो नाऽस्तीति कथं समासः? उच्यते–यद्यपि स्वचि-कीर्षिताऽन्या क्रिया तथापि तत्सदृशत्वादेकैव। यथा यदयं मे ओदनं दास्यति तदा-ऽहमप्यस्मै तमेव दास्यामि यथार्थिकं तमेव ददाति? एवं तत्सादृश्यादन्योऽन्योदनः स एवोच्यते। एवमत्राऽपि। केशेषु च केशेषु गृहीत्वा युद्धमनेनेति–एकः केशान् अन्यश्च मुष्टिनोऽस्तो न मिथोऽभाव ।

हस्ते च पादे च गृहीत्वेति–यदा तु हस्तं च पादं चेति कृत्वा “ प्राणितूर्याङ्गाणाम् ” इत्येकत्वे हस्तपादं च हस्तपादं च मिथो गृहीत्वा कृतं युद्धमिति क्रियते तदा हस्तपा-दाहस्तपादीति भवति। व्यायामग्रहणमिति–बाहोश्च बाहोश्च मिथो गृहीत्वा व्यायामः कृतः। क्रियाव्यतिहारे आत्मनेपदं यस्तनी आताम् व्यायासं कुर्वन्तावित्यर्थः।

‘ नदीभिर्नाम्नि ’। ३। १। २७॥ यनैर्गङ्गमिति यनैर्योगाद्गङ्गाऽपि यनैः सा

१ १-१-२२। २ ७-१-१०५। ३ १-१-१६। ४ १-१-११७।

विद्यते यत्र । स्वरूपस्य च ग्रहणमिति–उत्तरसूत्रे पञ्चनदमित्यत्र । स्वरूपग्रहणाच्च पर्यायाणां स्रोतस्विनीनिम्नगासिन्धुप्रभृतीनां न ग्रहः ।

'संख्या समाहारे' । २ । १ । २८ ॥ निवृत्तमिति–समाहारे इति वचनात् । उभयपदप्रधानः । समासोऽनेन विधीयते । समाहार इति किमिति–समाहृतिं विना द्विरावतीको देश इत्यादौ द्विगोरिव बहुव्रीहेरपि बाधकः स्यात् । द्विगुबाधनार्थमिति– ननु तर्हि तस्य काऽवकाशः ? सत्यम्, नदीनाम्नोऽन्यत्र गोदावरीणां सप्तत्वमिति– आ दशभ्यः संख्या संख्येये वर्तत इत्यस्य प्रायिकत्वात्, इतिविषम प्रमादयः संख्या नेऽपि वर्तन्ते । सप्तगोदावरीति–अन्यस्तु सर्वो नपुंसकत्वे "क्लीबे" इति ह्रस्वः, यथा द्विगोदावरि ।

'वंश्येन पूर्वार्थे' । २ । १ । २९ ॥ स इहाऽऽद्य इति–ननु वंशे भवा इति व्युत्पत्त्या सर्वेऽपि पाठकाः कारकाश्च कथं न लभ्यन्ते, आद्य एव कथं गृह्यते ? उच्यते–गौणमुख्ययोरिति न्यायात् । एकमुनिव्याकरणस्येति–एको मुनिर्वंश्य एतावानेव विग्रहः । व्याकरणस्येत्येतत्तु भिन्नपदम्, अतोऽन्यपदार्थाभावान्न बहुव्रीहिः । पूर्वपदार्थप्राधान्याच्च यथाक्रममेकवचनद्विवचनबहुवचनानि तेषां च "अनतो लुप्" । सप्त काशय इति–काशे राज्ञोऽपत्यानि 'कुर्वादि०" इतिञ्यः ।' बहुष्वस्त्रियां " लुप् । एकविंशतिभारद्वाजमिति–भरद्वाजस्येमे इत्येव कार्ये " तस्येदम् " इत्यण् अपत्ये तु विदा यञो " यञञोः० " इति बहुषु लोपः स्यात् । यद्यप्यत्रैकविंशतिशब्दस्य विशेषणत्वे नैकत्व तथापि पूर्वपदार्थप्रधानस्यैकविंशतिशब्दवाच्यस्य बहुत्वाद्भारद्वाजानां बहुत्वमेव वचनशक्तिस्वाभाव्यात् ।

'पारे मध्येऽग्रेऽन्तः षष्ठ्या वा' । २ । १ । ३० ॥ समासे निपातयिष्यमाणैकारान्तानामिदमनुकरणम् । पारं गङ्गाया इति विग्रहः । विकल्पमात्रमेतत् गङ्गायाः पारमित्यपि कृते पारेगङ्गमिति भवत्येव । "अममोक०" इत्यतः । तिर्यन्त इति वेत्यस्य प्रत्येकं सम्बन्धस्तेन यत्र षष्ठीसमासः प्राप्तस्तत्राऽनुज्ञायते । णियन्त इत्यत्र तु 'समर्थ०" इत्यनेनाऽव्ययत्वाभिसिद्धोऽपि विधीयते ।

'यावदियत्त्वे' । २ । १ । ३१ ॥ इयतो परिच्छिन्नसंख्यानामियतो वा परिच्छिन्नपरिमाणस्य भाव इयत्त्वं तस्मिन् । यावन्तीति–अव्यये तु यावदमत्राणीति कार्यम् । यावदमत्रमिति–पूर्वार्धप्रधानत्वादव्ययत्वे सिद्धः । अनव्ययत्वे तु जस्समासात् । याव

१ २-४-६७ । २ १-४-६१ । ३ ६-१-११८ । ४ ६-१-११४ । ५ ६-१-१६ । ६ ६-१-५४ । ७ २-१-१४८ । ८ २-२-६५ ।

इयमिति-असमस्तमिदम्। अतएव यावदित्युपादीयते। समासे हि गुणीभूतत्वाद्याव-दित्यस्योपादानाभावः स्याद्यथा यावदमत्रमित्यत्र।

'पर्यपाङ्बहिरञ्चः पञ्चम्या'।२।१।१२॥ परित्रिगर्तमिति पञ्चम्यर्थ-प्रधानात् प्रथमा। क्रियाविशेषणत्वविवक्षायां तु द्वितीया, यथा आमेस्तस्य संचरतामि-त्यत्रैव सर्वत्राऽपि। प्रतिपत्तमिहवायामेति—लक्षणप्रतिपदोक्तयोरिति न्यायात्। अप ग्रास इति—न च वाच्यं ग्रासाया अपेन सह सम्बन्धाभावादेव न भविष्यति समासः। यतो गतार्थस्याऽपेनैवाऽभिधानादस्त्यपेन ग्रासायाः सम्बन्ध इति। न च परत्वात् 'मोत्पन०' इति वस्तुरूपेणाऽस्य बाधेति वाच्यं, तत्राऽन्यप्रकरणात्।

'लक्षणेनाभिप्रत्याभिमुख्ये'।२।१।१३॥ प्रत्यग्निमिति—वैचित्र्यार्थं ससन्निधवाक्यम्। अभ्यग्नीति—अत्राऽग्निना शलभपातो लक्ष्यते इत्यग्निर्लक्षणं भवति। तस्य चाऽभिप्रतिभ्यामाभिमुख्यं प्रतिपाद्यते। अग्नौ हि शलभाः संमुखा एव पतन्ति। लक्ष्यीकृत्येति—लक्षणत्वेन लक्ष्यीकृत्येत्यर्थः। यद्वा दर्शनक्रियापेक्षयाऽग्निर्लक्ष्यः पतनक्रियापेक्षया लक्षणं यतः पूर्वं पश्यति ततः पतति। स्रुघ्नं प्रति गत इति—अत्र स्रुघ्नादन्यन्नगरान्तरं गन्तुकामः पथि व्यामोहात्तमेव प्रत्यागत इति नाऽस्ति गमनं प्रति स्रुघ्नस्य लक्षणता। यमुद्दिश्य हि गमनं क्रियते तल्लक्षणं भवति। अत्र तु व्यामोहाद्दैवं गतः। गतक्रियापेक्षया च स्रुघ्नस्य कर्मत्वम्। येनाऽग्निस्तेन गत इति—लक्ष्यं तेनेति लक्ष्यस्य द्योतकमग्निर्लक्षणं येनेति लक्षणस्य द्योतकमिति लक्ष्यलक्षणभावः।

'दैर्घ्येऽनुः'।२।१।१४॥ वृक्षमनु विद्योतत इति,—अत्र वृक्षो विद्योतन-स्य लक्षणत्वेन विवक्षित न दैर्घ्यस्येति।

'तिष्ठद्गुप्रभृत्यादयः'।२।१।१५॥ आयतीगवमिति—'इण्ह' आयन्तीति शतरि "इणोयण्०" इति यत्वे ङ्यां आयत्यो गावो यस्मिन्निति व्यस्तम्। इणौ त्व-र्थकथनमात्रमेवं पूर्वत्र तिष्ठद्गुरित्यत्राऽपि। असाधन इति—द्वितीयायन्ता इति शेषः। प्रमान्तमिति—प्रगततमन्तस्य प्रगतोऽन्तः प्रगतोऽन्तोऽस्मिन्निति वा। समन्तं समा-नत्व वा पदस्य तीर्थस्य तीरस्य चेति विग्रहत्रय दर्शनीयम्। एवं प्रान्तमिति, समतं परमतं चेहाऽपि द्रष्टव्यमित्येव प्रस्थार्थः। इति करणाच्च कृतापसव्यादिषु समासो न भवति। यत्र च दृश्यते तत्र चिन्तनीयम्।

---

१ १-१-४ । २ ४-१-१५ ।

'नित्यं प्रतिनाऽल्पे' । २ । १ । १७ ॥ शाकप्रतीति–पूर्वार्थे इत्यधिकारेऽप्यसम्भवादस्योत्तरपदार्थप्रधान एवाऽयं समासः ।

'संख्याऽक्षशलाकं परिणा द्यूतेऽन्यथावृत्तौ' । २ । १ । १८ ॥ ननु "सुप् नाम्नैकार्थ्ये०" इत्यतः सूत्रात् ऐकार्थ्ये सतीत्यनुवर्तते । तत ऐकार्थ्ये सति समास ऐकार्थ्यं चैकपद्यं तच्च समासे सति भवति । तत इतरेतराश्रये दोषे समासः कथं? उच्यते–यत्र यत्र येन सूत्रेण समासं कर्तुमिष्यते तत्र तत्र तस्मादेव ऐकार्थ्यं प्रथमं ज्ञातव्यम् । ततः समासः । अन्यथा हि सर्वाण्यपि सूत्राणि निरर्थकतां भजेरन्निति हि न्यासविदः । पञ्चादिभिर्द्यूताभावात् पञ्चपरीत्यादि न भवति । उत्कर्षस्तु चतुष्परीत्येव नित्यसमासोऽयमिति परिप्रयोगो वाक्ये नाऽस्त्यपि, किन्तु न तथा वृत्तमितिपर्यायः । समविषमवृत्ते इति–एकिकाद्विके रूपे । अन्ये पूर्वमिति–तस्मिन्नेव वृत्ते ।

'*विभक्तिसमीपसमृद्धिव्यृद्ध्यर्थाभावात्ययासम्प्रतिपश्चात्क्रमख्यातियुगपत्सदृक्सम्पत्साकल्यान्तेऽव्ययम्*' । २ । १ । १९ ॥ समस्यत इति–अन्वर्थरूपस्य समाससंज्ञायाः प्रवर्त्याऽव्ययीभावसंज्ञो भवतीत्युपसंहरति । अधिस्त्रीति–अत्राऽधिशब्दस्य कृत्याऽनेकार्थवृत्तेराधाररूपविभक्त्यर्थवृत्तित्वं प्रकाशयितुमुक्ताधारस्याऽपि सप्तम्यन्तेन स्त्रीशब्देन समासः । अत्ययमात्र इति–अत्ययेरुत्तरपदार्थधर्मस्याऽभावो न तूत्तरपदार्थस्यैव धर्मिण इत्यर्थाभावाद्भिद्यते । तत्र हि धर्मिण एवाऽभावः । धर्मिणोऽसत्त्वमिति–अत्र धर्मिणोऽनुत्पत्तिरेव न तु सतोऽभाव इत्यर्थाभावोऽत्ययाद् भिद्यते । अत्ययो हि सतोऽतिक्रान्तकालसम्बन्धिनी सत्तैवोच्यते । उपभोगादेः प्रतिषेध इति–न तु वस्तुन इति तदभावाद्भिद्यते । तैसृकमिति–त्रयो मुख्या आसां "सोऽस्य मुख्यः" इति कः । पृषोदरादित्वात्तिसादेशः । तिसृकास्तु मधोऽन्य् । अनुरथं यातीति–ननु नित्यसमासत्वात् पश्चाद्रूपेणाऽर्थान्तरेणाऽनित्यत्वमयं समस्यते तथा पश्चाच्छब्दोऽपि अव्ययत्वादर्थान्तरेण समस्यतां नित्यसमासत्वात् प्रयोगसमवायि वाक्यं न प्राप्नोति, उच्यते–' दीर्घपश्चादादयः " इति वचनात् पश्चाच्छब्दस्य अव्ययीभावसमासं प्रत्यव्ययस्य नाऽङ्गीकार्यत्वम्, अव्ययत्वे हि अव्ययीभावः स्यात् तत्र चाऽन्य इत्यधिकारात् समासान्तरप्राप्तावन्यत्वाभावात्तत्पुरुषो न स्यात् । युगपद्येतीति–शब्दशक्तिस्वाभाव्याचाऽन्यपदार्थप्रधानोऽयम् । सम्पत्सिद्धिरिति–सिद्धिरात्मधानिनिष्पत्तिः समृद्धिस्त्वन्यभावनिष्पत्तिरिति सिद्धिः समृद्धेरन्या ।

---

१ २-१-१८ । २ ७-१-११ । ३ १-१-८ ।

'योग्यतावीप्सार्थानतिवृत्तिसादृश्ये' । ३ । १ । ४० ॥ प्रत्यर्थमिति—समासेन वीप्साया द्योतितत्वादभिधानाद् द्विरुक्तिर्न भवति । वाक्ये तु तदभावादेवानेकस्यार्थस्य द्योत्यस्य सम्भवाद् द्विरुक्तिमन्तरेण वीप्सा द्योतयितुं न शक्यते । यथार्थानतिक्रम इति—पदमुत्तरपदं शक्त्यादिरूपं तस्यार्थः सामर्थ्यं तस्यानतिवृत्तिः । विन्यासविशेष इति—पूर्वस्यानेकस्य पदार्थस्य नियतदेशापेक्षं व्यवस्थापनं विन्यासः स एव विशेषः । यदि सदृगित्येव कुर्यात्तदा सकिखि देवदत्त इति सामानाधिकरण्यमेव स्यादित्याह—सादृश्यग्रहणमित्यादि । तेन देवदत्तस्य सकिखीति वैयधिकरण्यमपि सिद्धम् । सदृक्शब्दो हि धर्मिवाची, सादृश्यशब्दस्तु धर्मवाची ।

'यथाऽथा' । ३ । १ । ४१ ॥ यथावृद्धमिति—अत्र क्रमोऽपि प्रतीयते, ननु कथमुक्तं ये ये वृद्धा इत्यादि ? उच्यते—प्रतीयतां क्रमो वीप्साऽपि प्रतीयते । न चैकोऽनेकार्थो न भवति । पूर्वेणैव सिद्ध इति—पूर्वसूत्रोपात्तेभ्योऽर्थेभ्योऽन्यस्याऽपि प्रवृत्तेः । सादृश्ये प्रतिषेधार्थमिति—ननु यथा चैत्र इत्यादौ चैत्रसदृशो मैत्र इत्यर्थः । ततश्च वाप्रत्ययान्तः सादृश्ये न प्रवर्ततेऽपि तु सदृशि सतः किमुक्तं सादृश्ये प्रतिषेधार्थम् ? उच्यते—सादृश्योपाधिकत्वात् सदृगपि सादृश्यशब्देनोच्यतेऽतो वचनम् । सदृशि तु 'विभक्तिसमीप०' इति प्राप्ते निषेधः । अव्युत्पन्नस्य सादृश्यं विना योग्यतादिष्वर्थेषु 'योग्यता' इति सिद्धः समासः परं व्युत्पन्नस्य सदृगर्थे "विभक्ति०" इत्यादिना समासः प्राप्तस्तन्निषेधार्थं वचनम् ।

'गतिकन्यस्तत्पुरुषः' । ३ । १ । ४२ ॥ कु इत्यव्ययमिति—गतिसाहचर्यादव्ययमित्यधिकाराद्वा सम्भवे व्यभिचारेति न्यायात् कुशब्दस्य विशेषणं न तु गतिसंज्ञानां तेषामव्यभिचारात् । कुब्राह्मण इति नित्यसमासत्वात्कुत्सितो ब्राह्मण इत्यस्वपदविग्रहः ।

'सुः पूजायाम्' । ३ । १ । ४३ ॥ पूजाया अन्यत्राऽतिशयार्थेऽनुक्ताऽपि व्याख्यानिर्दिश्या ।

'प्रात्यवपरिनिरादयो गतक्रान्तक्रुष्टग्लानक्रान्ताद्यर्थाः प्रथमाद्यन्तैः' । ३ । १ । ४४ ॥ प्रान्तेवासीति—अन्ते वसतीत्येवं सति "प्रतोमीक्ष्ये" णिम्, "शयवासिवासेष्व०" इत्यलुप् । अनुलोम इति—"प्रत्यन्ववात्" इति अत् समासान्तः 'नोऽङ्गेदस्य' इत्यन्त्यस्वरादिलोपः । प्रत्युरसमिति—"प्रतेरुरसः" इत्यत्समासान्तः ।

---

१ ३-१-४ । २ ५-१-१४० । ३ १-३-२५ । ४ ५-१-४२ । ५ ५-४-६१ ।
६ ५-१-६४ ।

‘अव्यय प्रवृद्धादिभिः’ । ३ । १ । ४८ ॥ पुनः प्रवृद्धमिति–पुनः प्रवर्धते स्मेति कार्यं न तु भूयः प्रवृद्धमिति तस्याऽप्यव्ययत्वादनेनैव नित्यसमासत्वात्समुदायस्यैवाऽर्थः पर्यायो भवति । एवमुत्तरेष्वपि । अपस्पदमिति–अपात्स्थाने पदमित्येव कार्यं न स्वपदादिति तस्याऽप्यव्ययत्वात् । सर्वंभयः पुरुषः अनद्धापुरुषः ।

‘कस्युक्त कृता’ । ३ । १ । ४९ ॥ कृदन्तेनेति–प्रत्यासत्त्यातत्सूत्रविहितेनैव । आपः प्राप्ताविति–आप् किल स्त्रीत्वमात्रनिमित्तः । स्वादिस्तु सख्याकर्मादिनिमित्तः ।

‘तृतीयोक्त वा’ । ३ । १ । ५० ॥ वाशब्द इति–इह पृथग्योगादव नित्यत्वस्य निवृत्तिर्वा शब्दस्तु नित्यसमासाधिकारनिवृत्त्यर्थ इति ।

‘नञ्’ । ३ । १ । ५१ ॥ ननु न इत्येव निरनुबन्धः पठ्यतां किं सानुबन्धेन नञित्युपादानेन ? सत्यम् । चादिषु नकारोपदेशं वारयितुं नकारो निर्दिश्यते, प्रतिषेधशङ्काव्युदासार्थं च; नेत्युक्ते हि समासस्य प्रतिषेधः सम्भाव्यते । अगौरिति–नञा विशेषित आरोपितगवादिस्वरूपो गवयादिरित्यर्थः । निवर्त्यमानतद्भाव इति–निवर्त्यमानो यस्तस्योत्तरपदस्य भाव उत्तरपदप्रवृत्तिनिमित्तं गोत्वब्राह्मणत्वादि तद्वानित्यर्थः उत्तरपदस्यैवाऽर्थः । नञ्समासस्याऽपि निवृत्तिविशिष्टोत्तरपदार्थप्राधान्यमित्यर्थः । स चाऽयमिति–उत्तरपदार्थ इत्यर्थः । प्रतीयत इति–सनञ्शब्दशक्तिसामर्थ्यादिति योज्यम् । नन्विदं सूत्रं विनाऽप्यब्राह्मण इत्यादयो विशेषणमित्यनेन कर्मधारयेऽपि सेत्स्यन्ति, यतो नञ्विशेषणं ब्राह्मणो विशेष्यमिति ? उच्यते–यत्र द्वौ गुणशब्दौ भवतः तत्राऽनियमेन पूर्वनिपातः प्राप्तः, यथा–खञ्जकुब्जः, नञ् निषेधमात्रे वर्तते ब्राह्मणशब्दो ऽपि गुणमात्रे इत्यनियमेन प्राप्नोतीति वचनम् ।

‘पूर्वापराधरोत्तरमभिन्नेनांशिना’ । ३ । १ । ५२ ॥ पूर्वः कायस्येति–पूर्वो भागः कस्मात्कायादेः कस्य कायस्येति सम्बन्धाविवक्षया पञ्चमी कायशब्दात्र भवति । पूर्वं छात्राणामिति–बहुवचनाद्भेदप्रतीतिः, छात्राणां सम्बन्धिन कस्मादपि छात्रात् पूर्वमित्यर्थः । प्रसज्यप्रतिषेधः किमिति–यद्यत्राऽभिन्नेन भवतीति पर्युदासः स्यात्तदा समाहारस्यैकत्वात्तत्राऽपि समासः स्यात् । भिन्नेन न भवतीति प्रसज्यप्रतिषेधे तु विधीयमाने समाहारघटकस्य भेदपूर्वत्वाद्भेदनिमित्तः प्रतिषेधोऽपीति समासाभावः । अंशिनेति किमिति–ननु नाभेर्यः पूर्वो भागो व्यवस्थितः कायस्य शोभनो रिक्तो वेत्याद्यर्थोऽस्य विवक्षितस्तत्र पूर्वस्य कायापेक्षत्वेनाऽसमर्थत्वादेव नाभ्या सह समासो न प्राप्तः किमंशिग्रहणेन ? । सत्यम् । यद्यपि कायापेक्षत्वं पूर्वस्य तथापि प्रधानसापेक्षत्वे वृत्तिर्भवतीति ।

'सायाह्नादयः' । २ । १ । ५३ ॥ स्यतेर्घमि औणादिको वा सायशब्दो, मान्तमव्ययं वा । सायमह्न इति—ननु सायम्शब्देनाऽहरन्त उच्यते इत्युक्तार्थत्वात् सायमह्न इति विग्रहेऽहन् शब्दस्य प्रयोगो न प्राप्नोति ? सत्यम्, दिनान्ते यानि कार्याणि क्रियन्ते तान्यप्युपचारात् सायम् शब्देनोच्यन्ते; ततः सन्देहः किं कार्याण्यभिधीयन्त उत दिनान्त इत्यहन्शब्दः प्रयुज्यते । सन्देहसामर्थ्याद्वा तस्माच्च दिनान्त एव लभ्यते । षष्ठीसमासबाधनार्थमिति—ननु तावदिह सायशब्दस्याऽव्ययत्वात् "पूरणार्थ०" इति निषेधादेव भविष्यति किं तद्बाधनार्थमनेन ? उच्यते—यदाऽकारान्तः सायशब्दोऽनव्ययं नपुंसकलिङ्गस्तदा प्राप्नोति ।

'समेंऽशेऽर्धं नवा' । २ । १ । ५४ ॥ अर्धं पिप्पल्या—इत्यत्राऽर्धशब्दस्य तुल्यभागेऽयमिति क्लीबत्वम् । अर्धपिप्पलीति समुदायस्य तु परलिङ्गो द्वन्द्वोंऽशीति वचनात्स्त्रीत्वमवसेयम् । अतुल्यभागे तु ग्रामार्ध इत्यादावर्धमुदर्धेनेति पुंस्त्वम् । षष्ठीसमासबाधनार्थमिति—अयमर्थः-ग्रामार्धे भेदाभेदविवक्षायां प्रयोगद्वयं सिध्यति । एतत्कृतौ तु भेदविवक्षया भेदपक्षे षष्ठीसमासं बाधित्वा प्रयोगद्वयं सिद्धम्, अन्यथा भेदे षष्ठीसमास एव स्यात् । अर्धं पिप्पलीनामिति—पिप्पल्याख्यस्याऽवयविनोऽनेकद्रव्यस्वभावस्यादभिन्नस्वाभावात् समासाभावः । षष्ठीसमासस्तु भवत्येव पिप्पल्यर्धमिति । प्रक्रमादिना बहुत्वस्याऽप्यवगतत्वाद्बहुवचनान्तस्यापि प्रातिपदिकविवक्षा ।

'जरत्यादिभिः' । २ । १ । ५५ ॥ अपवेशसमिति—'शस' हिंसायाम्, विश मन   फुस्थम्" विशसेन प्रज्ञापणम्; अपवेशस्याऽर्धमरणमित्यर्थः ।

'द्वित्रिचतुष्पूरणाग्रादयः' । २ । १ । ५६ ॥ पञ्चम भिक्षाया इति—षष्ठीसमासोऽपि बाधकत्वेन यस्यैवाऽयमर्धसमासस्तस्यैव प्राप्नोतीति न भवतीति । द्वितीयं भिक्षाणामिति—अत्र बहुत्वात्त्रिधा भिक्षा ।

'कालोद्विगौ च मेयैः' । २ । १ । ५७ ॥ अंशादिनिवृत्त्यर्थमिति—कालमेयैरित्यभिन्नार्थग्रहणात् । जातोपरतादीनि मासजात इत्यादीनि बहुव्रीहावपि सिध्यन्ति । परं मासो मृतस्य मासमृत इत्यत्राऽन्यपदार्थाभावात् द्विगौ च द्व्यहसुप्त इत्यादाविति वचनम् । शब्दशक्तिस्वाभाव्यादिति—अन्यथा मासो जाताया इति स्त्रीत्वविवक्षायां मासजातस्यत्र ह्रस्वत्वं स्यात् । पूर्वपदप्राधान्याच्च टाबादाप् न स्यात् । द्वे अहनी सुप्तस्येति-द्व इति चाऽहनी इति च नामद्वयं सुप्तस्येति नाम्ना समस्यते ।

---

१ १-१ ८५ । २ ५ १-११४ ।

तद्धितपदे समासे जात सुप्च इत्युत्तरपद परे “ संख्या समाहारे च० ” इति द्विगुसंज्ञायां द्विगुविषये द्वयोः पदयोरुत्तरपदनिमित्ते द्विगौ भाविनि त्रयाणां तत्पुरुषः, अन्यत्र प्रयोजकमिति–अन्यत्र चरितार्थमित्यर्थः । द्विगौ तु द्विवचनान्त-मपि समस्यते इति भावः ।

‘ स्वयंसामी क्तेन ’ । ३ । १ । ५८ ॥ करणशक्तेः कर्तृशक्तेर्वा वाचकः स्वय शब्दः । आत्मनस्त्वर्थ इति–अत्र करणे कर्तरि वा तृतीया । सामिकृतमित्यत्र– “ विशेषणं विशेष्येणे० ” इत्यनेन कर्मधारयेणैव सिध्यति परं यदृच्छया पूर्वापरभावः स्यादतद्बाधनार्थमिहोपादीयते ।

‘ द्वितीया खट्वा क्षेपे ’ । २ । १ । ५९ ॥ क्षेप समासार्थे इति–तत्रैव तस्य प्रसिद्धेः । नित्य एवेति–यथु खट्वामारूढ इति वाक्य तस्यूर्वोत्तरपदविभागमात्रदर्शनार्थम् ।

‘ काल ’ । २ । १ । ६० ॥ कालयति भूतानि अच् । अत्यन्तसंयोगे इति– अहोरात्रेभ्य वैयर्थ्यात्स्यभावात् । मासप्रमित इत्यत्र च प्रथमो दिवसः प्रतिपच्चन्द्रमसा व्याप्तो न तु समग्रो मास इत्युत्तरेण न प्राप्नोति ।

‘ अत्यन्तसंयोगे ’ । २ । १ । ६१ ॥ क्तेनेति निवृत्तमिति । पृथग्योगादिति शेषः । सर्वरात्रकल्याणीति–यद्यपि समग्रम्भो न कालशक्तिस्तथाप्युत्तरपदार्थप्रधानत्वेन समासस्य सर्वरात्र इति समुदायोऽपि कालः । मासं पूरक इति–पूरयिष्यतीति “ क्रियायां क्रिया० ” इति ण्वुलि पक्षे तु “ कर्मणि कृतः ” इति षष्ठी स्यात्, ण्वुल्यपि तु “ नेमुरन्धा० ” इति निषेधात् न ।

‘ भिक्षादिभिः ’ । २ । १ । ६२ ॥ यद्यपि बहुव्रीहिणैव धर्मभित इत्यादीनि सिध्यन्ति तथापि यथत्पुरुषे शास्ति तज्ज्ञापयति यत्र समासेऽर्थे विग्रहभेदात्तत्पुरुष बहुव्रीही प्राप्नुतस्तत्र तत्पुरुष एव । तेन राजसरन इत्यादौ न बहुव्रीहिः । किञ्च बहुव्रीहौ कप् स्यात् । निर्गतभगत इति–क्ते निर्गति सुखी भवत्यत्रेत्यनटि वा ।

‘ प्राप्तापन्नौ तयाच ’ । २ । १ । ६३ ॥ प्राप्ता जीविका यथस्यादि बहुव्रीहिणाऽपि सिध्यति, प्राप्तनगरीत्यादौ तु समासान्तो न स्यादिति वचनम् । स्त्रीलिङ्गार्थमिति–तत्पुरुषस्योत्तरपदार्थप्रधानत्वात् “पुंवत्कर्मधारय स्त्री०” इति पुम्भावो न प्राप्नोतीत्यस्यकारणम् ।

‘ ईषदगुणवचनेः ’ । २ । १ । ६४ ॥ गुणं वचन्तीति रम्यादिनटि गुणवचनाः । ईषत्पिङ्गल इति–पिङ्गलत्वमस्यास्ति सिध्मादित्वाल्लच् । न च भाव्यमीषत्पिङ्ग-

१ २-१-५१ । २ २-१-२६ । ३ ५-१-११ । ४ २-२-८१ । ५ १-२-६ । ६ २-१-४६ ।

' कृति ' । २ । १ । ७७ ॥ चौरोत्रासनमिति–" कर्मणि कृतः " " कर्तरि " चाऽस्य विधानात् यत्नजाया अपि षष्ठ्या समासः ।

' याजकादिभिः ' । २ । १ । ७८ ॥ कृतीत्यनेनैव सिद्धे किमर्थोऽयं योग इत्याह " कर्मजा तृचा च " इतीति । विध्यर्थमेति–तृस्यार्थरिति या षष्ठी सा शेषिका न भवतीति समासो ।

' सर्वपश्चादादयः ' । २ । १ । ८० ॥ प्रतिषेधं वक्ष्यतीति–यदा सम्बन्धषष्ठी तदेत्यर्थः । तत्र सम्बन्धषष्ठीग्रहणात् । उपलक्षणमिदं तेन यदा रिरिष्टादिति षष्ठी तदाऽप्यासे समासः ।

' अकनक्रीडाजीवे ' । २ । १ । ८१ ॥ " कर्मजा तृचा च " इत्यस्याऽपवाद स्तवम मनक्कीति भञ्जिका, उद्दालपुष्पाणां भञ्जिकेति कृत " कति " इति प्राप्नोति तत उत्तरेण नियमस्तदाऽस्य सूत्रस्य फलम् । यदा तु उद्दालकपुष्पाणि भज्यन्ते यस्यां क्रीडायामिति विग्रहस्तदा नियमाभावे कृतीत्यनेनैव सिद्धत्वादस्य न किञ्चित्फलम् । ननु मनक्कीति भञ्जिकेति कर्तरि कथं साधयन्ति यथा उद्दालकपुष्पभञ्जिकेति क्रीडा नाम ततस्तस्याः कर्तृत्वं न सङ्गच्छते ? उच्यते–अस्यां क्रीडायां भञ्जनक्रियाकरणात् प्रधानात् साऽपि कर्त्री भण्यते ।

' न कर्तरि ' । २ । १ । ८२ ॥ अग्रगामिकेति–कृत्सगतिकारकस्यापि न्यायात् अग्रगामिकस्यस्याऽपि कृदन्तत्वम् ।

' कर्मजा तृचा च ' । २ । १ । ८३ ॥ तथाऽकस्येति–वुचोऽप्यभिचारात् । क्रियारम्भस्य स्थिति–बिभर्तीति भरणक्रियामात्रमुपादाय वर्तमानस्येत्यर्थः ।

' तृसार्थपूरणाव्ययातृशब्दाश्रानशा ' । २ । १ । ८५ ॥ ग्रामस्य पुरस्ता दिति–अभ्युत्पन्नमव्ययं व्युत्पन्ने तु ' रिष्टि० " इति पञ्चम्या विधानात् समासो न प्राप्नोत्येव । मध्यमानामिति–अत्राऽपि सम्बन्धे षष्ठी न निर्धारणे तस्य सतोऽप्यनित्यता अनियमेन पूर्वनिपातः स्यादिति–' पंचपचना० " इत्यत्र विशेषणविशेष्ययोर्द्वयोरपि प्रथमोक्तत्वात् विशेषणसमासे तु प्रधानानुयायिनो व्यवहारा इति न प्राग्निपातः ।

' ज्ञानेच्छाचार्याधारक्तेन ' । २ । १ । ८६ ॥ सर्वत्र कर्तरि षष्ठी । क्तस्याधारे च क्तविधानात् ' कर्मोरसत्राधारे " इति षष्ठ्या न निषेधः । इष्टेनेति– वर्ने भोक्त " इत्यतस्त्वनीयाधिकारे यदुपधाय इत्यर्थे यथाविहितं प्रत्ययं विधाय तन्वापयति न भव-

---

१ २-२-८१ । २ २-२-८६ । ३ २-२-८१ । ४ १-१-७६ । ५ २-२-११ । ६ ६-१-१८१ ।

मान काले निहितोऽयं क्तप्रत्ययः किन्तु भूते काले । तथा राजपूजित इत्यादावपि । तृतीया समासा इति–अत्र भूते क्तविधानात् " क्तस्य च वर्तमाने " इति षष्ठीनिषेधात् तृतीया समासा इत्यर्थः । कृद्योगजाया इति–कर्तृकर्मविहिताया इत्यर्थः ।

' अस्वस्थगुणैः ' । ३ । १ । ८७ ॥ स्वात्मन्यवाऽवतिष्ठन्त इति–ननु द्रव्याश्रयी गुण इति गुणलक्षणं ततः कथमिदमिति ? सत्यम्, अभिधानव्यापारापेक्षया स्वात्मस्थ गुणानां यतः शौक्ल्यादि शब्दैर्धर्ममात्रमेवाऽभिधीयते । अत्राऽर्थात्प्रकरणाद्वेति–ननु शुक्लादिशब्दैर्विशेषणं, पटस्य शुक्लो धर्म इति तत्र पटादर्थेनादिना सम्बन्धो न तद्गतेन शुक्लादिनिरूपणनति यस्मात्तस्य समासप्राप्तिरेव नाऽस्तीत्याशङ्का । अस्वास्थ्यमस्वस्थेति–गुणग्रहणेन ये गुणा द्रव्यस्य विशेषणं भवति शुक्लः पट इत्यादौ, ये च भूतपूर्वगत्या लक्षणयन्ताः शौक्ल्यादयस्तेऽपि गृह्यन्ते । यतः शुक्लशौक्ल्ययोः शब्दभेदेऽपि द्वयोरपि एकमेव प्रवृत्तिनिमित्तं गुण इति, द्वावप्येकार्थाविस्तत्वौ च च एवाऽयः पटस्य शुक्लः न एवान्य पटस्य शौक्ल्यमिति । एव मधुरमाधुर्यादीनामपि । नन्वननाऽपि कथ्याख्यानेन पटस्य शुक्ल इत्यादिष्वेव निषेधः प्राप्तो यतो यथा–शुक्लः पट इत्यादौ द्रव्येऽपि वृत्तिस्तथा न शौक्ल्यशब्दस्य द्रव्य वृत्तिः, यतः शौक्ल्यशब्देन गुणमात्रमनाऽभिधीयते न द्रव्यम् ?, उच्यते–यद्यपि शौक्ल्यशब्दो द्रव्ये न वर्तते तथापि शौक्ल्यशब्दः गुणवचनः ततो यदि स्वय द्रव्यं वक्तु न शक्नोति तथापि आत्मीयशुक्लरूपेण शब्दन यदि वादयति तर्हि भवत्येव । आत्मीयस्य चाऽन्यो गुणमात्रवृत्तित्वात् । यथा कश्चित्सुमान् भार्यायाः पार्श्वादिपत्रोर्भक्तिं कारयति तत्रो यद्यात्मना न करोति तथापि भक्तिं कर्तृत्वमभिधीयन्ते एवमत्राऽपि भविष्यति । तर्हि शौरेवाऽस्यमिति–तद्विरूपाश्च शुक्लादयो मधुरादयः सुरभ्यसुरभी शीतादयश्च गुणा गृह्यन्ते । तेषामेव द्रव्यविशेषणत्वसंभवात्, तेन रूपादीनां न ग्रहः । न हि ते द्रव्यस्य विशेषणं भवन्ति पटो रूपं गुडो रस चन्दन गन्धः स्तनः स्पर्श इति । रूपादिनिरूपणा च शुक्लादयस्त एव गृह्यन्ते तेन गौरवादयः संख्यादयो वैशेषिकप्रसिद्धाश्च न गृह्यन्ते । यद्माधुर्यमिति–रसनेन्द्रियग्राह्य एव रसो लोके मधुरशब्दस्य रूढोऽत्र तृणधारादिति न गुडस्य माधुर्यमितिरभिप्रायः । यतो गौणमुख्यन्यायेन मुख्यो लौकिके गुणः समासाभाव प्रयोजयतीति । पटुत्वादिगुणादिति–ननु कण्टकस्य तैक्ष्ण्यमित्यादौ तैक्ष्ण्य लक्षणेन पटुत्वादि च गुणत तत्रो द्वीन्द्रियग्राह्यत्वात् न गुणत्वं किन्त्वतीन्द्रियग्राह्यत्वानामेवति वैशेषिकमत, तनः समासः प्राप्तः । कुसुमसौरभमित्यादौ च पटस्य शौक्ल्यमित्यस्यासमासाभावप्रसङ्गस्तदुभयं कथमित्याशङ्का ।

' सप्तमी शौण्डाद्यैः ' । ३ । १ । ८८ ॥ इह गौण इति–परमार्थतो भयपः

यौग्य इत्युच्यते व्यसनी तु गौणवृत्त्या । आपतन भावे घञि, आपात आरम्भे समीप–आपातसमीपः ।

‘ काकाद्यैः क्षेपे ’ । २ । १ । ९० ॥ तीर्थसारमेय इति–सारो मेयोऽस्य यद्वा सरमा शुनी तस्या अपत्यं “ चतुष्पाद्भ्यो ढञ् ” । अनवस्थित इति–यथा काका विस्तीर्णफलमवाप्नुवन् अचिरस्थायी भवत्येवं यो दधदृघादिः कार्याण्यारभ्य तेष्वनिर्वाहकः स एवमुच्यते ।

‘ पात्रेसमितेत्यादयः ’ । २ । १ । ९१ ॥ गेहे क्ष्वेडीति–जिक्ष्विदाश् इति धातौ क्ष्विदः स्थाने क्ष्विड केचित्पठन्ति । गेह एव क्ष्वेडते ‘ नद्यादिभ्यो णिन् ” एवमग्रेतनद्वये । गेहमेव विजितमनेनेति “ कैपात्ये क्तेन ” इत्यनेन क्तप्रत्ययान्तात् पस्ताद्वित इन् तदन्तस्य व्याप्ये वर्तमानात्सप्तमीविहितेति प्रथमान्तेन विग्रहः । यद्वा अर्थकथनमिदं गाहे विजितीत्येव क्रियते । अवधारणेनेति–पात्रेसमिता इत्यत्र पात्रस्थेन पात्रसहचारिभोजनं लक्ष्यते ततो भोजन एव समिता मिलिताः सन्ति न कार्यान्तरे इत्यवधारणात् क्षेपो गम्यते । सप्तम्या अलुबिति–ननु पात्रेसमितेत्यादि क्तप्रत्ययान्तेषु ‘ तत्पुरुषे कृति ” इति शेषेषु तु ‘ अद्व्यञ्जनात्० ” इत्यलुप् प्राप्त स्तत्किं निपातनाश्रयणेन ? सत्यम्, शाम्यां बहुल सञ्ज्ञायां चाऽलुगुक्तेरपाद–निपातनादिति ।

‘ क्तेन ’ । २ । १ । ९२ ॥ नित्यसमासार्थैवेति–वाक्यस्य क्रियाकारकसम्बन्धमात्रप्रत्यायकतया क्षेपप्रतिपादन सामर्थ्याभावात्समासस्यैव तत्र सामर्थ्यात् ।

‘ तत्राऽहोरात्रांशम् ’ । २ । १ । ९३ ॥ पृथग्योगादिति–तत्राऽहोरात्रांशं च क्तेनेति चकारात्तदन्यच्च नाम । तत्रेति सप्तम्यन्तमिति–सप्तमीमाचष्टेऽपि प्रत्ययोऽप्यत्र सप्तमीग्रन्थेनोक्तः । भवति हि साधर्म्याद्यान्तरूप यथा गौवाही क इति ।

‘ नाम्नि ’ । २ । १ । ९४ ॥ सप्तम्या अलुबिति, अरण्येतिलका इत्यादिषु– “ अद्व्यञ्जनात्० ” इत्यनेन स्तूपेशाण इत्यादिषु तु “ औकारस्य० ” इत्यनेन ।

‘ कृत्येनावश्यके ’ । २ । १ । ९५ ॥ मासेऽवश्यमिति–‘ यद्भावो भावलक्षणम् ” इति सप्तमी मासे गते देयमिति हि मासादिगमेन देयभावो लक्ष्यत इति । अथवा मासावधिकदेय मासादिगम्य इत्याधार एव सप्तमी । अन्यथा उपचारं विना

१ ६-१-८३ । २ ५-१-५१ । ३ २-१-९९ । ४ ३-२-२ । ५ १-२-१८ । ६ १-२-१३ । ७ २-२-१ ६ ।

मता कृतेति। अद्रव्यशब्दत्वादिति क्रियाशब्दत्वादिति शेषः। एवञ्चोपलक्षणमेषा दीनामपि, यदा क्रियाशब्देन गुणशब्देन वा सामानाधिकरण्यं तदा पूर्वेण समासे सत्यकृष्टादिवत्पूर्वनिपातस्यानियमः स्यादुभयोरपि पूर्वोत्तरशब्दयोर्विशेषणत्वादिति।

'दिगधिकं संज्ञातद्धितोत्तरपदे'। ३। १। ९८॥ दिग्वाचीति—एतदपि च न दिक्ष्वेव वर्तमानमपि तु तद्द्वारेण जनपदादौ च वस्त्वन्तर इति अर्थप्रधानो निर्देशः। संज्ञायां तद्धिते चेति—एकाऽपि सप्तम्युत्पन्ना विषयभेदाद्वचनस्य भिद्यत इति। विग्रह वाक्यमिति—विभिन्न गृह्यतेऽनेनाऽस्मिन् वा बाहुलकात् "पुंनाम्नि घः"। विग्रहं च तद्वाक्यं च विग्रहवाक्यम्। अथवा विग्रहेण विग्रहस्तस्य वाक्यम्। पूर्वगवीप्रिय इति—मतान्तरमेतदुदाहरणं स्वमते तु अणाद्यन्तनाम्नो ङीरुक्ता। अत्र तु पूर्वगवी इत्यत्र रूपस्य नामत्वे पूर्वगवीत्यस्य नामत्वाभावे ङीन स्यात्।

'संख्यासमाहारे च द्विगुश्चानाम्न्ययम्'। ३। १। ९९॥ पञ्चाम्रा इति—अभिधेयादिविशेषविशिष्टानां पञ्चानामाम्राणामियं संज्ञा। कश्चित्तु एकः पञ्चाम्र इति—समुदायेषु हि वृत्ताः शब्दा अवयवेष्वपि वर्तन्त इति पञ्चसंख्याक आम्रावयविषया एकोऽपि पञ्चाम्रादिशब्द एकस्मिन्नप्याम्रादौ प्रयुज्यत इति। पञ्चनामप्रिय इति—मतान्तरेऽपि बाहुलकादापन्ता स्वार्थिकाः कश्चिदित्यतो वा ङीर्न, स्वमते तु अणन्तान्नाम्नो विहितेति न प्राप्नोत्येव। द्विमासजातः—त्रिमासजात इत्याद्यर्थमुत्तरपदग्रहणं कर्तव्यमेवाऽन्यथा द्विगुविषयाभावात् "कालो द्विगौ च मेयैः" इति समासाप्रवृत्तौ उत्तरपदाभावात्तस्य सूत्रस्याऽप्रवृत्तिः स्यात्ततो न वाक्यं तद्धितविषयेऽन्येषु समासो भविष्यतीति। पञ्चानां पूलानां समाहार इति—समाहारः समूह इति सामूहिकप्रत्ययो न। समासेनैव तस्योक्तत्वात्। ननु समाहारसमूहयोरेकार्थत्वात्तद्धित इत्यत्र समासो भविता किं समाहारग्रहणेन? अथ तद्धितोत्पत्तिः प्राप्नोतीति चेत्, तत्पञ्चमी द्विगुत्वात् "द्विगोरनपत्ये०" इति लुग् भविष्यतीति न काचिद्धानिरिति, सत्यम्; पञ्चकुमारि इत्यादौ "ङ्यापोर्गौणस्य०" इति ह्रस्वादलोप स्यात्। पञ्चगवमिति—"[illegible]" इत्यधिकृते 'गोस्तत्पुरुषात्' इत्यट् न स्यात्। अर्धपञ्चमपूलीति—संज्ञा तद्धितोत्तरपदेषु नित्यसमासः। समाहारे तु विकल्पस्तत्र वाक्यमपि हि भवति। अर्धपञ्चमानां पूलानां समाहार इति। समाहारार्थ इति—तेन गोस्तत्पुरुषात्समासविधादित्यादि सिद्धम्। अयं ग्रहणमिति—चयपमिति तत्संज्ञा न स्यात्ततो यथा क्रम चारयभेत्यनुवर्तते तथा द्विगुश्चेत्यप्युत्तरत्राऽनुवर्तेतेति भस्यमाणा अपि समासा

१ ५-१-११ । २ २-१-५० । ३ ६-३-१४ । ४ २-४-५५ । ५ ७-३-१ १ । ६ ७-१-१ ५ ।

द्विगुसंज्ञाः स्युः ततः परमा नौः परमनौरिति " नावः " इति समासान्तः स्यात् । समाहारे दिक्शब्दो न समस्यते ।

' निन्द्यं कुत्सनैरपापाद्यैः ' । २ । १ । १०० ॥ कुत्सितो ब्राह्मण इति—नहि ब्राह्मणः कुत्सनवचनः । अपि तु कुत्स्य एवेति व्याघ्रादिवदलाभः समासः । ब्राह्मणश्चाऽसौ कुत्सितश्चेत्यपि कृते कुत्सितशब्दस्य पापाद्यङ्गीकारादनेनाऽपि समासो न ।

' उपमानं सामान्यैः ' । २ । १ । १०१ ॥ नियमार्थमिति—शस्त्रीश्यामेत्यादावपि गुणशब्दोपादाय प्रवर्तमानेन शब्देनाविना श्यामादेर्विशेषणाच्छ्यामशस्त्रीत्युक्तेऽपि साधारणधर्मप्रतीत्यभावादुपमानस्य समासे पूर्वनिपाते च सिद्धे विधिरारभ्यमाणो नियमसम्भवाभिप्रायार्थो भवति ।

' उपमेयं व्याघ्राद्यैः साम्यानुक्तौ ' । २ । १ । १०२ ॥ शब्दः प्रयुज्यत इति—यदा प्रकरणादिवशाभिमतसाधारणगुणप्रतिपत्तौ व्याघ्रादिशब्दः शौर्यादौ गुणवाचे एव वर्तते तदा साम्यानुक्तौ सामानाधिकरण्ये सति समासो भवति । यदा तु गुणान्तरव्यवच्छेदाय विशिष्टसाधारणगुणप्रतिपत्तये शूरादिशब्दप्रयोगस्तदा साम्यानुक्तिग्रहणात्समासाभावः । पुरुषव्याघ्रः शूर इति—ननु च व्याघ्रपदस्य शूरपदापेक्षयाऽपि समासो न भविष्यति किं प्रतिषेधेनेत्याह—इदमेव चेति ।

' पूर्वापरप्रथमचरमजघन्यसमानमध्यमध्यमवीरम् ' । २ । १ । १०३ ॥ पूर्वपुरुष इत्यादि—दिग्वाचकत्वेऽपि शब्दोपादानसामर्थ्यात् समासः । न तु दिगपिक्षमित्यनेन निषेधः । पूर्वपटुरिति—पूर्वशब्दो दिग्योगेन कालयोगेन वा द्रव्यं विशिनष्टि पटुशब्दश्च पटुत्वेन । तत्र विशेषणसमासे द्वयोरपि गुणवचनत्वेन विशेषणत्वात् तत्र कृष्णादिवदनियमेन पूर्वनिपातः स्यात् ।

' श्रेण्यादि कृताद्यैश्च्व्यर्थे ' । २ । १ । १०४ ॥ एकशिल्पपण्यजीविनां संघः श्रेणिः । च्व्यर्थे गम्यमान इति—यद्यप्युत्तरपदार्थप्रधानोऽयं समासस्तथाप्युपसर्जनतया च्व्यर्थोऽपि प्रतीयते । उपसर्जनमपि धर्मो भवति ।

ऊकेति—भवतेः " भिषिपुषि० " इति किरच् । कन्दु स्वेदनिकां मिमीते कन्दुमः कान्दविकः । ब्राह्मण इति—ब्रह्म अणतीति कर्मण्यपि पृषोदरादित्वादकारलोपे दीर्घत्वे च । यत्र सामर्थ्यमिति—भव चपलापाकृता इत्यादौ चपलादीनां च्व्यर्थवृत्तीनामपाकृतादिभिः सामर्थ्याभावात्कथं समास इत्याशङ्का । श्रेणिकृता इत्यादाविति—ननु चात्राऽपि विशेषणविशेष्यभावोऽस्ति यतः कृताः के कर्मतापन्नाः श्रेणय

१ ७-१-१४ । २ उणा ११ ।

'कतरकतमौ जातिपरिप्रश्ने' । ३ । १ । १०९ ॥ कतमगार्ग्य इति–कठ इत्यादि चरणं गार्ग्य इत्यादि गोत्र, ततो गोत्रं च चरणैः सहेति जातिः । कुम्भलीती–ज्योत्स्ना पणप्राप्तौ " शिखादिभ्य इन् " ।

' पोटायुवतिस्तोककतिपयगृष्टिधेनुवशावेहद्वष्कयणीप्रवक्तृश्रोत्रियाध्यापकधूर्तैर्प्रशंसारूढजातिः ' ३ । १ । १११ ॥ इन्दारकयुवतिरिति–अत्र ' इन्दारकन्यागकुशौ " इति भावितत्वा परस्वादयमेव विधिः । अग्निस्तोकमिति–स्तोचनं भावे घञि न्यङ्क्वादित्वात्कत्वे स्तोकः । सोऽस्याऽस्तीत्यर्शआद्यच्प्रत्यय स्तोकम् । भिन्नलिङ्गयोरपि सामानाधिकरण्य वरं विरोध इतिवत् । सामान्यविशेषभावेनाऽस्य प्रयोगः तेनाऽग्निस्तोक इत्यपि । मेहदिति–विहन्ति गर्भमिति ' वशन् ' इति निपातः । वष्कयणीति–वत्सतरपि पृषोदरादित्वात् " निर्मितवष्क० " इति वा वष्कसं याठीति ये वष्कयः प्रौढवत्सः, सोऽस्या अस्ति । तदाभयकुत्सामामिति–न चाऽत्र कठप्रोक्तग्रन्थाध्ययनं वेदितृत्व वा कठशब्दप्रवृत्तिनिमित्त तेन कुत्स्यते किं तर्हि प्रवृत्तिनिमित्तावच्छिन्नमभिधेयम् । प्रशंसायामिति–अग्रति तु स्वमहत्वे आविगुण शब्दा अपि परं स्तोतुमुपादीयमानाः प्रशंसायां वर्तन्त इति तेऽपि गृह्येरन् । आविष्टलिङ्गा इति–उपलक्षणत्वादानियतवचनाश्च तेन तावन् ते पादामेति सिद्धम् । आविष्ट आगृहीतमपरित्यक्तं स्व लिङ्गं यैः । लिङ्गान्तरसम्बन्धेऽपि न विशेष्यलिङ्गमुपाददते । मतल्लिकेति–मया लक्ष्म्या तल्लाठीति ' कचिक ' इति निपातः । मचर्चिकेति–मां लक्ष्मीं चर्चयतीति पचि ' देयाणो ' वा इति ह्रस्वत्वे । प्रकाण्डमिति–प्रकृष्टत्वा कम्पते " कम्पमि० " इति णिङ् । रूढग्रहणादिति–रूढग्रहणस्योक्तरूपमतल्लिकादिपरिग्राहकत्वाद्रमणीयमानमिनशब्दयोश्च रमणीयत्वादिगुणमुपादाय प्रशंसायां वर्तमानत्वात्ताभ्यां जातिन समस्यत इति ।

' चतुष्पादगर्भिण्या ' । ३ । १ । ११२ ॥ प्रायणी गर्भिणीति–समासे हि सति प्रायणीशब्दस्य पुंवद्भावः स्यात् । संज्ञाशब्दाविमाविति–एतौ चतुष्पादमात्रं तु जातिम् ।

' युवा खलतिपलितजरद्वलिनैः ' । ३ । १ । ११३ ॥ युवजरतित्यत्र जरत्युत्साहादियुवधर्मोपलम्भात् यूनि चाऽऽलस्यादिजरद्धर्मोपलम्भात् तद्रूपारोपात्सामानाधिकरण्यम् । विशेष्यत्वादिति–विशेष्यो युवा शब्दाऽन्यया रीत्या युवत्वमप्रेऽपि प्रसिद्धम्, ततो युवशब्दन पुरुष एवाऽभिप्राप्त । ततस्तस्य खलतीति विशेषण तदा परनिपात प्राप्त । अथवा द्वयोरपि गुणवचनत्वं तदा युवत्वमप्रसिद्ध ततो युवशब्देन

१ ७-१-४ । २ उप ८८१ । ३ उप २६ । ४ उप ७५ । ५ १-४-३१ ।

गुणत्वविशिष्टो नरोऽभिधीयते, लक्षतिशब्देनाऽपि स एवाऽभिधीयते, ततो गुणवचनत्वात् कामचारेण पूर्वनिपाते प्राप्ते पूर्वनिपातार्थं वचनमिति ।

'कृत्यतुल्याख्या अजात्या' । २ । १ । ११४ ॥ आख्याग्रहणार्थं पदान्तरनिरपेक्षास्तुल्यमर्थमाचक्षते इह ते गृह्यन्ते, समसदृशतुल्यप्रभृतयो न तु ये पदान्तरसांनिध्येन यथाऽयिमाणवक इति । अत्राऽपि तुल्यता प्रतीयते । परार्थे प्रयुज्यमानाः शब्दाः साधर्म्यं गमयन्तीति । न त्वत्र तुल्यता पदार्थ इति । ऊवयमिति–नन्द्यादिगणपाठात् णश्च च । भोज्य ओदन इति–ओदनत्वलक्षणाया जातेरोदनशब्दो वाचकः ।

'कुमारः श्रमणादिभिः' । २ । १ । ११५ ॥ ननु कुमारशब्दस्य पुंलिङ्गस्य निर्देशात् कथमत्र स्त्रीलिङ्गस्य समास इत्याह–नामग्रहणे इत्यादि । लिङ्गशब्दोऽत्र धर्मार्थे । यद्येवं नामग्रहणपरिभाषयैव स्त्रीलिङ्गेऽपि समासस्य सिद्धत्वात् किमर्थं स्त्रीलिङ्गानां श्रमणादीनां पाठ इत्याह–श्रमणादीनामित्यादि ।

'मयूरव्यंसकादयश्च' । २ । १ । ११६ ॥ तत्पुरुषसमासा इति–कर्मधारयसमासा इत्यपि द्रष्टव्यम् । अवयवशः समासः । व्यंसयतीति–मतान्तरेण दन्त्ये । मयूरव्यंसक इति–यो लुब्धकानां मयूरो गृहीतशिखो भवति, अन्यानन्यान् मयूरान् छलयति स उच्यते, तद्रूपेण लोकस्याऽपि वञ्चकः । व्यंसको विशेषणं मयूरो विशेष्यमिति विशेष्यसमासे प्राप्ते मयूरव्यंसक इत्यत्र समास इति दर्शयति । कम्बोजमुण्ड इति–कम्बमाख्यौ जथ चातुर्थाद्यमिकेरलुप् । मुण्डनं मुण्डः, सोऽस्तीत्यर्थाद्यच् । कम्बोजयवनशब्दाभ्यामपत्ये "तद्राजस्य बहुषु०" इत्यञः, "कम्बोजादिभ्यो०" इति लोपः । एवं च गोत्र च चरणैः सहेति जातित्वमनयोरित्यत्राऽपि गुणशब्दस्य पूर्वनिपाते प्राप्ते जातिशब्दस्य पूर्वनिपातार्थोऽयमारम्भः । कपर्द इति–पर्द्यतेऽनेनेति कुत्सितः पर्दः पृषोदरादित्वात्कुशब्दस्य कभावे । उन्मृजावमृजेति–आख्यातयोः क्रियासातत्ये समासस्य वक्ष्यमाणत्वात्तदभावार्थोऽयमारम्भः । बहुव्रीहौ कप्प्रत्ययप्रसङ्गः स्यात् । मोदस्वेति–आत्मनेपदस्याऽनित्यत्वात् परस्मैपदम्, विकल्पणिजन्ताद्वा । ओडमिति–'छरण्' प्रत्यये इत्यतोऽपि ओड्रो दासः । प्रोष्यपापीयानिति–प्रपसतः क्त्वा पयाद्येयाति "पैलसः" इति पस्ये । निषद्यस्यान्त्यग्नि स्नात्वा कालकादिभिरैकाप्याभावात् "अर्थेयं प्रद्धादिभिः" इति नियमात् क्त्वाप्रत्ययस्याऽव्ययस्य समासाप्राप्ते वचनाऽप समासो निपात्यते । निषण्णश्यामेति–"विशेषणं०" इति समासे पूर्वनिपातेऽनियमः स्यात् ।

१ ६-१-११४ । २ ६-१-१२ । ३ २-१-६६ । ४ १-१-७८ । ५ १-१-३६ ।

अकिञ्चनमिति–नञः स्याद्यन्तेन समास आरभ्यमाणः समुदायस्यानामत्वात् स्याद्यन्तत्वाभावात् नञ्समासाप्रवृत्तावनेन समासः ।

इवपदश इति–छागरोममय कपिलकम्बलं इदप विदुस्तद्दश यस्य । सर्वं निपातनात्सिद्धमिति–निपात्यन्ते–मन्यन्तेऽनुरूपाण्यविहितान्यपि तथान्यस्मिन्निति निपातनम् । सूत्रे तद्रूपस्य स्वरूपेणोपादानमिति ।

'चार्थे द्वन्द्वः सहोक्तौ' । ३ । १ । ११७ ॥ एकग्रहणादिति–वचनानेकस्य पूर्वनिपातप्रसक्तावेकस्य पूर्वनिपातनियमार्थं, द्वयोश्च द्वन्द्वेऽनेकस्य पूर्वनिपातप्रसङ्गाभावादेकग्रहणमनर्थकं स्यात् । यद्वा नाम नाम्नेति व्यक्तिपदार्थो नाऽऽश्रीयतेऽपि तु जातिः । अनुवादस्य हि रूपस्य यथा तत्प्रत्याग्रहो भवति तथाऽर्थकल्पना क्रियते इति बहूनामप्ययं समासः । इत्येव स्यादिति–पूर्वपदस्योत्तरपदे प्रत्येकं " ग्रामौ " इत्याकारः स्यादित्यर्थः । ग्रामो ग्राम इति–अत्र वीप्सायां सहोक्तिसद्भावेऽपि चार्थाभावाद् द्वन्द्वाभावः । सहोक्ताविति–यत्र समासे द्वयोर्धर्मयोर्धर्मिणोर्वा भिन्नयोः प्राधान्यं विवेच्यते सा सहोक्तिः । कर्मधारये तु धर्मिण आश्रयस्यैव प्राधान्याच्चस्य चैकत्वं, अतः सङ्ख्याद्व्यादौ न सहोक्तिः । प्लक्षश्च न्यग्रोधश्च वीक्ष्यतामिति–पूर्वेणैव सम्बन्धः । इतरेतरयोगे विग्रहः कृतः, प्लक्षश्च न्यग्रोधश्च, समाहारे तु प्लक्षश्च न्यग्रोधश्चेति समुदायस्तिष्ठतीति । तत्रैकमर्थं प्रतीत्यादि–अर्थः क्रियाकारकद्रव्यरूपः । द्रव्यादीनां क्रियाकारकद्रव्यगुणानामिति–तत्रैकस्मिन् कारकेऽनेकक्रियाणामेकस्यां क्रियायामनेककारकाणामेकस्मिन् द्रव्येऽनेकद्रव्याणामेकस्मिन् कारकेऽनेकद्रव्याणामेकस्मिन् धर्मिण्यनेकधर्माणां योजनं समुच्चय इति । यथा चैत्रः पचति च पठति चेत्यादिषु यथाक्रमं दर्शयति । एकमर्थं प्रति द्रव्यादीनामात्मरूपभेदेन चीयमानता समुच्चय इत्येव तद्वचनमन्यस्तस्यैव प्रपञ्चः । अन्वाचयोऽप्येवंविध इति–इयता तु भिद्यते यत्समुच्चये समुच्चीयमानानाः क्रियाकारकादिविशेषाः सर्वे तुल्यकक्षाः । अन्वाचये तु एकस्य गुणभावोऽन्यस्य प्रधानभावस्तद्यथा " रभो भ्वरादन्तो न–छद्द् च इति । अत्र हि विधीयमानं भं नलोपोऽपेक्षते, यत्र भस्तत्र नलोपो, यथा ' भञ्जोंप् ' आमर्दने–भनक्ति । भस्तु नलोपं नाऽपेक्षते तदभावेऽपि प्रवृत्तत्वात् पुनक्तीति । परस्परसव्यपेक्षायामिति–एतावता चादीनां द्योतकानां व्युदासः । सहोक्त्यभावादिति–ननु समुच्चयान्वाचययोः सामर्थ्याभावादेव समासो न भविष्यति, किं सहोक्तिग्रहणेन ? तथाहि–परस्परानपेक्षाणामनियतक्रमयौगपद्यानां क्रियाकारकादीनां समुच्चयो दृश्यते । यथा गामश्वमित्यत्र नयनक्रियायां गवादीनाम् ।

---

१ २-४-६२ ।

अन्वाचयेऽपि गौणस्य प्रधानं प्रत्यपेक्षा न प्रधानस्य गौणं प्रतीति तत्राऽपि सामर्थ्याभावात्, नैष दोषः; यतः कारकाणि क्रिययोपश्लिष्यन्ते न परस्परम् क्रिया चोपश्लेषिका समुच्चयान्वाचययोरपि सम्भवति तस्माच्च समुच्चयऽन्वाचये चाऽसमर्थानि नामानि स्युः । परस्परापेक्षा त्वविद्यमानाऽपि न सामर्थ्यस्य विघातिका । सा हि न श्रौती किन्तु वाक्यप्रकरणादिसमधिगम्या । तस्माच्च श्रौतस्य सामर्थ्यस्य सम्भवे विपरीतस्य सामर्थ्यस्याऽसम्भव समासाप्रवृत्तौ निमित्तमिति सहोक्तिग्रहणमिति । यद्वर्तिपदैरित्यादि–अयमर्थः युगपद्द्वन्द्ववाच्य समुदायरूप यदोच्यत तदा द्वन्द्वो भवति । गामश्वमित्यादौ तु परस्परं निरपेक्षाः स्वतन्त्रा गवादयो भिन्नैरेव शब्दैः पृथक् प्रत्याय्यन्त इति युगपद्वाचित्वाभावात् द्वन्द्वाभाव इति । प्लक्षोऽपि द्व्यर्थ इति–नन्वत्र प्लक्षन्यग्रोधाविति शब्दक्रमात् क्रमवदर्थानुगमात् न सम्भवत्येव, एकेनाऽनेकस्याऽभिधानम्, नः तर्हि द्विवचनबहुवचनानुपपत्तिः । प्लक्षन्यग्रोधौ प्लक्षन्यग्रोधा इति । यतः प्लक्षशब्दः स्वार्थमभिधाय निवृत्तोऽन्यो न्यग्रोधशब्द उपस्थितः । तत्र न्यग्रोधार्थप्रतिपत्तिकाले यदि प्लक्षार्थस्याऽवगतिर्न स्यात्तदा न्यग्रोधशब्दादेकार्थत्वादेकवचन स्यात्तस्मात् द्विवचनबहुवचनान्यथानुपपत्त्या प्लक्षन्यग्रोधावित्यादावेकैकोऽनेकार्थाभिधायीत्यभ्युपगन्तव्यम्। ततश्च एकैकेन युगपदनेकस्याऽर्थस्याऽभिधानात् प्लक्षोऽपि द्व्यर्थो न्यग्रोधोऽपि द्व्यर्थ इत्याह–प्लक्षन्यग्रोधावित्यत्रेत्यादि । नन्वेवं तर्हि प्लक्षश्च न्यग्रोधश्चेत्येकवचनान्तयो र्वाक्यं वृत्तौ प्रदर्शितं द्विवचनान्तयोर्हि न्याय्यम् ?, सत्यम्; लौकिकमेतद्वाक्यं न प्रक्रियावाक्यम् । यदा तु परस्परशक्त्यनुप्रवेशेन द्वन्द्वो भविष्यतीत्यभिधित्सयाऽतिवाहिकशरीरस्थानीयं वाक्यं क्रियते तथा त्वलौकिकं समीपगतपदान्तरवस्तुसचिव द्विवचनान्तयोर्वाक्यं क्रियते । यद्वाऽप्य सति प्रदर्शयितव्ये तरमेव वाक्यं धवौ च खदिरौ चेति । अलौकिकत्वाच्च वृत्तौ न प्रदर्शितम् । न चैवं प्लक्षन्यग्रोधयोर्द्विकद्वयसङ्ख्यत्वेनानेकार्थत्वाद्बहुवचनं प्राप्नोतीति वाच्यम् । यतो नाऽत्र चत्वारोऽर्थाः । किं तर्हि ? द्वावेवाऽर्थौ पदाभ्यामेवाऽत्रैकः शब्दो द्व्यर्थस्ताभ्यामपरोऽपि, नहि द्वाभ्यां लक्षाभ्यामविभक्तिकौ भ्रातरौ चतुर्लक्षौ भवतः । समुदायरूपो हि द्वन्द्वार्थ प्रत्यवयवमवयवविवक्षतिसंक्रान्त इति । यथा घनविटपिविलोकन वनं विलोकितमित्येकैकस्तथारूपप्रतिभासभाग्भवति । तदुक्त " अनुस्यूत च मताभ्यामक्ष प्रकल्पोपजायते । यथा सह विवक्षायां, सामान्युद्वन्द्वशब्दयोः ॥ १ ॥ " इति । ननु लौकिकात् प्रयोगात् शब्दानामर्थावधारण तत्र यथा पटशब्दः घटार्थं न प्रत्याययति, तथा प्लक्षन्यग्रोधशब्दो परस्परार्थस्य प्रत्यायकौ न युक्तौ ?, नः प्लक्षशब्दस्य न्यग्रोधार्थत्वान्न्यग्रोधस्य च प्लक्षार्थत्वात् स्वार्थस्यवाऽभिधानामेवपारार्थान्तराभिधायित्व, लोकप्रसिद्ध्या त्वर्थान्तराभिधायित्वमुच्यते । वृत्तिविषय त्वेकैकस्य द्व्यर्थतानिति स्वाभावतो । ननु

अकिञ्चनमिति–नञः स्याद्यन्तेन समास आरभ्यमाणः समुदायस्यानामत्वात् स्याद्यन्तत्वाभावात् नञ्समासाप्रसङ्गाद्वचनेन समासः।

कुतपवस इति–छागरोममयं कम्बलकम्बलं कुतपं विदुस्तद्वस यस्य। सर्वं निपातनात्सिद्धमिति–निपात्यन्ते–गम्यन्तेऽनुरूपाण्यविहितान्यपि लक्षणान्यस्मिन्निति निपातनम्। सूत्रे रूपस्य स्वरूपेणोपादानमिति।

'चार्थे द्वन्द्वः सहोक्तौ'। ३। १। ११७॥ एकग्रहणादिति–तत्रानेकस्य पूर्वनिपातप्रसङ्गादेकस्य पूर्वनिपातनियमार्थं, द्वयोश्च द्वन्द्वेऽनेकस्य पूर्वनिपातप्रसङ्गाभावादेकग्रहणमनर्थकं स्यात्। यद्या नाम नाम्नेति व्यक्तिपदार्थो नाऽऽश्रीयतेऽपि तु जातिः। प्रत्युद्यस्य हि रूपस्य यथा तत्स्यानुग्रहो भवति तथाऽर्थकल्पना क्रियते इति बहूनामप्ययं समासः। इत्येव स्यादिति–पूर्वपदस्योत्तरपदे प्रत्येक " चार्थे " इत्याकारः स्यादित्यर्थः। ग्रामो ग्राम इति–अत्र वीप्सायां सहोक्तिसद्भावेऽपि चार्थाभावात् द्वन्द्वाभावः। सहोक्ताविति–यत्र समासे द्वयोर्बहूनां धर्मिणोर्वा भिन्नयोः प्राधान्यं विवक्ष्यते सा सहोक्तिः। कर्मधारये तु धर्मिण आश्रयस्यैव प्राधान्यादस्यैकस्य, अतः खञ्जकुण्टादौ न सहोक्तिः। प्लक्षश्च न्यग्रोधश्च वीप्सतामिति–पूर्वेणैव सम्बन्धः। इतरेतरयोगे तिष्ठतः कस्को, प्लक्षश्च न्यग्रोधश्च, समाहारे तु प्लक्षश्च न्यग्रोधश्चेति समुदायस्तिष्ठति। तत्रैकमर्थं प्रतीत्यादि–अर्थः क्रियाकारकद्रव्यरूपः। क्रियादीनां क्रियाकारकद्रव्यगुणानामिति–तत्रैकस्मिन् कारकेऽनेकक्रियाणामेकस्यां क्रियायामनेककारकाणामेकस्मिन् द्रव्येऽनेकद्रव्याणामेकस्मिन् कारकेऽनेकद्रव्याणामेकस्मिन् धर्मिण्यनेकधर्माणां चीकनं समुच्चय इति। यथा चैत्रः पचति च पठति चेत्यादिषु यथाक्रमं दर्शयति। एकमर्थं प्रति द्रव्यादीनामात्मरूपभेदेन चीयमानता समुच्चय इत्येव लक्षणमन्यस्यस्यैव प्रपञ्चः। अन्वाचयोऽप्येवंविध इति–एवता तु भिद्यते यत्समुच्चये समुच्चीयमानानां क्रियाकारकादिविशेषाः सर्वे तुल्यकक्षाः। अन्वाचये तु एकस्य गुणभावोऽन्यस्य प्रधानभावस्तथा " रुधां स्वरान्नमो न-छद् च इति। अत्र हि विधीयमानं श्नं नलोपोऽपेक्षते, यत्र श्नस्तत्र नलोपो, यथा 'भञ्जोप्' आमर्दने–भनक्ति। श्नस्तु नलोपं नाऽपेक्षते तदभावेऽपि प्रवृत्तेर्यथा पुनक्तीति। परस्परसम्बन्धपेक्षाणामिति–एतावता चादीनां द्योतकानां व्युदासः। सहोक्त्यभावादिति–ननु समुच्चयान्वाचययोः सामर्थ्याभावादेव समासो न भविष्यति, किं सहोक्तिग्रहणेन? तथाहि–परस्परानपेक्षाणामनियतक्रमयौगपद्यानां क्रियाकारकादीनां समुच्चयो दृश्यते। यथा ग्राममजमित्यत्र नयनक्रियायां ग्रामादीनाम्।

१ ६-४-२३।

अन्वाचयेऽपि गौणस्य प्रधान प्रत्यपेक्षा न प्रधानस्य गौण प्रतीति तत्राऽपि सामर्थ्याभावः, नैष दोषः; यतः कारकाणि क्रिययोपश्लिष्यन्ते न परस्परम् क्रिया चोपश्लेषिका समुच्चयान्वाचययोरपि सम्भवति तत्कथं समुच्चयेऽन्वाचये चाऽसमर्थानि नामानि स्युः । परस्परापेक्षा त्वविद्यमानाऽपि न सामर्थ्यस्य विघातिका । सा हि न श्रौती किन्तु वाक्यप्रकरणादिसमधिगम्या । तत्कथं श्रौतस्य सामर्थ्यस्य सम्भवे विपरीतस्य सामर्थ्यस्याऽसम्भवः समासाप्रवृत्तौ निमित्तमिति सहोक्तिग्रहणमिति । पदैर्विपर्ययैरित्यादि–अयमर्थः युगपद्द्वन्द्ववाच्यं समुदायरूपं यदोच्यते तदा द्वन्द्वो भवति । गामश्वमित्यादौ तु परस्परं निरपेक्षाः स्वतन्त्रा गवादयो भिन्नैरेव शब्दैः पृथक् प्रत्याय्यन्त इति युगपदभिधित्साभावाद् द्वन्द्वाभाव इति । प्लक्षोऽपि द्व्यर्थ इति–नन्वत्र प्लक्षन्यग्रोधाविति शब्दक्रमात् क्रमपदार्थानुगमात् न सम्भवत्येव, एकैकेनाऽनेकस्याऽभिधानम्, न; तर्हि द्विवचनबहुवचनानुपपत्तिः । प्लक्षन्यग्रोधौ प्लक्षन्यग्रोधा इति । यतः प्लक्षशब्दः स्वार्थकाले निवृत्तोऽन्यो न्यग्रोधशब्द उपस्थितः । तत्र न्यग्रोधार्थप्रतिपत्तिकाले यदि प्लक्षार्थस्याऽवगतिर्न स्यात्तदा न्यग्रोधशब्दादेकार्थत्वादेकवचनं स्यात्तस्माद् द्विवचन बहुवचनान्यथानुपपत्त्या प्लक्षन्यग्रोधावित्यादावेकैकोऽनेकार्थाभिधायीत्यभ्युपगन्तव्यम्। *ततश्च एकैकेन युगपदनेकस्याऽर्थस्याऽभिधानात् प्लक्षोऽपि द्व्यर्थो न्यग्रोधोऽपि द्व्यर्थ* इत्याह–प्लक्षन्यग्रोधावित्यत्रेत्यादि । नन्वेवं तर्हि प्लक्षश्च न्यग्रोधश्चेत्येकवचनान्तयो वाक्यं वृत्तौ प्रदर्शितं द्विवचनान्तयोर्हि न्याय्यम् ?, सत्यम्; लौकिकमेतद्वाक्यं न प्रक्रियावाक्यम् । यदा तु परस्परमभ्यनुप्रवेशेन द्वन्द्वो भविष्यतीत्यभिधित्सयाऽवि नाहिकशरीरस्थानीयं वाक्यं क्रियते तथा स्वस्वलौकिकं समीपगतपदान्तरवस्तुस्वमिव द्विवचनान्तयोर्वाक्यं क्रियते । यत्राऽप्यर्थं सति प्रदर्शयितव्ये बहुभिरेव वाक्यं धवौ च खदिरौ चेति । अलौकिकत्वाच्च वृत्तौ न प्रदर्शितम् । न चैवं प्लक्षन्यग्रोधयोर्द्विकद्वयसंकल्पनेनाऽनेकार्थत्वाद्बहुवचनं प्राप्नोतीति वाच्यम् । यतो नाऽत्र चत्वारोऽर्था । किं तर्हि ? द्वावेवाऽर्थौ याभ्यामेवाऽनेकः शब्दो द्व्यर्थस्ताभ्यामपरोऽपि, नहि *द्वाभ्यां उक्ताभ्यामविभक्तिकौ भ्रातरौ चतुष्कौ भवतः । समुदायरूपो हि द्वन्द्वार्थः* प्रत्ययवचनसमवायविश्रान्तिसङ्क्रान्त इति । यथा वनमिदमपि विलोक्य वन विलोकितमित्येकैकस्तथारूपप्रतिभासमागमयति । तदुक्तं "मनुष्यत्व च मत्ताभ्यामक्ष प्रकल्पोष जायते । यथा सह विवक्षायां, तथा द्वन्द्वसपयोः ॥ १ ॥" इति । ननु लौकिकात् प्रयोगात् शब्दानामर्थावधारणं तत्र यथा पटशब्दः घटार्थं न प्रत्याययति, तथा प्लक्षन्यग्रोधशब्दौ परस्परार्थस्य प्रत्यायकौ न युक्तौ ?, न; प्लक्षशब्दस्य न्यग्रोधार्थत्वात् न्यग्रोधस्य च प्लक्षार्थत्वात् स्वार्थस्याऽभिधानमेवार्थान्तराभिधायित्वं, लोकप्रसिद्धा त्वर्थान्तराभिधायित्वमुच्यते । इतिविषय त्वेकैकस्य द्व्यर्थतेति न्यायार्थतो । ननु

अकिञ्चनमिति–नञः स्याद्यन्तेन समास आरभ्यमाणः समुदायस्यानामत्वात् स्याद्यन्तत्वाभावात् नञ्समासाप्रवृत्तावनेन समासः ।

कुतपवस इति–छागरोममयं कपिलकम्बलं कुतपं विदुस्तद्वत्सं यस्य । सत्र निपातनात्सिद्धमिति–निपात्यन्ते–गम्यन्तेऽनुरूपाण्यविहितान्यपि लक्षणान्यस्मिन्निति निपातनम् । सूत्रे लक्ष्यस्य स्वरूपेणोपादानमिति ।

‘ चार्थे द्वन्द्वः सहोक्तौ ’ । २ । १ । ११७ ॥ एकग्रहणादिति–सत्यनेकस्य पूर्वनिपातप्रसक्तावेकस्य पूर्वनिपातनियमार्थं, द्वयोश्च द्वन्द्वेऽनेकस्य पूर्वनिपातप्रसङ्गाभावादेकग्रहणमनर्थकं स्यात् । यद्वा नाम नाम्नति व्यक्तिपदार्थो नाऽभीप्सतेऽपि तु जातिः । मनुष्यस्य हि रूपस्य यथा उत्पात्तुग्रहो भवति तथाऽर्थकल्पना क्रियते इति बहूनामप्ययं समासः । इत्येव स्यादिति–पूर्वपदस्योत्तरपदे प्रत्येकं “ चार्थे ” इत्याकारः स्यादित्यर्थः । ग्रामो ग्राम इति–अत्र वीप्सायां सहोक्तिसद्भावेऽपि चार्थाभावात् द्वन्द्वाभावः । सहोक्ताविति–यत्र समासे द्वयोर्धर्मयोर्धर्मिणोर्वा मिथयोः प्राधान्यं विवक्ष्यते सा सहोक्तिः । कर्मधारये तु धर्मिण आश्रयस्यैव प्राधान्यात्तस्य चैकत्वं, अतः सञ्जकुब्जादौ न सहोक्तिः । प्लक्षश्च न्यग्रोधश्च वीक्ष्यतामिति–पूर्ववदेव समन्वयः । इतरेतरयोगे विग्रहः कृतः, प्लक्षश्च न्यग्रोधश्च, समाहारे तु प्लक्षश्च न्यग्रोधश्चेति समुदायस्तिष्ठति । तत्रैकमर्थं प्रतीत्यादि–अर्थः क्रियाकारकद्रव्यरूपः । द्रव्यादीनां क्रियाकारकद्रव्यगुणानामिति–यत्रैकस्मिन् कारकेऽनेकक्रियाणामेकस्यां क्रियायामनेककारकाणामेकस्मिन् द्रव्येऽनेकद्रव्याणामेकस्मिन् कारकेऽनेकद्रव्याणामेकस्मिन् धर्मिण्यनेकधर्माणां ढौकनं समुच्चय इति । यथा चैत्रः पचति च पठति चेत्यादिषु यथाक्रमं दर्शयति । एकमर्थं प्रति द्रव्यादीनामारभ्यरूपभेदेन चीयमानता समुच्चय इत्येव तदयमन्यस्तस्यैव प्रपञ्चः । अन्वाचयोऽप्येवमेव इति–इयता तु भिद्यते यत्समुच्चये समुच्चीयमानानां क्रियाकारकादिविशेषाः सर्वे तुल्यकक्षाः । अन्वाचये तु एकस्य गुणभावोऽन्यस्य प्रधानभावस्तद्यथा “ रुधां स्वराच्छ्नो न- लोपश्च ” इति । अत्र हि विधीयमानं श्नं नलोपोऽपेक्षते, यत्र श्नस्तत्र नलोपो, यथा ‘ भञ्जोप् ’ आमर्दने–भनक्ति । श्नस्तु नलोपं नाऽपेक्षते तदभावेऽपि प्रवर्तते यथा युनक्तीति । परस्परसव्यपेक्षाणामिति–एतावता चादीनां द्योतकानां व्युदासः । सहाव्ययभावादिति–ननु समुच्चयान्वाचययोः सामर्थ्याभावादेव समासो न भविष्यति, किं सहोक्तिग्रहणेन ? तथाहि–परस्परानपेक्षाणामनियतक्रमयौगपद्यानां क्रियाकारकादीनां समुच्चयो दृश्यते । यथा गामश्वमित्यत्र नयनक्रियायां गवादीनाम् ।

---

१ १-४-६१ ।

समानामित्यनर्थकं स्यात्। इहैकशेषे षट् पक्षाः सम्भवन्ति—तत्र प्रत्येकमेकविभक्तौ परतो विभक्तिपरित्यागेन नाम्नैकशेषः स्यात् १, अथवा सविभक्तिकानां वृक्षम् वृक्षम् इति स्थिते एकस्य वृक्षम् इत्यस्य शेषः २, अथवा वृक्ष वृक्ष वृक्षमेति द्वन्द्वे कृते सत्येकस्य, वृक्ष इत्यस्य शेषः ३, अथवा विभक्तिमनुत्पाद्यैव नाममात्रेण वृक्षवृक्षेत्येवंविधानामेव शेषः कार्यस्ततो विभक्तिः ४, अथवा समोक्तौ वृक्ष वृक्षमेति द्वन्द्वे प्राप्ते एकशेषः ५, अथवा नामसमुदायस्यैवार्थवत्त्वान्नामसंज्ञायां द्विवचनाद्युत्पत्तौ एकशेषः ६, इति षट्पक्षाः। तत्राऽऽद्य पक्षत्रय दूषणकमिति तत्परिहारेणेतरत्पक्षत्रयमिहाऽऽश्रीयते। तथाहि तत्र प्रथमे पक्षे नाम्नैकशेषेऽनेकविभक्तिश्रवणं स्यादिति प्रथमपक्षे दोषः। द्वितीये विभक्त्यन्तस्य लोपे कृते विभक्त्यश्रवणन्यायेन द्विप्रभावस्य निवर्तमानपदसंस्थास्य भेऽपि विभक्त्यन्तत्वात् द्विवचनबहुवचनानुत्पत्तिः स्यात्, ततश्च वृक्ष इति नित्यमेव स्यादिति द्वितीयपक्षदोषः। तृतीये तु समासान्तदोषः। तथाहि ऋक् च ऋक् चेति द्वन्द्वे तत एकशेषे "ऋक्पूःपथ्यपः०" इति समासान्तः स्यादिति प्रथमपक्षत्रये दूषणम्। इतरत्र तु पक्षत्रये न कश्चिद्दोषः। तथाहि वृक्ष वृक्ष इति स्थितानां नाम्नां विभक्तिमनुत्पाद्यैवैकशेषप्रवृत्तिरिति प्रथमपक्षो निर्दोषः तुल्यकाले नामानि यदा भारोपन्यायेन परस्परमभ्यनुप्रवेशादभिधेयमाहुस्तदा द्वन्द्वैकशेषाविधानमिति द्विवचन बहुवचनं चोपपन्नमिति द्वितीयेऽपि न कोऽपि दोषः। तृतीयपक्षे न कश्चिद्दोषः। नामसमुदायस्यैवार्थवत्त्वान्नामत्वाद्विभक्त्युत्पत्तिरिति सोऽपीहाऽऽश्रीयते इति पक्षत्रयेऽपि द्वन्द्वः प्राप्तोऽनेनाऽपोद्यते इत्याह—द्वन्द्वापवादो योग इति।

'स्यादावसङ्ख्येयः'। ३। १। ११९॥ सरूपार्थमिति—अन्यथा अर्थसाम्यस्य स्यादावप्यविद्यमानत्वात् पूर्वेणाऽपि सिध्यति। पादा इति—पादोऽङ्घ्रिश्लोकचतुर्थांशरश्मिप्रत्यन्तपर्वतेषु। माषो माने धान्यभेदे मूर्खे स्पर्शदोषमितयोरपि। ओकारे रूप भिद्यत इति—अयमर्थः—'वस्वस०" इति सूत्रे तद्ग्रहणेनैव नप्त्रादिग्रहणे सिद्धे पत्यश्वादीनां पृथगुपादानं तदेवं ज्ञापयति। अत्र सूत्रे औणादिकानामेवावयवानामेव ग्रहणमेव, जननीदेवरत्वापायाविनोर्मातृपातृशब्दयोरौणादिकयोरौकार आर् न प्राप्नोति, द्वितीययोस्तु तृजन्तयोस्तृप्रकारा प्राप्नोतीति रूप भेदः। माषावित्यादीति—अत्र समाहारद्वन्द्वेऽपि पक्षेऽप्येकशेषे वागुभयत्वात् द्विवचनमेव भवति। कुतः 'क्लीबमन्येनैकं च वा" इत्यत्र समाहारेतरविषयया विकल्पनेकत्वे सिद्धेऽप्येकग्रहणात् तेन विशेषाभावे सर्वत्रैकशेषे द्विवचनादेव भवति। एकश्च एकश्चेति—"स्यादौ" इत्यनेनाऽपि न भवत्येकशेषः, स्याद्युपस्थाप्यप्रवृत्तेः।

---

१ ७-१-१८। २ १-४-१८। ३ १-१-११८।

परस्परसन्निधानेन पदद्वयोः सामर्थ्यमाहितं तदन्यतरविगमेऽपि न हीयते यथा वह्निनिवृत्तावपि वह्निसम्पादितपाकजरूपादिवदिति प्लक्षेणोक्तत्वान्न्यग्रोधस्याऽप्रयोगः प्राप्नोति ?, नैवम्; न्यग्रोधार्थस्य प्लक्षेणाऽनुक्तत्वात् न्यग्रोधशब्दप्रयोगः। एवं चेतद् द्वन्द्वावयवानामेवाऽनेकार्थाभिधायित्वं न केवलानां, यथा वह्निसन्निधानेन ताम्रं द्रवरूपं भवति, न तु वह्निनिवृत्ताविति। एवमिहाऽपि सहभूतावेवाऽन्योन्यस्यार्थमाहतुर्न तु पृथग्भूतौ भारोद्वाहकवत्सहभूतानां परस्परसख्याविर्भावादिति। ततश्च प्लक्षस्य न्यग्रोधस्य चाऽनेकार्थत्वे यद्यपि बहुत्वं प्राप्तं तथापि द्वन्द्वावयवत्वेन द्वयमतो द्वैर्थं न तु बहुत्वमिति न बहुवचनम्। सहोक्तिरिति—नन्वस्तु यथाकथञ्चित्सहोक्तिः समाहारे तु न सम्भवति तस्यैकत्वात् सहोक्तेश्च भेदनिबन्धनत्वादिति ?, उच्यते—समाहारो हि सहभावः, स च संहन्यमानानां धर्मः; संहन्यमानाश्च सहोच्यमाना एव न पृथगुच्यमाना इति तत्राऽपि सहोक्तिसम्भव इत्यदोषः। एकविंशतिरित्यादि—नन्वेकविंशतिरित्यादि संख्याद्वन्द्वो यद्यवयवप्रधानस्तदैकविंशतिरिति द्विवचनं प्राप्नोति द्वाविंशतिरिति बहुवचनम्। अथ समुदायप्रधानस्तदा नपुंसकत्वं स्यादित्याशङ्का।

'समानामर्थेनैकः शेषः'। १।१।११८॥ समानामिति निर्धारणषष्ठ्यन्तं समुदायिसमुदायसम्बन्धषष्ठ्यन्तं वा न तु स्थानषष्ठ्यन्तम्। तत्र हि समानां स्थाने एकः शिष्यत इत्येक आदेशो भवतीति। अविशेषेऽपि यस्तदभिधाने समर्थः स एव तेषामन्यतमः स्याच्चतश्च तिले तिलानीति कृतसकारस्य यस्य स्यादिति। निर्धारणषष्ठ्यां तु समानामित्येकसंख्याकः समानार्थो विशिष्यते। समुदायिसमुदायसम्बन्धषष्ठ्यां च समानार्थारब्धे समुदाये समानार्थ एवाऽवयवो विशिष्यत इत्यदोषः। ननु जातिः शब्देनाऽभिधीयते, सा चैका ततो बहूनां प्रयोगाप्राप्तौ नाऽयं एकशेषः; न, प्रत्यर्थं शब्दनिवेशात् द्रव्यं द्रव्यं प्रति शब्दप्रयोगादेकेन शब्देनाऽनेकस्य द्रव्यस्याऽभिधानं नोपपद्यत इत्यनेकस्याऽर्थस्य प्रतिपादनेऽनेकशब्दानां वाचकानां प्रयोगः प्राप्नोतीति द्रव्यपदार्थदर्शने एकशेषारम्भः। अथ शेष इत्येकवचनादेक एव शेष इष्यते किमेकग्रहणेन ? उच्यते—स्पष्टार्थम्। ननु समग्रमेवेदं सूत्रं नाऽऽरम्भणीयं समानार्थैः शब्दैरनेकस्याऽर्थस्याभिधित्सायां व्यक्तावपि पदार्थे एकस्यैव तत्प्रत्यायने शक्तत्वादन्ये निवर्तन्ते उक्तार्थानामप्रयोग इति। आरम्भेऽप्येकशेषे निवर्तमानार्थप्रत्यायने स्वाभाविकी शक्तिर्यावन्नाऽनुसृता तावत्कथमसौ निवर्तमानानामर्थमभिदधीतेति ?, सत्यम्; मर्थानुवादकत्वाददोषः। प्लक्षन्यग्रोधाविति—अर्थेन समानामिति वचनाल्लौकिक्याः समानार्थतायाः समासप्रयोगादिहैकशेषो न भवति। लौकिकी तु समानार्थता द्वन्द्वादन्यत्र विज्ञायते। द्वन्द्वपदानां च परस्परार्थसंक्रमात् समानार्थत्वे विज्ञायमानेऽर्थेन

समानामित्यनर्थकं स्यात् । इहैकशेषे षट् पक्षाः सम्भवन्ति—तत्र प्रत्येकमेकविभक्तौ परतो विभक्तिपरित्यागेन नामैकशेषः स्यात् १, अथवा सविभक्तिकानां वृक्षम् वृक्षम् इति स्थिते एकस्य वृक्षम् इत्यस्य शेषः २, अथवा वृक्षश्च वृक्षश्च वृक्षश्चेति द्वन्द्वे कृते प्रत्येकस्य, वृक्ष इत्यस्य शेषः ३, अथवा विभक्तिमनुत्पाद्यैव नाममात्रेण वृक्ष-वृक्षेत्येवविधानामेव शेषः कार्यस्ततो विभक्तिः ४, अथवा सहोक्तौ वृक्षश्च वृक्षश्चेति द्वन्द्वे प्राप्ते एकशेषः ५, अथवा नामसमुदायस्यैवार्थवत्त्वाभावसंज्ञायां द्विवचनाद्युत्पत्तौ एकशेषः ६; इति षट्पक्षाः। तत्राऽऽद्य पक्षत्रय सावद्यकमिति तत्परिहारेणेतरत्पक्षत्रयमिहाऽऽश्रीयते । तथाहि तत्र प्रथमे पक्षे नामैकशेषेऽनेकविभक्तिश्रवण स्यादिति प्रथमपक्षे दोषः। द्वितीये विभक्त्यन्तस्य लोपे कृते विभक्त्यभाववचनन्यायेन द्विवचनाद्यस्य निवर्तमानपदसंस्पर्शासम्भवेऽपि विभक्त्यन्तत्वात् द्विवचनबहुवचनानुपपत्तिः स्यात्, ततश्च वृक्ष इति नित्यमेव स्यादिति द्वितीयपक्षदोषः। तृतीये तु समासान्तदोषः। तथाहि ऋक् च ऋक् चेति द्वन्द्वे तत एकशेषे "ऋक्पूरब्धूःपथ०" इति समासान्तः स्यादिति प्रथमपक्षत्रयं दुष्टम्। इतरत्र तु पक्षत्रये न कश्चिद्दोषः। तथाहि वृक्ष वृक्ष इति स्थितानां नाम्नां विभक्तिमनुत्पाद्यैवैकशेषप्रवृत्तिरिति प्रथमपक्षो निर्दोषः तुल्यकालं नामानि यथा मारोपन्त्सुन्यायेन परस्परमन्त्यनुप्रवेशादभिधेयमाहुस्तदा द्वन्द्वैकशेषाविशेषामिति द्विवचन बहुवचनं चोपपन्नमिति द्वितीयेऽपि न कोऽपि दोषः। तृतीयपक्षे न कश्चिद्दोषः। नामसमुदायस्यैवार्थवत्त्वाभावस्याद्विभक्त्युत्पत्तेरिति सोऽपीहाऽऽश्रीयते इति पक्षत्रयेऽपि द्वन्द्वः प्राप्तोऽनेनाऽपोद्यते इत्याह—द्वन्द्वापवादो योग इति।

'स्यादावसङ्ख्येयः'। ३।१।११९॥ सरूपार्थमिति—अन्यथा अर्थसाम्यस्य स्यादावप्यभिधीयमानत्वात् पूर्वेणाऽपि सिध्यति। पादा इति—पादोऽङ्घ्रिश्लोकचतुर्थांशरश्मिप्रत्यन्तगिरिषु। माषो माने धान्यभेदे मूर्खे त्वग्दोषभिद्यपि। औकारे रूपं भिद्यत इति—अयमर्थः—'ऋस्व०' इति सूत्रे तद्ग्रहणेनैव नप्त्रादिग्रहणे सिद्धे यमप्त्रादीनां पृथगुपादानं तदेवं ज्ञापयति। अत्र सूत्रे औणादिकानामेतावतामेव ग्रहणमेव, जननी देवरजायायाचिनोर्मातृयातृशब्दयोरौणादिकयोरौकारे आर् न प्राप्नोति, द्वितीययोस्तु तृजन्तयोस्तद्द्वारा प्राप्नोतीति रूप भेदः। भ्रातापित्रादीति—अत्र समाहारद्वन्द्ववि-षयेऽप्येकशेषे भ्रातृशब्दात् द्विवचनमेव भवति। कुतः "क्लीबमन्येनैकं च वा" इत्यत्र समाहारेतरविषयया विकल्पनेकत्वे सिद्धेऽप्येकग्रहणात् तत्र विशेषाभावे सर्वत्रैकशेषे द्विवचनाद्येव भवति। एकश्च एकश्चेति—'अथादिः' इत्यनेनाऽपि न भवत्येकत्वेऽपि, त्याद्यपेक्षयाऽप्रवृत्तः।

---

१ ७-१-९८ । २ १-४-१८ । ३ १-१-१२८ ।

'त्यदादिः'। १। १। १२०॥ अन्येन चेति—सहोक्ताविति वर्तमानात् सहार्थस्य च द्वितीयमन्तरेणाऽभावाद् द्वितीयो लभ्यते, स च विशेषानुपादानात्, त्यदादिरन्यश्च गृह्यते। कथमिति—यदि लिङ्गानां सह विवक्षायां परमेव लिङ्गं भवति, कथं ते कुक्कुटमयूर्याविति स्त्रीलिङ्गत्वेत्याशङ्कार्थः।

'भ्रातृपुत्रौ स्वसृदुहितृभिः'। १। १। १२१॥ बहुवचनमिति—ननु भ्रातृपुत्रयोः स्वसृदुहितृभ्यां समर्थत्वाद् द्विवचनेन भाव्यं किमर्थं बहुवचनमित्याह—पर्यायार्थमिति। भ्राता च भ्राता च भ्रातरौ भ्राता च स्वसा च भ्रातरावित्युभयप्रतिपत्तावपि प्रकरणादिना विशेषावगतिः।

'पिता मात्रा वा'। १। १। १२२॥ पितृशब्दसाहचर्यात् जनयित्र्या एव परिग्रहो न धान्यमातुरिति।

'श्वशुरः श्वश्र्वा वा'। १। १। १२३॥ द्विवचनमिति—अत एव पूर्वेण योगविभागः पितृश्वशुरौ मातृश्वश्र्वौ चेत्येकयोगे हि द्विवचनं श्वश्रूशब्दलक्षणपरिग्रहार्थमिति विज्ञातुं न शक्यमिति। तेन भ्रातराविति—चयोगे तु तन्मात्रभेदो न भवति, चयोगमात्रलक्षणस्यार्थस्याऽपि विभक्तत्वादिति भ्रातावित्युक्तम्।

'वृद्धो यूना तन्मात्रभेदे'। १। १। १२४॥ कृत्रिमाकृत्रिमयोरिति परिभाषया पौत्रप्रभृत्यपत्याभिधायिन एव वृद्धशब्दस्य ग्रहणं न वयोवृद्धस्य, एवं युवशब्दस्याऽपि। ननु 'पौत्राणि वृद्धम्' इति पक्षे वृद्धमिति नपुंसकमत्र तु पुंलिङ्गत्वात् कथं सोऽयं भवति? उच्यते—सर्ववस्तुनः सर्वलिङ्गयोगित्वस्योक्तत्वादिति। तन्मात्र एव चेद्भेद इति—छन्दोऽन्यथाऽपि रीत्याऽऽचार्येण याति तावेव तन्मात्रम्, स चाऽसौ भेदश्चेति; वृद्धौ तु तौ वृद्धयुवानावेव मात्र स्वभावो यस्येति कर्तव्यमन्यथा पुंस्त्वं न स्यात्। गार्ग्यगार्ग्यायणाविति—अत्र लघ्वक्षराद्यभावात् पूर्वनिपातानियमः, यदा तु मर्मस्याऽर्थ्यत्वविवक्षा तदा तस्य पूर्वनिपातः।

'स्त्री पुंवच्च'। १। १। १२५॥ नन्वत्र पुंवद्ग्रहणं किमर्थं स्त्रीत्वेनोक्तत्वात् तत्र वृद्धस्त्रीवाचिनो युववाचिना पुंसैकशेषे स्त्रीपुंनपुंसकानामित्येव पुंस्त्वं भविष्यति। न च वाच्यं युववाचिनो यदा स्त्रीत्वं तदा किं भविष्यतीति। अस्त्री युवेति वचनात् स्त्रीवाचिनो युवत्वसंज्ञाया अभावात् नाऽपि युववाचिनो नपुंसकत्वं वाच्यम्, आपत्यतद्धितस्य स्त्रीपुंस्त्वस्यैवोक्तत्वात्, नः स्त्रीपुंनपुंसकानामित्यस्य प्रायस्त्यदादिविषय एव प्रवर्तनेन प्रायिकत्वाभिप्रायार्थं वचनम्। किञ्च भगवताचार्येण अपत्यप्रत्ययान्तानामा-

---

१ १-१-२

भयतिङ्गत्तन्मूलकं तथा गार्गी च गार्ग्यायणश्चेत्यपि कृते तन्मतेऽपि पुंस्त्वं यथा स्यात्। पुमर्थो भवतीति—स्त्रीलक्षणोऽर्थो यस्य शब्दस्य स पुमर्थः। यद्वा शब्दस्येति वृत्तावध्याहर्तव्य तस्य सम्बन्धी स्त्रीलक्षणोऽर्थः पुमर्थः। अर्थग्रहणाच्च विशेषणानामपि पुंस्त्वं सिद्धं, शब्दस्य तु पुंस्त्वे विशेषणानां न स्यात्।

'पुरुषः स्त्रिया'। ३। १। १२६॥ अत्र वृद्धो यूनेति नाऽनुवर्तते, असम्भवात्। तदनुवृत्तौ हि वृद्धः पुरुषो यूना युवसंज्ञया स्त्रियेति स्यात्। न चैतदस्ति। भत्री तिवचनात् स्त्रिया युवसंज्ञाया अभावात्। ब्राह्मणाविति—ब्राह्मणश्च ब्राह्मणी च ब्राह्मणा विति जातिसामान्यविवक्षायामविवक्षितविशेषत्वात् 'समानामर्थेनै०' इत्येकशेषः सिध्यति। भेदविवक्षायां तु द्वन्द्वः प्राप्नोतीति वचनम्। इमौ गावाविति—" स्यादावसंख्येयः " इत्यनेन त्वेकशेषे कदाचिदिमाविति स्यात्। कदाचिदिमे इति—स्त्रीपुंनपुंसकानामिति परं भविष्यतीत्यापि, न वाच्यं; ब्राह्मणश्च ब्राह्मणी च ब्राह्मणावित्यादि सिद्धवर्थमवश्यकर्तव्येनाऽनेनैव परत्वादिहाप्येकशेष इत्यदोषः। नदनद्यौपतेरिति—अन्यत्र " नदी० " सूत्रेणैकार्थता कथं न भवति?, तथा " ङीबे " इति ह्रस्वत्वे नदनदिपतेरिति स्यात्; उच्यते—अत्र नदीत्युक्तेऽपि नदीविशेषो गृह्यतेऽत्र तु सामान्य वाचीति। घटघटीशरावोदञ्चनानीति—चतुर्णामपि सहोक्तौ द्वयोरपि सहोक्तिरस्तीति घटघट्योरेकशेषे घटशरावोदञ्चनानीति प्राप्तम्। एवं पूर्वसूत्रेष्वपि बहूनामपि सहोक्तौ यथाप्राप्तयोः पदयोरेकशेषो भवत्येव। भेदोऽस्तीति न भवतीति—तथाहि ब्राह्मणवत्सायाम्य्याम् ब्राह्मणीवत्सशब्दो भिद्यते कथमित्युच्यते—एकत्र ब्राह्मणस्य वत्सा ब्राह्मणवत्सेति पुमर्थो विशेषणम्, अन्यत्र तु ब्राह्मण्या वत्सो ब्राह्मणीवत्स इति तथा इत्यर्थोऽप्यन्य इति तन्मात्रभेदाभावादेकशेषाभावः। यदुपाध्यायः—स्त्रीपुंसयोः सहोक्तावेकशेषः; सा च प्रधानयोरेव भवतीति यत्र प्रधानस्त्रीपुंसकृतो विशेषस्तत्रैकशेषः। इह त्वप्रधानस्त्रीपुंकृतो विशेष इत्येकशेषाभाव'। ब्राह्मणवत्सश्च ब्राह्मणीवत्सा चेत्यपि कृतेऽर्थान्तरस्त्रीलिङ्गभेदाभेकशेषः, ब्राह्मणवत्सश्च ब्राह्मणवत्सा चेति तु कृते भवत्येव।

'ग्राम्याशिशुद्विशफसङ्घे स्त्री प्रायः'। ३। १। १२७॥ इमौ गावा विति—ननु समुदायस्य सङ्घरूपत्वात्तस्य च द्वयोरपि सम्भवात् कथं सङ्घ इति वचनाद् द्वयोरपि न भवति?, सत्यम्; द्वितीयेन विना सहोक्तेरभावात् सहोक्तिग्रहणादेव द्वयोः सङ्घे सिद्धे सङ्घग्रहणं सङ्घप्रकर्षार्थम्।

'क्लीबमन्येनैकं च वा'। ३। १। १२८॥ ननु समाहारेतरेतरविवक्षाया

१ ३-१-११८। २ ३-१-११५। ३ ३-१-१४१। ४ १-४-५७।

'स्यदादिः' । १ । १ । १२० ॥ अन्येन चेति–सहोक्तानिति वर्तमानात् सहार्थस्य च द्वितीयमन्तरेणाऽभावात् द्वितीयो लभ्यते, स च विशेषानुपादानात्, त्यदादिरन्यश्च गृह्यते । कथमिति–यदि लिङ्गानां सह विवक्षायां परमेव लिङ्गं भवति, कथं ते कुक्कुटमयूर्याविति स्त्रीलिङ्गतेत्याशङ्कार्थः ।

'भ्रातृपुत्राः स्वसृदुहितृभिः' । १ । १ । १२१ ॥ बहुवचनमिति–ननु भ्रातृपुत्रयोः स्वसृदुहित्रोश्च द्व्यर्थत्वात् द्विवचनेन भाव्यं किमर्थं बहुवचनमित्याह–पर्यायार्थमिति । भ्राता च भ्राता च भ्रातरौ भ्राता च स्वसा च भ्रातरावित्युभयप्रतिपत्त्यावपि प्रकरणादिना विशेषावगतिः ।

'पिता मात्रा वा' । १ । १ । १२२ ॥ पितृशब्दसाहचर्यात् जनयित्र्या एव परिग्रहो न चान्यमातुरिति ।

'श्वशुरः श्वश्र्वा वा' । १ । १ । १२३ ॥ द्विवचनमिति–अत एव पूर्वेण योगविभागः पितृश्वशुरौ मातृश्वश्र्वा चेत्येकयोगे हि द्विवचनं श्वश्रूशब्दद्वयपरिग्रहार्थमिति विज्ञातुं न शक्यमिति । तेन जातामिति–चयोगे तु तन्मात्रभेदो न भवति, चयोगादिलक्षणस्याऽर्थस्याऽपि भिन्नत्वादिति जातामित्युक्तम् ।

'वृद्धो यूना तन्मात्रभेदे' । १ । १ । १२४ ॥ कृत्रिमाकृत्रिमयोरिति परिभाषया पौत्रप्रभृत्यपत्याभिधायिन एव वृद्धशब्दस्य ग्रहणं न वयोवृद्धस्य, एवं युवशब्दस्याऽपि । ननु "पौत्रादि वृद्धम्" इति सूत्रे वृद्धमिति नपुंसकमत्र तु पुंलिङ्गस्तत्कथं सोऽत्र भवति ? उच्यते–सर्ववस्तुनः सर्वलिङ्गयोगित्वस्योक्तत्वादिति । तन्मात्र एव भेद इति–सूत्रेऽन्यथाऽपि रीत्याऽवधारणे याति तावेव तन्मात्रम्, स चाऽसौ भेदश्चेति; वृत्तौ तु तौ वृद्धयुवानावेव मात्रं स्वभावो यस्येति कर्तव्यमन्यथा पुंस्त्वं न स्यात् । गाम्यमर्याविति–अत्र लक्षणाभावात् पूर्वनिपातानियमः, यदा तु धर्मस्याऽर्च्यत्वविवक्षा तदा तस्य पूर्वनिपातः ।

'स्त्री पुंवच्च' । १ । १ । १२५ ॥ नन्वत्र पुंवद्ग्रहणं किमर्थं स्त्रीत्येवोच्यतां ततश्च वृद्धस्त्रीवाचिनो युववाचिना युवैकशेषे स्त्रीपुंनपुंसकानामित्येव पुंस्त्वं भविष्यति । न च वाच्यं युववाचिनो यदा स्त्रीत्वं तदा किं भविष्यतीति । अस्त्री युवेति वचनात् स्त्रीवाचिनो युवसंज्ञाया अभावात् नाऽपि युववाचिनो नपुंसकत्वं वाच्यम्, अपत्यवाचितस्य स्त्रीपुंस्त्वस्यैवोक्तत्वात्, न; स्त्रीपुंनपुंसकानामित्यस्य प्रायस्त्यदादिविषय एव प्रवर्तनेन प्रायिकत्वाभिप्रायाच्च वचनम् । किञ्च अस्मादाचार्येण अपत्यप्रत्ययान्तानाम-

१ ६-१-२

भयलिङ्गत्वमुक्तं ततश्च गार्गी च गार्ग्यायणश्च चेत्यपि कृते तन्मतेऽपि पुंस्त्वं यथा स्यात् । पुमर्थो भवतीति—स्त्रीलक्षणोऽर्थो यस्य शब्दस्य स पुमर्थः । यद्वा शब्दस्येति गुणाभ्याहारेण तस्य सम्बन्धी स्त्रीलक्षणोऽर्थः पुमर्थः । अर्थग्रहणाच्च विशेषणानामपि पुंस्त्वं सिद्धं, शब्दस्य तु पुंस्त्वे विशेषणानां न स्यात् ।

'पुरुषः स्त्रिया' । ३ । १ । १२६ ॥ अत्र वृद्धो यूनेति नाऽनुवर्तते, अघटनात् । तदनुवृत्तौ हि वृद्धः पुरुषो यूना युवसंज्ञया स्त्रियेति स्यात् । न चैतदस्ति । अशीतिवचनात् स्त्रिया युवसंज्ञाया अभावात् । ब्राह्मणाविति—ब्राह्मणश्च ब्राह्मणी च ब्राह्मणा वित्यादौ जातिसामान्यविवक्षायामविवक्षितविशेषत्वात् "समानामर्थेनै०" इत्येकशेषः सिध्यति । भेदविवक्षायां तु द्वन्द्वः प्राप्नोतीति वचनम् । इमौ गावाविति—"स्याद्वा संख्येयः" इत्यनेन त्वेकशेषे कदाचिदिमाविति स्यात् । कदाचिदिमे इति—स्त्रीपुनपुंसकानामिति परं भविष्यतीत्यापि, न वाच्यः; ब्राह्मणश्च ब्राह्मणी च ब्राह्मणावित्यादि सिद्ध्यर्थमवश्यकर्तव्येनाऽनेनैव परत्वादिहाऽप्येकशेष इत्यदोषः । नदनदीपतेरिति—नन्वत्र "नदी०" सूत्रेणैकार्थता कथं न भवति ?, तथा 'क्लीबे" इति ह्रस्वत्वे नदनदिपतेरिति स्यात्; उच्यते—तत्र नदीसुकेऽपि नदीविशेषो गृह्यतेऽत्र तु सामान्य वाचीति । घटघटीशरावोदञ्चनानीति—चतुर्णामपि सहोक्तौ द्वयोरपि सहोक्तिरस्तीति घटघट्योरेकशेषे घटशरावोदञ्चनानीति प्राप्तम् । एवं पूर्वसूत्रेष्वपि बहूनामपि सहोक्तौ यथाप्राप्तयोः पदयोरेकशेषो भवत्येव । भेदोऽस्तीति न भवतीति—तथाहि ब्राह्मणवत्साब्राह्मणीवत्सशब्दौ मिथः कथमित्युच्यते—एकत्र ब्राह्मणस्य वत्सा ब्राह्मणवत्सेति पुमर्थो विशेषणम् , अन्यत्र तु ब्राह्मण्या वत्सो ब्राह्मणीवत्स इति स्त्र्यर्थ इत्यर्थोऽप्यन्य इति तन्मात्रभेदाभावादेकशेषाभावः । यदुपाध्यायः—स्त्रीपुंसयोः सहोक्तावेकशेषः; सा च प्रधानयोरेव भवतीति यत्र प्रधानस्त्रीपुंसकृतो विशेषस्तत्रैकशेषः । इह त्वप्रधानस्त्रीपुंकृतो विशेष इत्येकशेषाभावः । ब्राह्मणवत्सश्च ब्राह्मणीवत्सा चेत्यपि कृतेऽर्थान्तरस्त्रीलिङ्गभेदादेकशेष , ब्राह्मणवत्सश्च ब्राह्मणवत्सा चेति तु कृते भवत्येव ।

'ग्राम्याशिशुद्विशफसङ्घे स्त्री प्रायः' । ३ । १ । १२७ ॥ इमौ गावाविति—ननु सङ्घत्वस्य सङ्घरूपत्वात्पशुत्वस्य च द्वयोरपि सम्भवात् कथं सङ्घ इति वचनाद् द्वयोरपि न भवति ?, सत्यम्; द्वितीयेन विना सहोक्तेरभावात् सहोक्तिग्रहणादेव द्वयोः सङ्घे सिद्धे सङ्घग्रहणं संघप्रकर्षार्थम् ।

'क्लीबमन्येनैकं च वा' । ३ । १ । १२८ ॥ ननु समाहारेतरेतरविवक्षाया

---

१ ३-१-११८ । २ ३-१-११६ । ३ ३-१-१४१ । ४ ३-४-१७ ।

मेकत्वविकल्पो भविष्यति किमेकग्रहणेन ?, सत्यम्; इदमेकग्रहणं ज्ञापकमन्यत्रैकत्वे समाहारविवक्षायामप्येकत्वं न भवति ।

‘ पुष्यार्थाद् भे पुनर्वसुः ’ । ३ । १ । १२९ ॥ एकशेषो नित्यश्च इति—विकल्पप्रकरणादित्यर्थः, अन्यथा क्लीबमन्येनैकं च वा पुष्यार्थाद् भे पुनर्वसुश्च नित्यमित्येकमेव योगं कुर्यात् । भे नक्षत्रे वर्तमानादिति—भ इत्येकस्याऽप्यावृत्त्या उभयस्याऽपि विशेषणत्वम् । समाहारे त्विति—समाहारे त्वेकत्वानेकत्वयोर्नास्ति विशेष इति । पुष्यपुनर्वसवो माणवका इति—पुष्येण चन्द्रयुक्तेन युक्तः कालः “ चन्द्रयुक्तात् काले ” इत्यण्, एवं पुनर्वसु शब्दादपि । ततो “ लुप्त्वप्रयुक्ते ” इति लुप् । एवं कालयोरनयोः पुष्ये जातः पुनर्वस्वोर्जाताविति “ भर्तुसन्ध्यादे ” इत्यण् ‘ बहुलाऽनुराधा० ’ इति तस्य लोपस्ततः पुष्यश्च पुनर्वसू चेति द्वन्द्वः । पुष्यपुनर्वसवो युग्मा इति—सन्ति जना पश्यन्ति “ वर्धनोपचारे ” इति के साम्प्रतं ततो येषां पुष्यपुनर्वस्वादीनां युग्मानां कोऽर्थः ? मोहोत्पादकानां मध्ये पुष्यः पुनर्वसू जायते लोकैस्तैः पुष्यपुनर्वसवः युग्मा इति । कर्तरि के तु विपर्यासप्रतिपत्तारः पुरुषा उच्यन्ते, ततः पुनर्वसवर्थस्यैकत्वेऽपि अन्यपदार्थतया पुरुषबहुत्वे सति बहुवचनमुपपद्यत एव, अत्राऽवयवेन विग्रहः समुदायः समासार्थः, ततः पुष्य इत्येकोऽवयवः पुनर्वसू इति द्वितीयः, येषामिति समुदायः समासार्थः ।

‘ विरोधिनामद्रव्याणां नवा द्वन्द्वः स्वैः ’ । ३ । १ । १३० ॥ अद्रव्याणामिति—अत्र गुणादीनामाश्रयं द्रव्यं गृह्यते, न तु वैयाकरणप्रसिद्धमिव तदित्यादि लक्षणम्; तस्मिंस्तु गुणभावे सुखदुःखादीनामपि द्रव्यत्वप्रसङ्गः । छायातपमिति न भवति तयोर्द्रव्यत्वात् । सुखिदुःखितानीति—अत्र सुखदुःखे विरोधिनी सुखित्वं विरोधिनीति अविरोध्यवयवयोऽसौ द्वन्द्वः स्वैरिति वचनात् नैकवद्भावः ।

‘ पशुव्यञ्जनानाम् ’ । ३ । १ । १३२ ॥ अत्र पशवो ग्राम्या गवादयो ग्राह्या न त्वारण्याः रुरुप्रभृतय उत्तरत्र मृगग्रहणात् । व्यञ्जनमिति—व्यञ्जनं येनान्नं रुचिमापद्यते तदपि दधिघृतशाकसूपादि ।

‘ तरुतृणधान्यमृगपक्षिणां बहुत्वे ’ । ३ । १ । १३३ ॥ तरुरिति सामान्येनोक्तेऽपि तद्विशेषा गृह्यन्ते, तेन प्लक्षश्च न्यग्रोधश्च इतरेतरयोग एव । प्लक्षौ च न्यग्रोधौ चेति—तरुप्रभृतीनां द्वन्द्वावयवानामेव बहुत्वे इति विशेषणात् द्वन्द्वस्य बहुत्वेऽपि न समाहारः । अमृगैरबहुत्वे चेति—यदा ग्राम्यपशूनामरण्यपशुभिः सह द्विर्भवति तदा मा भूदित्यर्थः ।

---

१ ६-१-६ । २ ६-२-८१ । ३ ६-३-१७ । ४ ५-१-११ ।

'सेनाङ्गक्षुद्रजन्तूनाम्'। ३ । १ । १३४ ॥ पृथग्योगादिति–अन्यथाऽर्थस्य समानत्वात् पूर्वेणैकयोगः स्यादित्यर्थः । अत्र यथाऽश्वरथमिति भवति तथा हस्त्यारोहमिति न स्वीकीयत्वाभावात् । न चास्य सेनाङ्गत्वेन स्वत्वमस्ति, यतो सेनाङ्गेष्वपि आरोह्यमाणारोहयोरेणाऽश्वोऽरूढानामारोहकेण स्वस्वत्वमिष्यते; अत्र च न तथेति, एवं प्राणितूर्याङ्गाणामित्यत्राऽपि तूर्याङ्गेषु वाद्यानां वाद्येषु वादकानां वाद्केन च स्वत्वं रक्ष्यम् । क्षुद्रजन्तव इति–" क्षुद्रजन्तुरनस्थिः स्यादथवा क्षुद्र एव यः । शतं वा प्रसृतिर्येषां, केचिदानकुलादपि ॥ १ ॥ क्षुद्रजन्तुरक काठो, येषां स्व नाऽस्ति शोणितम् । नाऽञ्जलिर्यत्सहस्रेण, केचिदानकुलादपि ॥ २ ॥" ।

'फलस्य जातौ'। ३ । १ । १३५ ॥ बदरामलकमिति–बदर्या विकारः फलं हैमायनम्, आमलक्या विकारः फलं "दोरेप्राणिन" मयट्; द्वयोरपि "फले" लुप् ।

'अप्राणिपश्वादेः'। ३ । १ । १३६ ॥ पूर्वयोगारम्भादिति–फलस्याऽप्राणित्वेन अनेनैव सिद्धत्वात् । न च पूर्वयोगमन्तरेणाऽत्र जाताविति न स्यादिति वाच्यम् । अत्रैव जातिग्रहणं करिष्याम इति । यत्राऽप्राणीति वचनात् प्राप्तिस्ते पश्वादिप्रोक्ता व्यञ्जनादयो ग्राह्या न तु पशवस्तत्र "धर्माणि०" इत्यनेनैव निषेधसिद्धेः । ब्राह्मण क्षत्रियविट्शूद्रा इति–अत्र प्राणिवर्जनात् ब्राह्मणादीनां गवादीनां च प्राणित्वाच्च नित्यो विधिर्न भवति । दधिघृते इत्यादिप्रयोगेषु च पश्वादिवर्जनादधिघृतादीनां च पश्वादिप्रोक्तत्वादनेन नित्यैकवद्भावाभावः ततश्च यथाप्राप्तमेव भवति । कुशकाशानिति–बहुत्व इति व्याख्यानिर्व्यक्तिविवक्षायां चरितार्थेति जातावेकार्थता प्रसज्येत । अश्वरथा विति–नन्वत्र यथा पश्वादिप्रोक्तवर्जने दधिघृते दधिघृतमित्यादिषु यथाप्राप्तस्य विधानं दर्शितमेव 'फलस्य जातौ' इत्यस्याऽपि व्यवच्छिन्नत्वात् कथमत्र यथाप्राप्तं न दर्शितम् ?, उच्यते–अत्र यथाप्राप्तेऽपि वर्ण्यमानं तावदेकत्वेनैव नित्यं भवितव्यं फलस्य जातावित्यनेनाऽपि नित्यमेकत्वविधानात् । तथाऽनेनैकत्वे फलस्य जातावित्यनेन चैकत्वं न कश्चिद्भेदप्रतिपत्तिरस्तीति विकल्पाभावात् न दर्शितमिति ।

'प्राणितूर्याङ्गाणाम्'। ३ । १ । १३७ ॥ निराकरणार्थमिति–प्राणिपशवादि स्यात्र '"अप्राणिपश्वादेः" इति प्राप्तस्य प्राणिपशवयोरप्राणित्वेन स्वत्वात् ।

'चरणस्य स्थेणोऽद्यतन्यामनुवादे'। ३ । १ । १३८ ॥ कर्तृत्वेनति–गौणमुख्ययोरिति न्यायात् मुख्यस्यैव कर्ता लभ्यते, तेन यदा भावे प्रयोगस्तदा

---

१ १-२-७१ । २ १-३-५८ । ३ ३-१-१३५ । ४ ३-१-१३६ ।

प्रत्ययापि कठकालापाभ्यामिति भवति न तु समाहारः । ध्वंसितानुध्वंसनमिति–ध्वंसनं ध्वंसस्तं करोति णिच्, ततः क्तः; अन्यथा "सेटोऽपतः" इतीटो निषेधः । मौदपैप्पलादमिति–मुदस्य मोदस्य वा पिप्पलादस्य चाऽपत्यं "ऋष्यण्०" इत्यण्, मौदेन पैप्पलादेन च प्रोक्तमिति चापत्ये ईयस्यति वाधके 'मौदादिभ्यः" इत्यण्, ततः "तदधीते" इत्यण्, तस्य "प्रोक्ताल्" इति लुप् । तार्किकेति–तर्केण चरति तर्कः प्रयोजनमस्येति वा "चरति" "प्रयोजनम्" इति वा इकणि, यद्वा तर्कं वेत्त्यधीते वा 'न्यायादेरिकण्" । परं तदा न्यायादिष्वपठितोऽपि द्रष्टव्यः ।

'अक्षीबेऽध्वर्युक्रत्वोः' । ३ । १ । १३९ ॥ साह्नातिरात्रमिति–अह्न अह्ना च तत्र पृषोदरादित्वात् अह्नादेशे 'अह्नि" इति नित्यं सादेशः, यद्वा अह्नां समूहः "खलादिभ्योऽण्" अनीनादयष्टोऽन्नोऽस्य लुप् । सहाऽह्नेन वर्तते साह्नश्चातिरात्रश्च । गवामयनादित्यादित्यामयन इति–आमीनातीति अप्, अयन् 'अंशुपत्रेः" इत्यपो वा । आमयं करोति "णिज्बहुलं०" आमयन्ते सरामीक्रियन्तेऽनेनाऽनटि ततो गवामामयन गवामयनम्, अयनशब्दे वा उत्तरपदे चाऽलुक्त्वात् षष्ठ्या अलुप् । अदितेरपत्यानि आदित्या दृष्टाः, न आमयनमनामयन सर्वं पूर्ववत् । दर्शपौर्णमासाविति–दृश्यतेऽस्मिन् व्यञ्जनाग्नि दर्शोऽमावास्या उपचारादर्शभवो यागोऽपि दर्शः । पूर्णो मासश्चन्द्रोऽस्यां पूर्णमासोऽण् ङीः । पौर्णमास्यां भवो यागः 'भर्तुसन्ध्यादेरण्" ।

'निकटपाठस्य' । ३ । १ । १४० ॥ इह पाठशब्दो भावे कर्मणि वा । भावपक्षे पाठशब्देन पाठक्रियोच्यते तेन पाठक्रियया निकटव्यपदेशानामित्यर्थो जायते । निकटत्वं च कालरूपं प्रसिद्धमेव । यथा सूत्राध्ययनसमाप्तिसमनन्तरमेव चावश्यं पठ्यन्त, तथैव पदान्यधीत्य क्रमोऽधीयते इत्यर्थो भवति । यदा कर्मणि पठ्यते इति पाठो ग्रन्थो द्रष्यारमाऽऽन्यत । स च ग्रन्थ एकोऽपि पदक्रमसंहितामेदकल्पनया भिन्नस्तत्र पठ्यमानैकग्रन्थनिमित्तं कालरूपतो नैकट्यं सम्भवति । तेन–पाठयोरिति पाठक्रिययोः, पाठ्यमानग्रन्थयोर्वेत्यर्थः । पितापुत्राविति–अत्र निकटा जननक्रिया न तु पाठ इति ।

'नित्यवैरस्य' । ३ । १ । १४१ ॥ कौरवपाण्डवा इति–कुरुशब्दादिदमर्थे उत्साद्यण्, पाण्डुशब्दादपत्ये शिवाद्यण् । वैर एवेति–तद्योपचारात् आचार्यादिकृत वैरमपि आहरादम् ।

१ ४– –११ । २ ६–१ ६१ । ३ ६–३–१८२ । ४ ६–१–११७ । ५ ६–१–१११ । ६ ६–४–११ । ७ ६–४–११ । ८ ६–२–११८ । ९ ६–२–१४७ । १० ६–१–११ । ११ उणा ११५ । १२ ६–४–४१ । १३ ६–३–८६ ।

‘ नदीदेशपुरां विलिङ्गानाम् ’ । ३ । १ । १४२ ॥ उद्ध्येरावतीति–उद्ध्यस्तुदक “ कुम्भमिथो० ” इत्यस्याऽपि नदीत्वं स्तोकविशेषात् । विपाट् च सीति–विशिष्ट पाशिवती क्विपि पृषोदरादित्वाद्विपाडिति न्यासः, तेन यत्र विप्राडिति दृश्यते तत्र साधु । पुरां देवत्वादिति–पुरामप्युपभोगस्थानत्वस्य देशलक्षणस्य विद्यमानत्वात् किमर्थं पृथग्ग्रहणं ?, उपलक्षण चेद् नदीग्रहणमपि ग्रामनिषेधार्थमेव । जाम्बवशालूकिन्याविति–जम्बूनामदूरभवो ‘ निवासाऽदूरभवे ’ इत्यण् । शालूकान्युत्पलादिमूलान्यत्र सन्ति । गौरीकैलासाविति–क जलम्, इला भूमिस्तयोरास्ते कैलासः स्फटिकस्तस्याऽयम् ।

‘ पात्र्यशूद्रस्य ’ । ३ । १ । १४३ ॥ पात्र्यशूद्रा द्विप्रकाराः, आर्यावर्तान्तर्गतास्तद्बाह्याश्च । अत्राऽपि आर्यावर्तमानां तैः स्पर्शं, तद्बाह्यानां पात्रैरिति द्रष्टव्यम् । उभयेऽपि क्रमेण तक्षायस्कारमित्यादिना दर्श्यन्ते । किं किं दधातीति पर्षत्कादित्वात्–किष्किन्धः । किष्किन्धादयश्चत्वार आर्यावर्ताद् बाह्या म्लेच्छभेदाः ।

‘ गवाश्वादिः ’ । ३ । १ । १४४ ॥ गवाश्वादिष्वष्टकं यावत् “ पैलुम्यश्वना नाम् ” इति विकल्पे नित्यार्थः पाठः । सर्वेषु च “ स्वरे वाऽनक्षे ” इत्यवादेशः । कुब्जवामनमित्यादिषु चतुर्षु तु न्यायसिद्धे समाहारेतरेतरयोग नित्यार्थः । श्वचण्डालमिति–नित्यवैरे ‘ नित्यवैरस्य ” इत्येव सिद्धमित्याह–नित्यवैराभावपक्षे इति ये चण्डालपाटके श्वानो वसन्ति तेऽत्र विवक्षिताः । न च तेषां चण्डालैः सह वैरमस्ति । यद्वा चण्डालाः श्वान घ्नन्ति अतोऽसौ धावतीति नित्यवैराभावः । दासीपच्छिकमिति–अत्र जातित्वात् “ धर्मायिचि ” इति सिद्धावपि व्यक्तिपरनोदनायामपि यथा स्यादित्यस्य पाठः । उष्ट्रखरमिति–पशुत्वात् विकल्पे प्राप्ते, उष्ट्रशशमित्यत्र–तित्व रेतरयोगे प्राप्ते; पशुविकल्पश्च नाऽस्ति शशस्याऽग्राम्यत्वात् । मूत्रशकृदिति–धर्मा दित्वात् शकृन्मूत्रमपि, मूत्रशकृदित्यादौ व्यक्तिपरनोदनायां “ धर्मायिच० ” न सिध्यतीत्युपादानम् । दर्भशरमिति–दर्भादीनां तृणजातित्वादप्राणीति नित्यविधेस्तृण विकल्पे बाधके प्राप्तेऽयं विधिः । गवैलकमिति–“ स्वरे वाऽनक्षे ” इत्यवादेशेऽपि सत्वस्य विकृतत्वात् समाहारः ।

‘ न दधिपयआदिः ’ । ३ । १ । १४५ ॥ मधुसर्पिषीति–धमादित्वात् पर्यायेण पूर्वनिपातः । परिव्राजकौशिकाविति–परिव्रा–नदी, कौशिकश्च पर्वतः, कुशोऽस्याऽस्ति कुशिकस्तस्याऽयम् विदायत्तिः; अत्र नदीदेशेति स्त्रैरिति व्याख्यया नित्यप्रभाहृतिर्निषिध्यते, न्यायेन वैकल्पिकस्तु प्राप्त एव स पाठेन निषिध्यते । नरनारायणाविति–

---

१ ५-१-११ । २ ६-२-६१ । ३ ३-१-११३ । ४ ७-२-११ । ५ ३-१-१४१ । ६ ३-१-११६ ।

भ्यर्हितत्वात् नारायणस्य पूर्वनिपाते प्राप्ते राजदन्तादित्वात् नरस्य पूर्वनिपातः। भीमार्जुनाविति–"धर्मार्थादिषु द्वन्द्व" इति भीमस्य पूर्वनिपातः। मातापितराविति–मातुरर्च्यत्वात् पूर्वनिपातः यदाह–" सहस्रं हि पितुर्माता, गौरवेणाऽतिरिच्यते। वर्तिक पिह मिरा रामो, विघचे रघुकाश्यपम् ॥ १ ॥" भुवश्यपतीति–धर्मादित्वाच्चपः भुव इत्यपि।

'सवर्णाने'। ३। १। १४६ ॥ वर्णिपदार्थानामिति–वर्णनं वर्णः समासार्थः, सोऽस्ति येषां पूर्वपदोत्तरपदार्थानां ते वर्णिनस्तदभिधायकानि पदानि वर्णिपदानि पूर्वपदोत्तरपदस्वभावानि तेषामर्था अभिधेयरूपास्तेषामिति। ननु दध्नेत्यादिना बहुर्येन गोमहिषमित्यादेकत्वस्य सामानाधिकरण्याभावादश्वेत्यादिवर्णस्याश्वप्रयोगादेनैकवद्भावस्याऽप्रयोगादेकवद्भावो न भविष्यतीति किमर्थमस्याऽऽरम्भ इति ?, उच्यते–अस्याऽनारम्भे निर्विकैकवद्भावप्रयोगे दध्यादिपदप्रयोगाद्योगाभावप्रयोगे निर्विकैकवद्भावस्याऽनिवर्तनादस्याऽऽरम्भ इत्यदोषः।

'प्राऽन्तिके'। ३। १। १४७ ॥ उपवेश गोमहिषमिति–यद्यप्युपवर्ण्य गोमहिषमित्येकवद्भावे समाहारस्य द्वन्द्वाभिधेयस्यैकत्वात् साधात् तत्संस्थानं नाऽस्ति तथापि तदवयवद्वारेण भवतीति।

'राजदन्तादिषु'। ३। १। १४९ ॥ दन्तानां राजति–येन राजा च दन्ता भवति द्वन्द्वे राजदन्ता दन्तराजान इत्यप्यवस्थैव। मुदलुक्षितमिति–ऋणुपयुक्षेति सूत्रे फस्याऽपि कित्वनिवृत्त्य कश्चिदिच्छन्ति तन्मतेनेदम्, यद्वा भ्यन्तस्य सुषां करोति णिच्, ततः क्तः। उषीरबीजग्निज्ञास्यमिति–उषीरं बीजमस्मिन् उषीरबीजमस्यिमिति वा, उषीरबीजो नाम पर्वतः। शिक्षायां तिष्ठतीति शिज्ञास्थः पर्वतस्ततो द्वन्द्वः।

आरद्वायनिपानीति–आरटतीति 'मेढाघा इति, 'ओविरानि " इति बहुवचनाद्वा निपातस्तस्याऽपत्य, ऋौयादोर्मैया " इत्यायनिम्ः चमन्तीति क्विप् दीर्घः, चामां धनमस्य स चान्वनः, यद्वा चम्यते मेकितकि० " इति ये चर्मधनमस्य पृषोदरादिः यद्वा चमतीति ' बिदेनागन " चा धनस्तस्याऽपत्यमत इम्, ततो द्वन्द्वः। वैकारिमतगात्रवाजमिति–कर एव कारः निविधः कारो यस्य विकार यतीति वा विकारस्तस्याऽपत्यमिम्। वैकारमतः। गमनमदन च। गजतीत्यच् गज स्तस्याऽप्य गाजः, वजयजमृ० मार्ग वाजतीत्यम् गात्रवाजः पुरुषनिम्नपक्षतो द्वन्द्वः। ननु दारगन्दस्य महर्षयवन द्विवचनानुपपत्तिरित्याह–दारगन्द इत्यादि।

१ उणा ५१४ । २ उणा ५ ५ । ३ ६-१-११ । ४ ५-१ ३३ । ५ उणा २७१ ।

यथा धर्मप्रजासम्पन्ने दारे नाऽन्यं दारं कुर्वीत । एवं विष्वक्सेनार्जुनाविति–यथा स्वराद्यन्तत्वादर्थशब्दस्य पूर्वनिपातः प्राप्त एवमिहाऽपि विष्वक्सेनस्य वासुदेवरूप तया अर्जुनादभ्यर्हितत्वेऽपि तदविवक्षायां पूर्वनिपाताभावः पाठः, वासुदेवादन्यो वा विष्वक्सेनः । चित्रास्वातीति–अत्र भागविके इत्यनुप्रयोगेण नाऽयं नक्षत्रद्वन्द्व इति दर्शयति । तत्र हि "भर्तुतुल्यस्वरम्" इत्येव सिद्धम् । अभ्यतीति–न चाऽल्पस्वरत्वादेव अभ्रमोः पूर्वनिपातो भविष्यतीति वाच्यम् । वस्तुतर्हितस्मात्पूर्वनिपातः स्यादित्य दोषः । अधरबिम्बमिति–अधरो बिम्बमिव "उपमेयं व्याघ्रादिभिः०" समासः ।

'विशेषणसर्वादिसङ्ख्य बहुव्रीहौ' । ३ । १ । १५० ॥ कण्ठकाल इति–कण्ठे स्थिता कण्ठे स्थिता अलुग् सः । ततः कण्ठस्थिताः काला यस्य, कण्ठेकाला अस्येति वैयधिकरण्ये वा समासः । आधेय मस्याधारो विशेषणस्य भजत इति वैयाकरणाः । सर्वशुक्ल इति–अत्र शुक्लशब्देन सर्वार्थस्य विशेष्यभावत्वाद्विशेषणत्वाभावे अपि सर्वादित्वात् सर्वशब्दस्य पूर्वनिपातः । विश्वदेव इति–विश्वे देवा यस्येति विश्वदेवः । द्रव्यशब्देन विशेष्येणैव भवितव्यमिति नियमाभावात् सत्यपि द्रव्यशब्दत्वे देवा इति विशेष्यं विशेषणमिति सर्वादित्वाद्विश्वशब्दस्य पूर्वप्रयोगः । द्विकृष्ण इति–अत्र कृष्णार्थस्य विशेष्यत्वेन विवक्षितत्वात् संख्यात्वादेव द्व्यादिशब्दस्य पूर्वप्रयोगः । शब्दस्पर्शे परत्वादिति–अस्याऽयं तात्पर्यार्थः अल्पस्वरत्वात् संख्याशब्दस्य पूर्वप्रयोगे प्राप्ते उभयाविक्रमेण 'विशेषणसर्वादिसङ्ख्य" इति निर्देशः, शब्दपरस्पर्शार्थः । उभयोरिति–संख्याशब्दस्य सर्वादित्वऽसर्वादित्वे च पूर्वनिपात एव सूत्रे परत्रोपादानात् । अन्य इति–सर्वादिगणपाठापेक्षयाऽपि यातीत्युपायमन्यया संख्यापेक्षयाऽपि याति । यद्वा अन्य इति संख्यात्वर्थेन सिद्धावपि गणपाठसर्वोऽप्यस्तीति ज्ञापनार्थमुदाहरणदिक्त्वेनोदाहृतम् । गणपाठस्यार्थस्य उदाहरणं संख्याविमुक्त दक्षिणपूर्वा दिगि स्यादि द्रष्टव्यम् । सर्वादिसंख्ययोरिति–ननु सर्वादिसंख्याभ्यामारब्धेऽपि बहुव्रीहावन्यपदार्थस्यैव प्राधान्यात् तस्य च विशेष्यत्वादतयोर्विशेषणत्वाद्विशेषणग्रहणेनैव भविष्यति किमर्थं पृथगुपादानमित्याशङ्का ।

'आहिताग्न्यादिषु' । ३ । १ । १५३ ॥ नन्वग्निशब्दस्य जातिवाचित्वात् "जातिकाल०" इत्यनेनैव सिध्यति किमत्र पाठः ?, सत्यम्, व्यक्तिविवक्षायामपि यथा स्यादित्येवमर्थम् ।

'प्रहरणात्' ३ । १ । १५४ ॥ नन्वस्यादीनां जातिशब्दत्वात् । "जाति काल०" इत्यनेनैव क्तान्तस्य पूर्वनिपात सिद्धः किमनेन ?, सत्यम्; व्यक्तिविव

१ ३-१-१६१ । २ ३-१-१ ३ । ३ ३-१-१५ । ४ ३-१-१५२ ।

एवं मृदङ्गशङ्खपणवा इति-अथवा शङ्खदुन्दुभिवीणाः, मृदङ्गशङ्खपणवा इति शङ्खादीनां तूर्याङ्गत्वादेवैकवद्भावः कुतो न भवतीति ?, उच्यते-अत्र शङ्खादिशब्देन शङ्खादिसमुदायस्याऽभिधानात्तस्य चाऽतूर्याङ्गत्वादप्राणित्वाच्च नैकवद्भावः । उत्पलस्त्वाह-तूर्यां गता शङ्खादिवादकानां न तु शङ्खादीनामिति तूर्याङ्गत्वादेवैकवद्भावो नाऽऽशङ्कनीयः । अत एव "प्राणितूर्याङ्गाणाम्" इत्यत्र पूर्वैर्मार्दङ्गिकपाणविक वीणावादकपरिवादकमित्येवोदाह्रियते, न तु भेरीमृदङ्गमित्यादि । यदा तु प्राणिरूपं तूर्याङ्गं प्राणितूर्याङ्गमिति विग्रहः ।

'मासवर्णभ्रात्रनुपूर्वम्' । ३ । १ । १६१ । ब्राह्मणक्षत्रियाविति-अत्राऽनियमः प्राप्तः क्षत्रियवैश्यावित्यत्र स्वल्पस्वरत्वाद्वैश्यशब्दस्य पूर्वनिपातः प्राप्तः वैश्यशूद्रावित्यत्राऽप्यनियमः ब्राह्मणक्षत्रियविट्शूद्रा-इत्यत्र त्वल्पस्वरत्वाद्विशः पूर्वनिपाते प्राप्तेऽनेन ब्राह्मणादीनामनुपूर्वं पूर्वनिपातः । आनुपूर्व्यं च जन्मकृत यदाह-" मुखतो ब्राह्मणा जाता, बाहुभ्यां क्षत्रियाः स्मृताः । ऊरुभ्यां तु विशः प्रोक्ताः, पद्भ्यां शूद्रो अजायत ॥१॥" न चाऽत्राऽभ्यर्हितत्वात् पूर्वनिपातः सिध्यतीति वाच्यम्, निन्दितस्याऽपि ब्राह्मणादेः सम्भवादिति ।

'भर्तुतुल्यस्वरम्' । ३ । १ । १६२ ॥ अत्राऽपि नक्षत्राणामृतूनां चाऽऽनुपूर्व्यं लोकप्रसिद्धमेव वेदितव्यम् ।

'संख्या समासे' । ३ । १ । १६३ ॥ द्वित्रा इति-ननु द्वित्रा इत्यादौ "सुज्वार्थे०" इत्यनेन सुजर्थे समासस्ततः "प्रथमोक्तं प्राक्" इत्यनेनाऽपि सिध्यति किमेतदुपादानम् ?, सत्यम्; यदा दशन्शब्दाः सुजर्थः समस्यते तदाऽप्यनेनाऽऽनुपूर्व्या संख्यायाः पूर्वनिपातो भवतीति फलम् ।

इत्याचार्यश्रीहेमचन्द्रानुस्मृते श्रीसिद्धहेमचन्द्रशब्दानुशासने
ऽवचूर्णिकायां तृतीयस्याऽध्यायस्य प्रथमः पादः सम्पूर्णः ॥

---

संवत् १२६४ वर्षे माघवदि ३ रवौ श्रीमदानन्दसूरिशिष्येणाऽमरचन्द्रेणाऽऽत्मयोग्याऽवचूर्णिकायाः प्रथमपुस्तिका लिखिता । शुभं भवतु लेखकपाठकयोः ।

---

इति श्रेष्ठि देवचन्द्र-लालभाई-जैन-पुस्तकोद्धार-ग्रन्थाङ्के-ग्रन्थाङ्कः ९२ ।



---

१ ३-१-१३७ । २ ३-१-१९ । ३ ३-१-१४८ ।

श्रीमती आगमोदयसमिति तथा शेठ देवचंद लालभाई जैन पुस्तकोद्धार फंडना हाथमां मळतां ग्रंथो



समितिना

| अंक. | नाम | रुपिया. |
|---|---|---|
| ४५ | भक्तामरस्तोत्रपादपूर्तिरूप काव्य प्रथम विभाग भाषांतर टीका ... | १-०-० |
| ४७ | पयसंग्रह-टीकासह .. | २-८-० |
| ४८ | विशेषावश्यक भाषांतर भाग २ जो | १-०-० |
| ५० | जीवसमास प्रकरणम् सटीक .. | १-८-० |
| ५१ | स्तुतिचतुर्विंशतिका सचित्रा श्री-शोभनमुनिकृता संस्कृता .. | ८-०-० |
| ५२ | स्तुतिचतुर्विंशतिका सचित्रा कवि धनपालकृता च चैत्यस्तुति | १-०-० |
| ५३ | चतुर्विंशतिका-सचित्रा श्री बप्प-भट्टिसूरिकृता भाषांतरयुक्त ... | १-०-० |
| ५४ | भक्तामरस्तोत्रपादपूर्तिरूप काव्य द्वितीय विभाग टीका भाषांतर... | १-८-० |
| ५५ | प्रवादि (सत्तसूत्र) गाथादप्रतादि युतो विषयानुक्रमः ... | १-०-० |
| ५६ | आवश्यकसूत्रम्-मलयगिरिकृत टीकायुक्त पूर्वभागः ... ... | ४-०-० |
| ५७ | लोकप्रकाश-प्रथमविभागः द्रव्य लोकः सर्ग १ थी ११ भाषांतर ... | १-८-० |
| ५९ | चतुर्विंशतिका-जिनानंद स्तुति सचित्रा-मेरुविजयकृता भाषां... | १-०-० |
| ६० | आवश्यकसूत्रम् मलयगिरिकृत टीकायुक्तं द्वितीयविभागः ... (बीजो संपूर्ण फंडमांथी छपाया छे) | २-८-० |
| ६१ | लोकप्रकाश-द्वितीयविभाग क्षेत्र लोकः सर्ग १२ थी २० भाषां ... | १-८-० |

फंडना

| अंक. | नाम. | रुपिया. |
|---|---|---|
| ८२ | कल्पसूत्रम्-बारसासूत्र सचित्रम् | १२-०-० |
| ८५ | आवश्यकसूत्रम्-मलयगिरिकृत टीकायुक्तं तृतीय भाग (बे भाग समितिमांथी छपाया छे.) | २-८-० |
| ८६ | लोकप्रकाश-चतुर्थ-विभागः सप्त त्रिंशत्सर्गात्मक संपूर्ण ग्रन्थ | १-०-० |
| ८७ | भरतेश्वर-बाहुबलिवृत्ति द्वितीय विभाग (संपूर्णम्) ... | २-०-० |

नवीन ग्रन्थो

| अंक. | नाम. | रुपिया. |
|---|---|---|
| ८८ | प्रशमरति प्रकरणम्-बृहद्गच्छीय श्रीहरिभद्रसूरिकृत विवरणसमेतं वाचक उमास्वाति विरचितं ... | १ ४-० |
| ८९ | अध्यात्मकल्पद्रुम उपाध्यायधनविजयगणिकृत टीकायुक्त ... | प्रसमां |
| ९० | गौतमीय काव्यम्-रूपचंद्रगणिकृत महाकाव्य ... .. | १-८-० |
| ९१ | सटीक वैराग्यशतकादि ग्रंथ पंचकम्-पृथक पृथक मुनिराजोकृत-व्याख्यान योग्य .. ... | १-०-० |
| ९२ | सिद्धहेमचंद्र-शब्दानुशासन-लघु वृत्त्यवचूरि नवरत्न अवचूरिकार-अमरचंद्र ... ... | मुद्रणीन ग्रन्थ |

प्राप्तिस्थानम्—

शेठ देवचंद लालभाई जैन पुस्तकोद्धार फंड
बडेखान चकला, गोपीपुरा—सुरत

इति श्रेष्ठि देवचंद्र-लालभाई-जैन-पुस्तकोद्धार-ग्रन्थाङ्क-ग्रन्थाङ्कः ९२

